क्रमिष्टमिति ताभ्यां वै नौ सर्वमन्नं प्रयच्छेति तौ वै मा बाहू भूत्वा प्प्रपद्येथामिति तथेति ताभ्यां वै सर्वमन्नं प्रायच्छत्तावेनं बाहू भूत्वा प्प्रापद्येतां तस्माद्बाहुभ्यामेवान्नं क्रियते बाहुभ्यामद्यते बाहुभ्याᳫं हि स सर्वमन्नं प्रायच्छत् ॥ ४० ॥ स कार्ष्मर्य्यमयीं दक्षिणत ऽउपदधाति । 'अग्नेष्ट्वा[1] तेजसा सादयामी'ति यदेवास्य तदग्निस्तेज ऽआदाय दक्षिणाक्रर्षत्तदस्मिन्नेतत्प्रतिदधा'त्यग्निर्म्मूर्द्धा दिवः[2] ककुदि'त्येष ऽउ सोऽग्निर्ग्गायत्र्या गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतदुपदधाति घृतेन पूर्ण्णा भवत्याग्नेयं वै घृतᳫं स्वेनैवैनमेतद्भागेन स्वेन रसेन प्प्रीणाति ॥ ४१ ॥ अथौदुम्बरीमुत्तरत * ऽउपदधाति । 'इन्द्रस्य[3] त्वौजसा सादयामी'ति यदेवास्य तदिन्द्र ऽओज ऽआदायोदङ्ङुदक्रामत्तदस्मिन्नेतत्प्रतिदधाति 'भुवो[4] यज्ञस्य रजसश्च नेते'त्येष ऽउ स ऽइन्द्रः सा यदाग्नेऽय्यग्निकर्म्म ह्यथ यत्त्रिष्टुप्त्रैष्टुभो हीन्द्र ऽऐन्द्राग्नोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतदुपदधातीन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्योऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतदुपदधाति दध्ना पूर्ण्णा भवत्यैन्द्रं वै दधि स्वेनैवैनमेतद्भागेन स्वेन रसेन प्प्रीणाति ॥ ४२ ॥ तावस्यैताविन्द्राग्नी ऽएव बाहू । तावेनं तेजसा च वीर्य्येण च सह प्प्रपद्येते स सम्प्रत्युरः

---

(१) शु० य० सं० अ० १३ क० १३ । (२) शु० य० सं० अ० १३ क० १४ ।
* का० श्रौ० सू० १७. ४. १३ ।
(३) शु० य० सं० अ० १३ क० १४ । (४) शु० य० सं० अ० १३ क० १५ ।

पुरुषमाकाङ्क्ष्य यत्राभ्याप्नोति तदालिख्यैनेऽउपदधात्येष हैतयोर्ल्लोकः ॥४३॥ [ अर्धप्रपाठकः ४३॥ ] ते हैके तिरश्च्या ऽउपदधति । तिर्य्यञ्चौ वा ऽइमौ बाहू ऽइति न तथा कुर्य्या-त्प्राच्च्यावेवोपदद्ध्यात्प्राङ् ह्येषोऽग्निश्चीयतेऽथो ऽएवं वै बाहू वीर्य्यवत्तरौ ते नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हीमौ बाहू ॥ ४४ ॥ तदाहुः । नैतस्य पुरुषस्य बाहू कुर्य्यादेतौ वा ऽअस्य बाहू ये-ऽएते स्रुचौ नेदतिरेचयानीति स वै कुर्य्यादेवैतौ वा-ऽअस्य बाहू ऽअन्वेते स्रुचावथो ऽएतौ पक्षावथो यान्न्ये-तस्मिन्नग्नौ रूपाण्ण्युपधास्यन्न्भवति यान्त्स्तोमान्न्यानि पृष्ठानि यानि च्छन्दाᳩस्येतयोरेव सा संस्कृतिरेतयोर्व्वृद्धि-स्तस्मादु कुर्य्यादेवैतस्य पुरुषस्य बाहू ॥ ४५ ॥ (A)

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ स्वयमातृण्णेष्टकोपधानादि ]

स्वयमातृण्णामुपदधाति । इयं वै स्वयमातृण्णेमा-मेवैतदुपदधाति तामनन्तर्हितां पुरुषादुपदधात्यन्नं वै स्वय-मातृण्णेयं वै स्वयमातृण्णेयमु वा ऽअन्नमस्याᳩ हि सर्व्व-मन्नं पच्च्यतेऽनन्तर्हितमेवास्मादेतदन्नं दधात्युत्तरामुत्तर-मेवास्मादेतदन्नं दधाति ॥ १ ॥ यद्वेव स्वयमातृण्णामुप-

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ९. ३. ३,४; कठ० सं० १६. १५,१६; कपि० २५. ६; मै० सं० ११. ७, १५; तै० सं० ४. २. ८ ।

दधाति । प्राणो वै स्वयमातृण्णा प्राणो ह्येवैतत्स्वयमात्मन-ऽआतृन्ते प्राणमेवैतदुपदधाति तामनन्तर्हितां पुरुषादुपदधाति प्राणो वै स्वयमातृण्णेयं वै स्वयमातृण्णेयमु वै प्राणो यद्धि किञ्च प्राणीयं तत्सर्वं बिभर्त्त्यनन्तर्हितमेवास्मादेतत्प्राणं दधात्युत्तरामुत्तरमेवास्मादेतत्प्राणं दधाति ॥ २ ॥ यद्वेव स्वयमातृण्णामुपदधाति । प्रजापतिं विस्रस्तं देवता ऽआदाय व्युदक्रामँस्तासु व्युत्क्रामन्तीषु प्रतिष्ठामभिपद्योपाविशत् ॥ ३ ॥ स यः स प्रजापतिर्व्यस्रंसत । अयमेव स योऽयमग्निश्चीयतेऽथ या सा प्रतिष्ठैषा सा प्रथमा स्वयमातृण्णा तद्यदेतामत्रोपदधाति यदेवास्यैषात्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतामत्रोपदधाति ॥ ४ ॥ तां वै प्रजापतिनोपदधाति । प्रजापतिर्ह्येवैतत्स्वयमात्मनः प्रत्यधत्त '[1]ध्रुवासी'ति स्थिरासीत्येतदथो प्रतिष्ठितासीति '[2]धरुणे'ति प्रतिष्ठा वै धरुण'[3]मास्तृता विश्वकर्म्मणे'ति प्रजापतिर्वै विश्वकर्म्मा तेनास्तृतासीत्येत'[4]न्मा त्वा समुद्र ऽउद्वधीन्मा सुपर्ण्ण' ऽइति रुक्मो वै समुद्रः पुरुषः सुपर्ण्णस्तौ त्वा मोद्वधिष्टामित्येत'[5]दव्यथमाना पृथिवीं दृंहे'ति यथैव यजुस्तथा बन्धुः ॥ ५ ॥ '[6]प्रजापतिष्ट्वा सादयत्वि'ति । प्रजापतिर्ह्येतां प्रथमां चितिमपश्यद'[7]पां पृष्ठे समुद्रस्येमन्नि'त्यपां ह्ययं पृष्ठः

(१) शु० य० सं० अ० १३ क० १६। (२) शु० य० सं० अ० १३ क० १६। (३) शु० य० सं० अ० १३ क० १६। (४) शु० य० सं० अ० १३ क० १६। (५) शु० य० सं० अ० १३ क० १६। (६) शु० य० सं० अ० १३ क० १७। (७) शु० य० सं० अ० १३ क० १७।

समुद्रस्य * हीयमेम 'व्यचस्वतीं प्रथस्वतीमि'ति व्यचस्वती च हीयं प्रथस्वती च 'प्रथस्व पृथिव्यसी'ति प्प्रथस्व पृथिवी चासीत्त्येतत् ॥ ६ ॥ 'भूरसी'ति । भूर्हीयं 'भूमिरसी'ति भूमिर्हीय'मदितिरसी'तीयं वा ऽअदितिरियꣳ हीदꣳ सर्वं ददते 'विश्वधाया' ऽइत्त्यस्याꣳ हीदꣳ सर्वꣳ हितं 'विश्वस्य भुवनस्य धर्त्त्री'ति सर्वस्य भुवनस्य धर्त्त्रीत्त्येत'त्पृथिवीं ऽयच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीरि'त्त्यात्मानं ऽयच्छात्मानं दृꣳहात्मानं मा हिꣳसीरित्त्येतत् ॥ ७ ॥ 'विश्वस्म्मै प्प्राणायापानाय । व्यानायोदानाये'ति प्प्राणो वै स्वयमातृण्णा सर्वस्म्मा ऽउ वा ऽएतस्म्मै प्प्राणः 'प्प्रतिष्ठायै चरित्त्राये'तीमे वै लोकाः स्वयमातृण्णा ऽइम ऽउ लोकाः प्प्रतिष्ठा चरित्र'मग्निष्ट्वाभिपात्वि'त्त्यग्निष्ट्वाभिगोपायत्वित्त्येत'न्मह्या स्वस्त्ये'ति महत्या स्वस्त्येत्त्येत'च्छर्दिषा शन्तमेने'ति यच्छर्दिः शन्तमं तेनेत्त्येतत्सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुरथ † साम गायति तस्योपरि बन्धुः ॥ ८ ॥ तदाहुः । कथमेष पुरुषः स्वयमातृण्णयानभिनिहितो भव-

* 'हीयमेव' इति पाठो 'ज' पुस्तके ।

(१) शु० य० सं० अ० १३ क० १७ । (२) शु० य० सं० अ० १३ क० १७ । (३) शु० य० सं० अ० १३ क० १८ । (४) शु० य० सं० अ० १३ क० १८ । (५) शु० य० सं० अ० १३ क० १८ । (६) शु० य० सं० अ० १३ क० १८ । (७) शु० य० सं० अ० १३ क० १८ । (८) शु० य० सं० अ० १३ क० १८ । (९) शु० य० सं० अ० १३ क० १९ । (१०) शु० य० सं० अ० १३ क० १९ । (११) शु० य० सं० अ० १३ क० १९ । (१२) शु० य० सं० अ० १३ क० १९ । (१३) शु० य० सं० अ० १३ क० १९ ।

† का० श्रौ० सू० १७, ४, १६ ।

तीत्यन्नं वै स्वयमातृण्णा प्प्राणः स्वयमातृण्णानभिनिहितो वै पुरुषोऽन्नेन च प्राणेन च ॥ ९ ॥ अथ * दूर्वेष्टकामुपदधाति । पशवो वै दूर्वेष्टका पशूनेवैतदुपदधाति तद्यैरदोऽग्निरनन्तर्हितैः पशुभिरुपैत्त ऽएते तानेवैतदुपदधाति तामनन्तर्हिताᳬ स्वयमातृण्णाया ऽउपदधातीयं वै स्वयमातृण्णानन्तर्हिताँस्तदस्यै पशून्दधात्युत्तरामुत्तराँस्तदस्यै पशून्दधाति ॥ १० ॥ यद्वेव दूर्वेष्टकामुपदधाति । प्रजापतेर्विस्रस्तस्य यानि लोमान्यशीयन्त ता ऽइमा ऽओषधयोऽभवन्नथास्म्मात्प्राणो मध्यत ऽउदक्रामत्तस्म्मिन्नुत्क्रान्तेऽपद्यत ॥ ११ ॥ सोऽब्रवीत् । अयं वाव माऽधूर्वीदिति यदब्रवीदधूर्वीन्मेति तस्म्माद्धूर्वा धूर्वा ह वै तां दूर्वेत्याचक्षते परोक्षं परोक्षकामा हि देवास्तदेतत्क्षत्रं प्राणो ह्येष रसो लोमान्न्यन्न्या ऽओषधय ऽएतामुपदधत्सर्वा ऽओषधीरुपदधाति ॥ १२ ॥ तं यत्र देवाः समस्कुर्वन् । तदस्मिन्नेतं प्राणं रसं मध्यतोऽदधुस्तथैवास्मिन्नयमेतद्दधाति तामनन्तर्हिताᳬ स्वयमातृण्णाया ऽउपदधातीयं वै स्वयमातृण्णानन्तर्हितास्तदस्या ऽओषधीर्दधात्युत्तरामुत्तरास्तदस्या ऽओषधीर्दधाति सा स्यात्समूला साग्रा कृत्स्नतायै यथा स्वयमातृण्णायामुपहिता भूमिं प्राप्नुयादेवमुपदध्यादस्याᳬ ह्येवैता जायन्त ऽइमामनु प्ररोहन्ति ॥ १३ ॥ '[1]काण्डात्काण्डात्प्ररोहन्ती । परुषः परुषस्प्परी'ति काण्डात्काण्डाद्ध्येषा पर्वणः—पर्वणः प्प्रो-

* का० श्रौ० सू० १७, ४, १८ ।

( १ ) शु० य० सं० अ० १३ क० २० ।

ह'स्येवा नो दूर्वे प्रतनु सहस्रेण शतेन चे'ति यथैव यजुस्तथा बन्धुः ॥ १४ ॥ 'या शतेन प्रतनोषि । सहस्रेण विरोहसी'ति शतेन ह्येषा प्रतनोति सहस्रेण विरोहति 'तस्यास्ते देवीष्टके विधेम हविषा वयमि'ति यथैव यजुस्तथा बन्धुर्द्वाभ्यामुपदधाति तस्योक्तो बन्धुः सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ १५ ॥ अथ * द्वियजुषमुपदधाति । इन्द्राग्नी ऽअकामयेताᳪ स्वर्ग्गं लोकमियावेति तावेतामिष्टकामपश्यतां द्वियजुषमिमामेव तामुपादधातां तामुपधायास्यै प्रतिष्ठायै स्वर्ग्गं लोकमैतां तथैवैतद्यजमानो यद् द्वियजुषमुपदधाति येन रूपेण यत्कर्म्म कृत्वेन्द्राग्नी स्वर्ग्गं लोकमैतां तेन रूपेण तत्कर्म्म कृत्वा स्वर्ग्गं लोकमयानीति सा यद् द्वियजुर्न्नाम द्वे ह्येते देवते ऽअपश्यतां यद्वेव द्वियजुषमुपदधाति यजमानो वै द्वियजुः ॥ १६ ॥ तदाहुः । यदसावेव यजमानो योऽसौ हिरण्मयः पुरुषोऽथ कतमदस्येदꣳ रूपमिति दैवो वा ऽअस्य स ऽआत्मा मानुषोऽयं तद्यत्स हिरण्मयो भवत्यमृतं वा ऽअस्य तद्रूपं देवरूपममृतꣳ हिरण्यमथ यदियं मृदः कृता भवति मानुषꣳ ह्यस्येदꣳ रूपꣳ ॥ १७ ॥ स यदमूमेवोपदध्यात् । नेमामपशिꣳष्यात्क्षिप्रे हास्माल्लोकाद्यजमानः प्रेयादथ यदिमामपशिनष्टि यदेवास्येदं मानुषꣳ रूपं तदस्यैतदपशिनष्टि तथो हानेनात्मना सर्वमायुरेति ॥ १८ ॥

(१) शु० य० सं० अ० १३ क० २०। (२) शु० य० सं० अ० १३ क० २१। (३) शु० य० सं० अ० १३ क० २१।

* का० श्रौ० सू० १७. ४. २०।

स यन्नानूपदध्यात् । न हैतं दैवमात्मानमनुप्रजानीयादथ यदनूपदधाति तथो हैतं दैवमात्मानमनुप्रजानाति तामनन्तर्हितां दूर्वेष्टकाया ऽउपदधाति पशवो वै दूर्वेष्टका यजमानं तत्पशुषु प्प्रतिष्ठापयति ॥ १९ ॥ तदाहुः । कथमस्यैतावात्मानौ प्प्राणेन सन्ततावव्व्यवच्छिन्नौ भवत ऽइति प्राणो वै स्वयमातृण्णा प्प्राणो दूर्वेष्टका यजमानो द्वियजुः स यदनन्तर्हिताᳬ स्वयमातृण्णायै दूर्वेष्टकामुपदधाति प्प्राणेनैव तत्प्राणᳬ सन्तनोति सन्दधात्यथ यदनन्तर्हितां दूर्वेष्टकायै द्वियजुषमुपदधाति प्प्राणो वै दूर्वेष्टका यजमानो द्वियजुरेवमु हास्यैतावात्मानौ प्प्राणेन सन्ततावव्व्यवच्छिन्नौ भवतः ॥ २० ॥ '[1]यास्ते ऽअग्ने सूर्य्ये रुचः । या वो देवाः सूर्य्ये रुच' ऽइति रुचᳬ रुचमित्त्यमृतत्त्वं वै रुगमृतत्त्वमेवास्मिन्नेतद्दधाति द्वाभ्यामुपदधाति तस्योक्तो बन्धुरथो द्वयᳬ ह्येवैतद्रूपं मृच्चापश्च सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ २१ ॥ अथ * रेतःसिचा ऽउपदधाति । इमौ वै लोकौ रेतःसिचाविमौ ह्येव लोकौ रेतः सिञ्चत ऽइतो वा ऽअयमूर्द्ध्वᳬ रेतः सिञ्चति धूमᳬ सामुत्र व्वृष्टिर्ब्भवति तामसावमुतो व्वृष्टिं तदिमा ऽअन्तरेण प्प्रजाः प्प्रजायन्ते तस्म्मादिमौ लोकौ रेतःसिचौ ॥ २२ ॥ '[2]व्विराड्ज्योतिरधारयदि'ति । अयं वै लोको व्विराट् स ऽइममग्निं ज्योतिर्द्धारयति '[3]स्वराड्-

( १ ) शु० य० सं० अ० १३ क० २२,२३ ।

* का० श्रौ० सू० १७. ४. २२ ।

( २ ) शु० य० सं० अ० १३ क० २४ । ( ३ ) शु० य० सं० अ० १३ क० २४ ।

ज्योतिरधारयदि'त्यसौ वै लोकः स्वराट् सोऽमुमादित्यं ज्योतिर्द्धारयति विराट् च हेमौ लोकौ स्वराट् च नानोपदधाति नाना हीमौ लोकौ सकृत्सादयति समानं तत्करोति तस्माद्‌ हानयोर्ल्लोकयोरन्ताः समायन्ति ॥ २३ ॥ यद्वेव रेतःसिचा ऽउपदधाति । आण्डौ वै रेतःसिचौ यस्य ह्याण्डौ भवतः स ऽएव रेतः सिञ्चति विराड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयदिति विराट् च हेमावाण्डौ स्वराट् च तावेतज्ज्योतिर्द्धारयतो रेत ऽएव * प्रजापतिमेव नानोपदधाति नाना हीमावाण्डौ सकृत्सादयति समानं तत्करोति तस्मात्समानसम्बन्धनौ ते ऽअनन्तर्हिते द्वियजुष ऽउपदधाति यजमानो वै द्वियजुरनन्तर्हितौ तद्यजमानादाण्डौ दधाति ॥ २४ ॥ अथ † विश्वज्ज्योतिषमुपदधाति । अग्निर्वै प्रथमा विश्वज्ज्योतिरग्निर्ह्येवास्मिँल्लोके विश्वं ज्योतिरग्निमेवैतदुपदधाति तामनन्तर्हिताᳫं रेतःसिग्भ्यामुपदधातीमौ वै लोकौ रेतःसिचावनन्तर्हितं तदाभ्यां लोकाभ्यामग्निं दधात्यन्तरेवोपदधात्यन्तरेव हीमौ लोकावग्निः ॥ २५ ॥ यद्वेव विश्वज्ज्योतिषमुपदधाति । प्रजा वै विश्वज्ज्योतिः प्रजा ह्येव विश्वञ्ज्योतिः प्रजननमेवैतदुपदधाति तामनन्तर्हिताᳫं रेतःसिग्भ्यामुपदधात्याण्डौ वै रेतःसिचावनन्तर्हितां तदाण्डाभ्यां प्रजातिं दधात्यन्तरेवोपदधात्यन्तरेव ह्याण्डौ प्रजाः प्रजायन्ते ॥ २६ ॥

---

* 'प्रजातिमेव' इति 'क' पुस्तके ।

† का॰ श्रौ॰ सू॰ १७, ४, २३ ।

'प्रजापतिष्ट्वा सादयत्त्विति । प्रजापतिर्ह्येतां प्रथमां चितिमपश्यत्'पृष्ठे पृथिव्या ज्योतिष्मतीमि'ति पृष्ठे ह्ययं पृथिव्यै ज्योतिष्मानग्निः ॥ २७ ॥ 'विश्वस्मै प्राणायापानाय । व्यानाये'ति प्राणो वै विश्वज्ज्योतिः सर्वस्मा उ वा एतस्मै प्राणो विश्वज्ज्योतिर्यच्छेति सर्वं ज्योतिर्यच्छेत्येतदग्निष्टेऽधिपतिरित्यग्निमेवास्या अधिपतिं करोति सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ २८ ॥ अथर्त्तव्ये उपदधाति *। ऋतव एते यदृतव्ये ऋतूनेवैतदुपदधाति 'मधुश्च माधवश्च वासन्तिकावृतू' इति नामनी एनयोरेते नामभ्यामेवैने एतदुपदधाति द्वे इष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोति ॥ २९ ॥ तद्यदेते अत्रोपदधाति । संवत्सर एषोऽग्निरिम उ लोकाः संवत्सरस्तस्यायमेव लोकः प्रथमा चितिरयमस्य लोको वसन्त ऋतुस्तद्यदेते अत्रोपदधाति यदेवास्यैते आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते अत्रोपदधाति ॥ ३० ॥ यद्वेवैते अत्रोपदधाति । प्रजापतिरेषोऽग्निः संवत्सर उ प्रजापतिस्तस्य प्रतिष्ठैव प्रथमा चितिः प्रतिष्ठो अस्य वसन्त ऋतुस्तद्यदेते अत्रोपदधाति यदेवास्यैते आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते अत्रोपदधाति ते अन-

(१) शु० य० सं० अ० १३ क० २४ । (२) शु० य० सं० अ० १३ क० २४ । (३) शु० य० सं० अ० १३ क० २४ ।

* का० श्रौ० सू० १७. ४. २४ ।

(४) शु० य० सं० अ० १३ क० २५ ।

न्तर्हिते व्विश्श्वज्ज्योतिष ऽउपदधाति प्प्रजा वै व्विश्श्वज्ज्योतिर्-नन्तर्हितास्तत्प्रजा ऽऋतुब्भ्यो दधाति तस्म्मात्प्रजा ऽऋतूनेवानुप्रजायन्त ऽऋतुभिर्ह्येव गब्भें सन्तꣳ सम्पश्श्य-न्त्यृतुभिर्ज्जातम् ॥ ३१ ॥ अथाषाढामुपदधाति * । इयं व्वा ऽअषाढेमामेवैतदुपदधाति तां पूर्व्वार्द्धे ऽउपदधाति प्प्रथमा हीयमसृज्ज्यत ॥ ३२ ॥ सा यदषाढा नाम । देवा-श्च्चासुराश्च्चोभये प्प्राजापत्त्या ऽअस्प्पर्द्धन्त ते देवा ऽएता-मिष्टकामपश्श्यन्नषाढामिमामेव तामुपादधत तामुपधाया-सुरान्त्सपत्नान्भ्रातृव्व्यानस्म्मात्सर्व्वस्म्मादसहन्त यदसहन्त तस्म्मादषाढा तथैवैतद्यजमान ऽएतामुपधाय द्विषन्तं भ्रातृव्व्यमस्म्मात्सर्व्वस्म्मात्सहते ॥ ३३ ॥ यद्वेवाषाढामुप-दधाति । व्वाग्वा ऽअषाढा व्वाचैव तद्देवा ऽअसुरान्त्सपत्ना-न्भ्रातृव्व्यानस्म्मात्सर्व्वस्म्मादसहन्त तथैवैतद्यजमानो व्वाचैव द्विषन्तं भ्रातृव्व्यमस्म्मात्सर्व्वस्म्मात्सहते व्वाचमेव तद्देवा ऽउपादधत तथैवैतद्यजमानो व्वाचमेवोपधत्ते ॥ ३४ ॥ सेयं व्वामभृत् । प्राणा वै व्वामं यद्धि किञ्च प्राणीयं तत्सर्व्वं बिभर्त्ति तेनेयं व्वामभृद्वाग्घ त्त्वेव व्वामभृत्प्राणा वै व्वामं व्वाचि वै प्राणेब्भ्योऽन्नं धीयते तस्म्माद्वाग्वामभृत् ॥ ३५ ॥ त ऽएते सर्व्वे प्प्राणा यदषाढा । तां पूर्व्वार्द्धे ऽउपदधाति पुरस्तात्तत्प्राणान्दधाति तस्म्मादिमे पुरस्तात्प्राणास्तान्ना-न्यया यजुष्मत्त्येष्टकया पुरस्तात्प्रत्युपदद्ध्यादेतस्यां चितौ नेत्प्राणानपिदधानीति ॥ ३६ ॥ यद्वपस्याꣳ पञ्च पुरस्तादु-

* का० श्रौ० सू० १७. ४. २५ ।

पद्धाति । अन्नं वा ऽआपोऽनपिहिता वा ऽअन्नेन प्राणा-स्तामनन्तर्हितामृतव्याभ्यामुपदधात्यृतुषु तद्वाचं प्रतिष्ठा-पयति सेयं वागृतुषु प्रतिष्ठिता वदति ॥ ३७ ॥ तदाहुः । यत्प्रजा विश्वज्योतिर्वागषाढाथ कस्मादन्तरेणर्त्तव्ये ऽउप-दधातीति संवत्सरो वा ऽऋतव्ये संवत्सरेण तत्प्रजाभ्यो वाचमन्तर्दधाति तस्मात्संवत्सरवेलायां प्रजा वाचं प्रवदन्ति ॥ ३८ ॥ '(१)अषाढासि सहमाने'ति । असहन्त ह्येतया देवा-ऽअसुरा'न्त्स(२)हस्वारातीः सहस्व पृतनायत' ऽइति यथैव यजुस्तथा बन्धुः 'सहस्र(३)वीर्य्यासि सा मा जिन्वे'ति सर्वं वै सहस्रꣳ सर्ववीर्य्यासि सा मा जिन्वेत्येतत्सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ ३९ ॥ तदाहुः । कस्मादभिस्वयमातृण्णमन्न्या ऽइष्टका ऽउपधीयन्ते प्रा-च्यऽएता ऽइति * द्वे वै योनी ऽइति ब्रूयाद्देवयोनिरन्न्यो मनुष्ययोनिरन्न्यः प्राचीनप्रजनना वै देवाः प्रती-चीनप्रजनना मनुष्यास्तद्यदेताः प्राचीरुपदधाति देव-योनेरेवैतद्यजमानं प्रजनयति ॥ ४० ॥ (B)

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति चतुर्थोऽध्यायः ।

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिकासंख्या ॥ ८५ ॥



(१) शु० य० सं० अ० १३ क० २६ । (२) शु० य० सं० अ० १३ क० २६ । (३) शु० य० सं० अ० १३ क० २६ ।

* 'द्वौ वै' इति 'क' पाठः ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ९. ४. १; कठसं० १६. १५,१६; मै० सं० ११. ७. १५,१६; तै० सं० ४. २. ८,९ ।

[ कूर्मादीनामुपधानादि ]

कूर्म्ममुपदधाति । रसो वै कूर्म्मो रसमेवैतदुपदधाति यो वै स ऽएषां लोकानामप्सु प्रविद्धानां पराङ् रसोऽत्यक्षरत्स ऽएष कूर्म्मस्तमेवैतदुपदधाति यावानु वै रसस्तावानात्मा स ऽएष ऽइम ऽएव लोकाः ॥ १ ॥ तस्य यदधरं कपालम् । अयꣳ स लोकस्तत्प्रतिष्ठितमिव भवति प्रतिष्ठित ऽइव ह्ययं लोकोऽथ यदुत्तरꣳ सा द्यौस्तद् व्यवगृहीतान्तमिव भवति व्यवगृहीतान्तेव हि द्यौरथ यदन्तरा तदन्तरिक्षꣳ स ऽएष ऽइम ऽएव लोका-ऽइमानेवैतल्लोकानुपदधाति ॥ २ ॥ तमभ्यनक्ति * । दध्ना मधुना घृतेन दधि हैवास्य लोकस्य रूपं घृतमन्तरिक्षस्य मध्वमुष्य स्वेनैवैनमेतद्रूपेण समर्द्धयत्यथो दधि हैवास्य लोकस्य रसो घृतमन्तरिक्षस्य मध्वमुष्य स्वेनैवैनमेतद्रसेन समर्द्धयति ॥ ३ ॥ 'मधु[1] वाता ऽऋतायत' ऽइति । यां वै देवतामृगभ्यनूक्ता यां रुग्यजुः सैव देवता सऋक्सो देवता तद्यजुस्तद्धैतन्मध्वेवैष त्रिचो रसो वै मधु रसमेवास्मिन्नेतद्दधाति गायत्रीभिस्तिसृभिस्तस्योक्तो बन्धुः ॥ ४ ॥ स यत्कूर्म्मो नाम । एतद्वै रूपं कृत्वा प्रजापतिः प्रजा ऽअसृजत यदसृजताकरोत्तद्यदकरोत्तस्मात्कूर्म्मः कश्यपो वै कूर्म्मस्तस्मादाहुः सर्वाः प्रजाः काश्यप्य ऽइति॥५॥ स यः स कूर्म्मो ऽसौ स ऽआदित्यः । अमुमेवै-

* का० श्रौ० सू० १७. ४. २७ ।

( १ ) शु० य० सं० अ० १३ क० २७ ।

तदादित्यमुपदधाति तं पुरस्तात्प्रत्यञ्चमुपदधात्यमुं तदा-
दित्यं पुरस्तात्प्रत्यञ्चं दधाति तस्मादसावादित्यः पुरस्ता-
त्प्रत्यङ् धीयते दक्षिणतोऽषाढायै व्वृषा वै कूर्म्मो
योषाषाढा दक्षिणतो वै व्वृषा योषामुपशेतेऽरत्निमात्रेऽरत्नि-
मात्राद्धि व्वृषा योषामुपशेते सैषा सर्व्वासामिष्टकानां
महिषी यदषाढैतस्यै दक्षिणतः सन्त्सर्व्वासामिष्टकानां
दक्षिणतो भवति ॥ ६ ॥ यद्वेव कूर्म्ममुपदधाति । प्राणो वै
कूर्म्मः प्प्राणो हीमाः सर्व्वाः प्प्रजाः करोति प्प्राणमेवैतदु-
दधाति तं पुरस्तात्प्रत्यञ्चमुपदधाति पुरस्तात्तत्प्रत्यञ्चं
प्राणं दधाति तस्मात्पुरस्तात्प्रत्यङ् प्राणो धीयते पुरुष-
मभ्यावृत्तं यजमाने तत्प्राणं दधाति दक्षिणतोऽषाढायै
प्प्राणो वै कूर्म्मो व्वागषाढा प्प्राणो वै व्वाचो व्वृषा प्प्राणो
मिथुनम् ॥ ७ ॥ * 'अपां[1] गम्भन्त्सीदे'ति † । एतद्वापां
गम्भिष्ठं यत्रैष ऽएतत्तपति 'मा त्वा[2] सूर्योऽभिताप्प्सी-
न्न्माग्निर्व्वैश्श्वानर' ऽइति मैव त्वा सूर्य्यो हिꣳसीन्न्मो
ऽअग्निर्व्वैश्श्वानर ऽइत्येत'दच्छिन्नपत्त्राः[3] प्प्रजा ऽअनुवीक्षस्वे'-
तीमा वै सर्व्वाः प्प्रजा या ऽइमा ऽइष्टकास्ता ऽअरिष्टा-
ऽअनार्त्ता ऽअनुवीक्षस्वेत्येत'दनु[4] त्वा दिव्व्या व्वृष्टिः
सचतामि'ति यथैवैनं दिव्व्या व्वृष्टिरनुसचेतैवमेतदाह
॥ ८ ॥ अथैनमेजयति । 'त्रीन्त्[5]समुद्रान्त्समसृपत्स्वर्गा'नि'

* अत्र शतम् ४२०० ।

† का० श्रौ० सू० १७. ५. १ ।

(१) शु० य० सं० अ० १३ क० ३० । (२) शु० य० सं० अ० १३ क० ३० । (३) शु० य० सं० अ० १३ क० ३० । (४) शु० य० सं० अ० १३ क० ३० । (५) शु० य० सं० अ० १३ क० ३१ ।

तीमे वै त्रयः समुद्राः स्वर्ग्गा लोकास्तानेष कूर्म्मो भूत्वा-नुसर्पति सर्प्पा'पांपतिर्व्वृषभ ऽइष्टकानामि'त्यपाᳪ ह्येष पतिर्व्वृषभ ऽइष्टकाना'म्पुरीषं व्वसानः सुकृतस्य लोक' ऽइति पशवो वै पुरीषं पशून्व्वसानः सुकृतस्य लोक ऽइत्येत'त्तत्र गच्छ यत्र पूर्व्वे परेता' ऽइति तत्र गच्छ यत्रैतेन पूर्व्वे कर्म्मणेयुरित्येतत् ॥ ९ ॥ 'मही द्यौः पृथिवी च न' ऽइति । महती द्यौः पृथिवी च न ऽइत्येत'दिमं यज्ञं मिमिक्षतामि'तीमं यज्ञमवतामित्येत'त्पिपृतां नो भरी-मभिरि'ति बिभृतां नो भरीमभिरित्येतद् द्यावापृथिव्ययोत्तम-योपदधाति द्यावापृथिव्यो हि कूर्म्मः ॥ १० ॥ त्रिभिरुपद-धाति । त्रय ऽइमे लोका ऽअथो त्रिवृदग्निर्य्यावानग्निर्य्याव-त्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिभिरभ्यनक्ति तस्यद्-तस्योक्तो बन्धुरवका ऽअधस्ताद्भवन्त्यवका ऽउपरिष्टादापो-वा ऽअवका ऽअपामेवैनमेतन्मध्यतो दधाति सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥११॥ अथोलूखलमु-सले ऽउपदधाति* । व्विष्णुरकामयतान्नादः स्यामिति स ऽएत-ऽइष्टके ऽअपश्यदुलूखलमुसले ते ऽउपाधत्त ते ऽउपधाया-न्नादोऽभवत्तथैवैतद्यजमानो यदुलूखलमुसले ऽउपदधाति येन रूपेण यत्कर्म्म कृत्वा व्विष्णुरन्नादोऽभवत्तेन रूपेण तत्कर्म्म कृत्वान्नादोऽसानीति तदेत्सर्व्वमन्नं यदुलूखल-

(१) शु॰ य॰ सं॰ अ॰ १३ क॰ ३१। (२) शु॰ य॰ सं॰ अ॰ १३ क॰ ३१। (३) शु॰ य॰ सं॰ अ॰ १३ क॰ ३१। (४) शु॰ य॰ सं॰ अ॰ १३ क॰ ३२। (५) शु॰ य॰ सं॰ अ॰ १३ क॰ ३२। (६) शु॰ य॰ सं॰ अ॰ १३ क॰ ३२।

* का॰ श्रौ॰ सू॰ १७. ५. ३।

मुसले ऽउलूखलमुसलाभ्याᳬं ह्येवान्नं क्रियत ऽउलूखलमुसलाभ्यामद्यते ॥ १२ ॥ ते रेतःसिचोर्व्वेलयोपदधाति । पृष्ठ्यो वै रेतःसिचौ मद्ध्यमु पृष्ठ्यो मद्ध्यतऽएवास्मिन्नेतदन्नं दधात्युत्तरे ऽउत्तरमेवास्मादेतदन्नं दधात्यरत्निमात्रेऽरत्निमात्राद्ध्यन्नमद्यते ॥ १३ ॥ प्रादेशमात्रे भवतः । प्रादेशमात्रो वै गर्भो विष्णुरन्नमेतदात्मसम्मितमेवास्मिन्नेतदन्नं दधाति यदु वाऽआत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ १४ ॥ औदुम्बरे भवतः । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जमेवास्मिन्नेतद्रसं दधात्यथो सर्व्वे ऽएते वनस्पतयो यदुदुम्बरऽएते ऽउपदधत्सर्व्वान्वनस्पतीनुपदधाति रेतःसिचोर्व्वेलयेमे वै रेतःसिचावनयोस्तद्वनस्पतीन्दधाति तस्मादनयोर्व्वनस्पतयश्चतुःस्रक्ति भवति चतस्रो वै दिशः सर्व्वासु तद्दिक्षु वनस्पतीन्दधाति तस्मात्सर्व्वासु दिक्षु वनस्पतयो मद्ध्ये सङ्गृहीतं भवत्युलूखलरूपतायै ॥ १५ ॥ यद्वेवोलूखलमुसले ऽउपदधाति । प्रजापतेर्व्विस्रस्तात्प्राणो मद्ध्यत ऽउदचिक्रमिषत्तमन्नेनागृह्णात्तस्मात्प्राणोऽन्नेन गृहीतो यो ह्येवान्नमत्ति स प्राणिति ॥ १६ ॥ प्राणे गृहीते । अस्मादन्नमुदचिक्रमिषत्तत्प्राणेनागृह्णात्तस्मात्प्राणेनान्नं गृहीतं यो ह्येव प्राणिति सोऽन्नमत्ति ॥ १७ ॥ एतयोरुभयोर्ग्गृहीतयोः । अस्मादूर्ग्गुदचिक्रमिषत्तामेताभ्यामुभाभ्यामगृह्णात्तस्मादेताभ्यामुभाभ्यामूर्ग्गृहीता यो ह्येवान्नमत्ति स प्राणिति तमूर्जयति ॥ १८ ॥ ऊर्ज्जि गृहीतायाम् । अस्मादेते ऽउभे

ऽउदचिक्रमिषतां ते ऽऊर्ज्जांगृह्णात्तस्म्मादेते ऽउभे ऽऊर्ज्जौ गृहीते यथ्थं ह्येवोर्ज्जयति स प्राणिति सोऽन्नमत्ति ॥ १९ ॥ तान्न्येतान्न्यन्न्योऽन्न्येन गृहीतानि । तान्न्यन्न्योऽन्न्येन गृहीत्वात्मन्न्प्रापादयत तदेतदन्नं प्रपद्यमानꣳ सर्वे देवा ऽअनुप्रापद्यन्तान्नजीवनꣳ हीदꣳ सर्वम् ॥ २० ॥ तदेष श्लोकोऽभ्युक्तꣳ । तद्धै स प्राणोऽभवदिति तद्धि स प्राणोऽभवन्महा भूत्त्वा प्प्रजापतिरिति महान्न्हि स तद्-भवद्यदेनमेते देवाꣳ प्प्रापद्यन्त भुजो भुजिष्या विश्वेति प्राणा वै भुजोऽन्नं भुजिष्या ऽएतत्त्सर्वं विश्वेत्येतद्यत्प्राणा-न्न्प्राणयत्पुरीत्त्यात्त्मा वै पूर्य्यद्धै प्राणान्न्प्राणयत्तस्म्मात्प्राणा देवा ऽअथ यत्प्रजापतिꣳ प्प्राणयत्तस्म्माद्दु प्प्रजापतिꣳ प्प्राणो यो वै स प्राण ऽएषा सा गायत्र्यथ यत्तदन्नमेष स विष्णुर्द्देवताथ या सोग्गेष स ऽउदुम्बरꣳ ॥ २१ ॥ सोऽब्र-वीत् । अयं वाव मा सर्वस्मात्पाप्प्मन ऽउदभार्षीदिति यदब्रवीदुदभार्षीन्न्मेति तस्म्मादुदुम्भर ऽउदुम्भरो ह वै तमुदुम्बर ऽइत्त्याचक्षते परोक्षं परोक्षकामा हि देवा-ऽउरु मे करदिति तस्म्मादुरुकरमुरुकरꣳ ह वै तदुलूखल-मित्त्याचक्षते परोक्षं परोक्षकामा हि देवाꣳ सैषा सर्वेषां प्राणानां य्योनिर्य्यदुलूखलꣳ शिरो वै प्राणानां य्योनिꣳ ॥ २२ ॥ तत्त्प्रादेशमात्रं भवति । प्रादेशमात्रमिव हि शिरश्चतुꣳस्त्रक्ति भवति चतुꣳस्त्रक्तीव हि शिरो मध्ये सङ्गृहीतं भवति मध्ये सङ्गृहीतमिव हि शिरꣳ ॥ २३ ॥ तं य्यत्र देवाꣳ समस्कुर्वन् । तदस्मिन्नेतत्त्सर्वं मद्ध्यतोऽदधुꣳ

प्प्राणमन्नमूर्ज्जं तथैवास्मिन्नन्नयमेतद्दधाति रेतःसिचोर्व्वेलया पृष्ठ्यो वै रेतःसिचौ मद्ध्यमु पृष्ठ्यो मद्ध्यत ऽएवास्मिन्नेतत्सर्व्वं दधाति ॥ २४ ॥ 'व्विष्णोः कर्म्माणि पश्यते'ति । व्वीर्य्यं वै कर्म्म व्विष्णोर्व्वीर्य्याणि पश्यतेत्येत'द्यतो व्व्रतानि पस्पश' ऽइत्यन्नं व्वै व्रतं ऽयतोऽन्नᳫं स्प्पाशयाञ्चक्र ऽइत्येत 'दिन्द्रस्य युज्यः सखे'तीन्द्रस्य ह्येष युज्यः सखा द्विदेवत्ययोपदधाति द्वे ह्युलूखलमुसले सकृत्सादयति समानं तत्करोति समानᳫं ह्येतदन्नमेव सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ २५ ॥ अथोखामुपदधाति * । योनिर्व्वाऽउखा योनिमेवैतदुपदधाति तामुलूखल ऽउपदधात्यन्तरिक्षं व्वा ऽउलूखलं ऽयद्धि किञ्चास्या ऽऊर्द्ध्वमन्तरिक्षमेव तन्मद्ध्यं व्वा ऽअन्तरिक्षं मद्ध्यतस्तद्योनिं दधाति तस्म्मात्सर्व्वेषां भूतानां मद्ध्यतो योनिरपि वनस्प्पतीनाम् ॥ २६ ॥ यद्वेवोखामुपदधाति । यो वै स प्रजापतिर्व्यस्त्रᳫंसतैषा सोखेमे वै लोका ऽउखेमे लोकाः प्प्रजापतिस्तामुलूखलऽउपदधाति तदेनमेतस्मिन्त्सर्व्वास्मिन्न्प्रतिष्ठापयति प्प्राणेऽन्नऽऊर्ज्यथो ऽएतस्म्मादेवैनमेतत्सर्व्वस्म्मादनन्तार्हितं दधाति ॥ २७ ॥ अथोपशयां पिष्ट्वा । लोकभाजमुखां कृत्वा पुरस्तादुखाया ऽउपनिवपत्येष हैतस्यै लोकस्तथो हास्यैषानन्तरिता भवति ॥ २८ ॥ तदाहुः । कथमस्यैषा पक्वा शृतोपहिता भवतीति यदेव यजुष्कृता तेनाथो यद्वै किञ्चै-

(१) शु० य० सं० अ० १३ क० ३३ । (२) शु० य० सं० अ० १३ क० ३३ । (३) शु० य० सं० अ० १३ क० ३३ ।

* का० श्रौ० सू० १७. ५. ४ ।

तमग्निं वैश्वानरमुपनिगच्छति तत ऽएव तत्पक्वः शृतमुपहितं भवति ॥ २९ ॥ 'ध्रुवासि धरुणे'ति । तस्योक्तो बन्धुरितो 'जज्ञे प्रथममेभ्यो योनिभ्यो ऽअधि जातवेदा' ऽइत्येतेभ्यो हि योनिभ्यः प्रथमं जातवेदा ऽअजायत 'स गायत्र्या त्रिष्टुभानुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन्नि'त्येतैर्वा ऽएष छन्दोभिर्देवेभ्यो हव्यं वहति प्रजानन् ॥ ३० ॥ 'इषे राये रमस्व । सहसे द्युम्न ऽऊर्जे ऽअपत्याये'त्येतस्मै सर्वस्मै रमस्वेत्ये'तत्सम्राडसि स्वराडसी'ति सम्राट् च ह्येष स्वराट् च 'सारस्वतौ त्वोत्सौ प्रावतामि'ति मनो वै सरस्वान्वाक्सरस्वत्येतौ सारस्वता ऽउत्सौ तौ त्वा प्रावतामित्येतद् द्वाभ्यामुपदधाति तस्योक्तो बन्धुरथो द्वयꣳ ह्येवैतद्रूपं मृच्चापश्च सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ ३१ ॥ *

अथैनामभिजुहोति । एतद्वा ऽअस्यामेतत्पूर्वꣳ रेतः सिक्तं भवति सिकतास्तदेतदभिकरोति तस्माद्योनौ रेतः सिक्तमभिक्रियत ऽआज्येन जुहोति स्रुवेण स्वाहाकारेण द्वाभ्यामाग्नेयीभ्यां गायत्रीभ्यां तस्योक्तो बन्धुः ॥३२॥ 'अग्ने युक्ष्वा हि ये तव । युक्ष्वा हि देवहूतमानि'ति युक्तवतीभ्यामिदमेवैतद्योनौ रेतो युनक्ति तस्माद्योनौ रेतो युक्तं न निष्पद्यते ॥ ३३ ॥ स यदि संवत्सरभृतः

( १ ) शु० य० सं० अ० १३ क० ३४ । ( २ ) शु० य० सं० अ० १३ क० ३४ । ( ३ ) शु० य० सं० अ० १३ क० ३४ । ( ४ ) शु० य० सं० अ० १३ क० ३५ । ( ५ ) शु० य० सं० अ० १३ क० ३५ । ( ६ ) शु० य० सं० अ० १३ क० ३५ ।

* का० श्रौ० सू० १७. ५. ५ ।

( ७ ) शु० य० सं० अ० १३ क० ३६,३७ ।

स्यात् । अथाभिजुहुयात्सर्वं वै तद्यत्संवत्सरभृतꣳ सर्वं तद्यदभिजुहोत्यथ यद्यसंवत्सरभृतꣳ स्यादुपैव तिष्ठेतासर्वं वै तद्यदसंवत्सरभृतोऽसर्वं तद्यदुपतिष्ठतेऽभित्वेव जुहुयात् ॥ ३४ ॥ पशुरेष यदग्निः । सोऽत्रैव सर्वः कृत्स्नः संस्कृतस्तस्यावाङ् प्राणः स्वयमातृण्णा श्रोणी द्वियजुः पृष्ट्यो रेतःसिचौ कीकसा विश्वज्योतिः ककुदृतव्ये ग्रीवा ऽअषाढा शिरः कूर्म्मो ये कूर्म्मे प्प्राणा ये शीर्षन्प्राणास्ते ते ॥ ३५ ॥ तं वा ऽएतम् । इत ऽऊर्द्ध्वं प्राञ्चं चिनोत्यसौ वा ऽआदित्य ऽएषोऽग्निरमुं तदादित्यमित ऽऊर्द्ध्वं प्राञ्चं दधाति तस्मादसावादित्य ऽइत ऽऊर्द्ध्वः प्प्राङ् धीयते ॥ ३६ ॥ अथैनं प्रसलव्व्यावर्त्तयति । अमुं तदादित्यं प्रसलव्व्यावर्त्तयति तस्मादसावादित्य ऽइमाँल्लोकान्प्रसलव्व्यनुपर्य्येति ॥ ३७ ॥ उदरमुखा । योनिरुलूखलमुत्तरोखा भवत्यधरमुलूखलमुत्तरꣳ ह्युदरमधरा योनिः शिश्नं मुसलं तद् वृत्तमिव भवति व्वृत्तमिव हि शिश्नं तद्दक्षिणत ऽउपदधाति दक्षिणतो वै व्वृषा योषामुपशेते यदु पशोः संस्कृतस्यान्नं तद्दूर्वेष्टका तस्य वा ऽएतस्योत्तरोऽर्द्ध ऽउदाहिततरो भवति पशुरेष यदग्निस्तस्मात्पशोः सुहितस्योत्तरः कुक्षिरुन्नततरो भवति ॥ ३८ ॥ (A)

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ९. ४. १; कठ० सं० ३. २. ३; कपि० सं० १६. १६. ३९. ३; मै० सं० ११. ७. १६; तै० सं० ४. २. ९ ।

[ उखायां पशुशीर्षोपधानादि ]

पशुशीर्षाण्युपदधाति । पशवो वै पशुशीर्षाणि पशूनेवैतदुपदधाति तान्युखायामुपदधातीमे वै लोका ऽउखा पशवः पशुशीर्षाण्येषु तल्लोकेषु पशून्दधाति तस्मादिमऽएषु लोकेषु पशवः ॥ १ ॥ यद्वेवोखायाम् । योनिर्वाऽउखा पशवः पशुशीर्षाणि योनौ तत्पशून्प्रतिष्ठापयति तस्मादद्यमानाः पच्यमानाः पशवो न क्षीयन्ते योनौ ह्येनान्प्रतिष्ठापयति ॥ २ ॥ यद्वेव पशुशीर्षाण्युपदधाति । या वै ताः श्रिय ऽएतानि तानि पशुशीर्षाण्यथ यानि तानि कुसिन्धान्येतास्ताः पञ्च चितयस्तद्यास्ताः पञ्च चितय ऽइमे ते लोकास्तद्ये त ऽइमे लोका ऽएषा सोखा तद्यदुखायां पशुशीर्षाण्युपदधात्येतैरेव तच्छीर्षभिरेतानि कुसिन्धानि सन्दधाति ॥ ३ ॥ तान्पुरस्तात्प्रतीच ऽउपदधाति । एतद्वै यत्रैतान्प्रजापतिः पशूनालिप्सत त ऽआलिप्स्यमाना ऽउदचिक्रमिषँस्तान्प्राणेषु समगृह्णात्तान्प्राणेषु संगृह्य पुरस्तात्प्रतीच ऽआत्मन्नधत्त ॥ ४ ॥ तद्वा ऽएतत्क्रियते । यद्देवा ऽअकुर्वन्निदं न्वस्मात्ते पशवो नोच्चिक्रमिषन्ति यत्वेतत्करोति यद्देवा ऽअकुर्वंस्तत्करवाणीत्यथो प्राणेष्वेवैनानेतत्संगृह्य पुरस्तात्प्रतीच ऽआत्मन्धत्ते ॥ ५ ॥ यद्वेव पशुशीर्षाण्युपदधाति । प्रजापतिर्वा ऽइदमग्र ऽआसीदेकऽएव सोऽकामयतान्नँ सृजेय प्रजायेयेति स प्राणेभ्यऽएवाधि पशून्निरमिमीत मनसः पुरुषं चक्षुषोऽश्वं प्राणाद्गां श्रोत्रादविं वाचोऽजं तद्यदेनान्प्राणेभ्योऽधि-

निरमिमीत तस्मादाहुः प्प्राणाः पशव ऽइति मनो वै प्राणानां प्रथमं तद्यन्मनसः पुरुषं निरमिमीत तस्मादाहुः पुरुषः प्प्रथमः पशूनां व्वीर्य्यवत्तम ऽइति मनो वै सर्व्वे प्प्राणा मनसि हि सर्व्वे प्प्राणाः प्प्रतिष्ठितास्तद्यन्मनसः पुरुषं निरमिमीत तस्मादाहुः पुरुषः सर्व्वे पशव ऽइति पुरुषस्य ह्येवैते सर्व्वे भवन्ति ॥ ६ ॥ तदेतदन्नꣳ सृष्ट्वा । पुरस्तात्प्रत्यगात्मन्नधत्त तस्माद्यः कश्चान्नꣳ सृजते पुरस्तादेवैनत्प्रत्यगात्मन्धत्ते तद्वा ऽउखायामुदरं व्वा ऽउखोदरे तदन्नं दधाति ॥ ७ ॥ अथैषु हिरण्यशकलान्प्रत्यस्यति । प्राणा वै हिरण्यमथ वा ऽएतेब्भ्यः पशुब्भ्यः संज्ञप्प्यमानेब्भ्य ऽएव प्राणा ऽउत्क्रामन्ति तद्यद्धिरण्यशकलान्न्प्रत्यस्यति प्प्राणानेवैष्वेतद्दधाति ॥ ८ ॥ सप्त प्रत्यस्यति । सप्त वै शीर्षन्न्प्राणास्तानस्मिन्नेतद्दधात्यथ यदि पञ्च पशवः स्युः पञ्चैव कृत्वः सप्त—सप्त प्रत्यस्येत्पञ्च वा ऽएतान्न्पशूनुपदधाति सप्त—सप्त वा ऽएकैकस्मिन्न्पशौ प्प्राणास्तदेषु सर्व्वेषु प्प्राणान्दधाति ॥ ९ ॥ तद्धैकेऽपि । यद्येकः पशुर्ब्भवति पञ्चैव कृत्वः सप्त—सप्त प्रत्यस्यन्ति पञ्च वाऽएतान्न्पशूनुपदधाति सप्त—सप्त वा ऽएकैकस्मिन्न्पशौ प्प्राणास्तदेषु सर्व्वेषु प्प्राणान्दध्म ऽइति न तथा कुर्य्यादेतस्मिन्न्वै पशौ सर्व्वेषां पशूनाꣳ रूपं तद्यदेतस्मिन्न्प्रत्यस्यति तदेवैषु सर्व्वेषु प्प्राणान्दधाति ॥ १० ॥ मुखे * प्प्रथमं प्रत्यस्यति । 'सम्म्यक्स्रवन्ति सरितो न धेना' ऽइत्यन्नं

* का० श्रौ० सू० १७. ५. ७ ।

(१) शु० य० सं० अ० १३ क० ३८ ।

वै धेनास्तदिदꣳ सम्यङ् मुखमभिसꣳस्रव'न्त्यन्तर्हृदा मनसा पूयमाना' इत्यन्तर्वै हृदयेन मनसा सतान्नं पूतं य ऋजुस्तस्य 'घृतस्य धारा अभिचाकशीमी'ति या एवैतस्मिन्ननग्नावाहुतीर्होष्यन्भवति ता एतदाह 'हिरण्ययो वेतसो मध्ये अग्नेरि'ति य एवैष हिरण्मयः पुरुषस्तमेतदाह ॥ ११ ॥ * 'ऋचे त्वे'तीह । प्राणो वा-ऽऋक्प्राणेन ह्यर्चति 'रुचे त्वे'तीह प्राणो वै रुक् प्राणेन हि रोचतेऽथो प्राणाय हीदꣳ सर्वꣳ रोचते 'भासे त्वे'तीहं 'ज्योतिषे त्वे'तीह भास्वती हीमे ज्योतिष्मती चक्षुषी 'अभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य चे'ती-'ह्यग्निर्ज्योतिषा ज्योतिष्मान्रुक्मो वर्चसा वर्चस्वानि'तीह विश्ववतीभ्यां विश्वꣳ हि श्रोत्रम् ॥ १२ ॥ [ अर्धप्रपाठकः ५० ॥ ] अथ पुरुषशीर्षमुद्गृह्णाति । महयत्येवैनदे'त'त्सहस्रदा-ऽअसि सहस्राय त्वे'ति सर्वं वै सहस्रꣳ सर्वस्य दातासि सर्वस्मै त्वेत्येतत् ॥ १३ ॥ अथैनानुपदधाति । पुरुषं प्रथमं पुरुषं लक्ष्मीश्रेणाप्त्वा दधाति मध्ये पुरुषमभित इतरान्पशून्पुरुषं तत्पशूनां मध्यतोऽत्तारं दधाति तस्मात्पुरुष एव पशूनां मध्यतोऽत्ता ॥ १४ ॥ अश्वं ‡ चाविं चोत्तरतः ।

(१) शु० य० सं० अ० १३ क० ३८ । (२) शु० य० सं० अ० १३ क० ३८ । (३) शु० य० सं० अ० १३. ३८ ।

* का० श्रौ० सू० १७. ५. ८—१४ ।

(४) शु० य० सं० अ० १३ क० ३९ । (५) शु० य० सं० अ० १३ क० ३९ । (६) शु० य० सं० अ० १३ क० ३९ । (७) शु० सं० अ० १३ क० ३९ । (८) शु० सं० अ० १३ क० ३९ ।

(९) शु० य० सं० अ० १३ क० ४० । (१०) शु० य० सं० अ० १३ क० ४० ।

† 'णात्वा' इति 'क' पाठः । ‡ का० श्रौ० सू० १७. ५. १५,१६ ।

एतस्यां तद्दिश्येतौ पशू दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ ॥ १५ ॥ गां चाजं च दक्षिणतः । एतस्यां तद्दिश्येतौ पशू दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ ॥ १६ ॥ पयसि पुरुषमुपदधाति । पशवो वै पयो यजमानं तत्पशुषु प्रतिष्ठा*पय[1]त्यादित्यं गर्भं पयसा समङ्ग्धी'-त्यादित्यो वा ऽएष गर्भो यत्पुरुषस्तं पयसा समङ्ग्धी-त्येत[2]त्सहस्रस्य प्रतिमां विश्वरूपमि'ति पुरुषो वै सहस्रस्य प्रतिमा पुरुषस्य ह्येव सहस्रं भवति 'परिवृङ्[3]धि हरसा माभिमꣳस्था' ऽइति पर्य्येनं वृङ्ग्ध्यर्च्चिषा मैनꣳ हिꣳसीरित्येत[4]च्छतायुषं कृणुहि चीयमान' ऽइति पुरुषं तत्पशूनाꣳ शतायुं करोति तस्मात्पुरुष ऽएव पशूनाꣳ शतायुः ॥ १७ ॥ अथोत्तरतोऽश्वम् । 'वा[5]तस्य जूतिमि'ति वातस्य वा ऽएष जूतिर्यदश्वो 'वरुणस्य[6] नाभिमि'ति वारुणो ह्यश्वोऽश्वं[7] जज्ञानꣳ सरिरस्य मध्य' ऽइत्यापो वै सरिरमप्सुजा ऽउ वा ऽअश्वः '[8]शिशुं नदीनाꣳ हरिमद्रि-बुध्नमि'ति गिरिर्वा ऽअद्रिर्गिरिबुध्ना ऽउ वा ऽआपो'ऽम्ने[9] मा हिꣳसीः परमे व्योमन्नि'तीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिꣳसीरित्येतत् ॥ १८ ॥ अथ दक्षिणतो गाम् । 'अजस्र[10]मिन्दुमरुषमि'ति सोमो वा

---

* का० श्रौ० सू० १७. ५. १७ ।

(१) शु० य० सं० अ० १३ क० ४१ । (२) शु० य० सं० अ० १३ क० ४१ । (३) शु० य० सं० अ० १३ क० ४१ । (४) शु० य० सं० अ० १३ क० ४१ । (५) शु० य० सं० अ० १३ क० ४२ । (६) शु० य० सं० अ० १३ क० ४२ । (७) शु० य० सं० अ० १३ क० ४२ । (८) शु० य० सं० अ० १३ क० ४२ । (९) शु० य० सं० अ० १३ क० ४२ । (१०) शु० य० सं० अ० १३ क० ४३ ।

ऽइन्दुः स हैष सोमोऽजस्रो यद्‌दौ'र्भुरण्युमि'ति भर्त्तारमित्त्येत'दग्निमीडे पूर्वचित्तिं नमोभिरि'त्त्याग्नेयो वै गौः पूर्वचित्तिमिति प्राञ्चᳩ ह्यग्निमुद्धरन्ति प्प्राञ्चमुपचरन्ति 'स पर्व्वभिर्ऋतुशः कल्पमान' ऽइति यद्वा ऽएष चीयते तदेष पर्व्वभिर्ऋतुशः कल्पते 'गां मा हिᳩसीरदितिं व्विराजमि'ति व्विराड्वै गौरन्नं व्वै व्विराडन्नमु गौः ॥ १९ ॥ अथोत्तरतोऽविम् । 'व्वरूत्रीं त्त्वष्टुर्व्वरुणस्य नाभिमि'ति व्वारुणी च हि त्त्वाष्ट्री चावि'रविं जज्ञानाᳩ रजसः परस्म्मादि'ति श्रोत्रं वै परᳩ रजो दिशो वै श्रोत्रं दिशः परᳩ रजो 'महीᳩ साहस्रीमसुरस्य मायामि'ति महतीᳩ साहस्रीमसुरस्य मायामित्त्येत'दग्ने मा हिᳩसीः परमे व्व्योमन्नि'ती'मे वै लोकाः परमं व्व्योमैषु लोकेष्वेनं मा हिᳩसीरित्त्येतत् ॥ २० ॥ अथ दक्षिणतोऽजम् । 'यो ऽअग्निरग्नेरध्यजायते'त्त्यग्निर्व्वा ऽएषोऽग्नेरध्यजायत 'शोकात्पृथिव्व्या ऽउत वा दिवस्प्परी'ति यद्वै प्प्रजापतेः शोकादजायत तद्दिवश्च पृथिव्व्यै च शोकादजायत 'येन प्प्रजा व्विश्श्वकर्म्मा जजाने'ति व्वाग्वा ऽअजो व्वाचो वै प्प्रजा व्विश्श्वकर्म्मा जजान 'तमग्ने हेडः परि ते व्वृणक्त्वि'ति यथैव यजुस्तथा

(१) शु० य० सं० अ० १३ क० ४३। (२) शु० य० सं० अ० १३ क० ४३। (३) शु० य० सं० अ० १३ क० ४३। (४) शु० य० सं० अ० १३ क० ४३। (५) शु० य० सं० अ० १३ क० ४४। (६) शु० य० सं० अ० १३ क० ४४। (७) शु० य० सं० अ० १३ क० ४४। (८) शु० य० सं० अ० १३ क० ४४। (९) शु० य० सं० अ० १३ क० ४५। (१०) शु० य० सं० अ० १३ क० ४५। (११) शु० य० सं० अ० १३ क० ४५। (१२) शु० य० सं० अ० १३ क० ४५।

बन्धुः ॥ २१ ॥ त ऽएते पशवः । तान्नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना ह्येते पशवः ॥ २२ ॥ अथ पुरुषशीर्षमभिजुहोति । आहुतिर्वै यज्ञः पुरुषं तत्पशूनां यज्ञियं करोति तस्मात्पुरुष ऽएव पशूनां यजते ॥ २३ ॥ यद्वेवैनदभिजुहोति । शीर्षंस्तद्वीर्यं दधात्याज्येन जुहोति वज्रो वा ऽआज्यं वीर्यं वै वज्रो वीर्यमेवास्मिन्नेतद्दधाति स्रुवेण वृषा वै स्रुवो वीर्यं वै वृषा वीर्यमेवास्मिन्नेतद्दधाति स्वाहाकारेण वृषा वै स्वाहाकारो वीर्यं वै वृषा वीर्यमेवास्मिन्नेतद्दधाति त्रिष्टुभा वज्रो वै त्रिष्टुब्वीर्यं वै वज्रो वीर्यं त्रिष्टुब्वीर्येणैवास्मिन्नेतद्वीर्यं दधाति ॥ २४ ॥ स वा ऽअर्द्धर्चमनुद्रुत्य स्वाहाकरोति । अस्थि वा ऽऋगिदं तच्छीर्षकपालं विहाप्य यदिदमन्तरतः शीर्ष्णो वीर्यं तदस्मिन्दधाति ॥ २५ ॥ अथोत्तरमर्द्धर्चमनुद्रुत्य * स्वाहाकरोति । इदं तच्छीर्षकपालꣳ सन्धाय यदिदमुपरिष्टाच्छीर्ष्णो वीर्यं तदस्मिन्दधाति ॥ २६ ॥ 'चित्रं देवानामुदगादनीकमि'ति[1] । असौ वा ऽआदित्य ऽएष पुरुषस्तदेतच्चित्रं देवानामुदेत्यनीकं 'चक्षुर्मित्रस्य वरुणस्याग्नेरि'[2]त्युभयेषाꣳ हैतद्देवमनुष्याणां चक्षु'राप्रा द्यावापृथिवी ऽअन्तरिक्षमि'[3]त्युद्यन्वा ऽएष ऽइमाँल्लोकानापूरयति 'सूर्य ऽआत्मा जगतस्तस्थुषश्चे'[4]त्येष ह्यस्य सर्वस्यात्मा यच्च जगद्यच्च तिष्ठति

* का० श्रौ० सू० १७. ५. १८ ।

(१) शु० य० सं० अ० १३ क० ४६ । (२) शु० य० सं० अ० १३ क० ४६ । (३) शु० य० सं० अ० १३ क० ४६ । (४) शु० य० सं० अ० १३ क० ४६ ।

॥ २७ ॥ अथोत्सर्गैरुपतिष्ठते । एतद्वै यत्रैतान्प्रजापतिः पशूनालिप्सत त ऽआलिप्स्यमाना ऽअशोचँस्तेषामेतैरुत्सर्गैः शुचं पाप्मानमपाहँस्तथैवैषामयमेतदेतैरुत्सर्गैः शुचं पाप्मानमपहन्ति ॥ २८ ॥ तद्धैके । यं—यमेव पशुमुपदधति तस्य-तस्य शुचमुत्सृजन्ति नेच्छुचं पाप्मानमभ्युपदधामहा ऽइति ते ह ते शुचं पाप्मानमभ्युपदधति यार्थं हि पूर्वस्य शुचमुत्सृजन्ति तामुत्तरेण सहोपदधति ॥ २९ ॥ विपरिक्राममु हैक ऽउपतिष्ठन्ते । ऊर्ध्वार्थं शुचमुत्सृजाम ऽइति ते ह ते शुचं पाप्मानमनूद्यन्त्यूर्ध्वो ह्येतेन कर्म्मणैत्यूर्ध्वामु शुचमुत्सृजन्ति ॥ ३० ॥ बाह्येनैवाग्निमुत्सृजेत् । इमे वै लोका ऽएषोऽग्निरेभ्यस्तल्लोकेभ्यो बहिर्द्धा शुचं दधाति बहिर्वेदीयं वै वेदिरस्यै तद्बहिर्द्धा शुचं दधात्युदङ् तिष्ठन्नेतस्याᳬ ह दिश्येते पशवस्तद्यत्रैते पशवस्तदेवैष्वेतच्छुचं दधाति ॥ ३१ ॥ पुरुषस्य * प्रथममुत्सृजति । तᳬ हि प्रथममुपदधा[1]तीमम्मा हिᳬसीर्द्विपादं पशुमि'ति द्विपाद्वा ऽएष पशुर्यत्पुरुषस्तं मा हिᳬसीरित्येत[2]त्सहस्त्राक्षो मेधाय चीयमान' ऽइति हिरण्यशकलैर्वा ऽएष सहस्त्राक्षो मेधायेत्यज्ञायेत्येत[3]'न्मयुं पशुम्मेधमग्ने जुषस्वे'ति किम्पुरुषो वै मयुः किम्पुरुषमग्ने जुषस्वेत्येत'[4]त्तेन चिन्वानस्तन्वो निषीदे'त्यात्मा वै तनू-

---

* का० श्रौ० सु० १७. ५. १९ ।

(१) शु० य० सं० अ० १३ क० ४७ । (२) शु० य० सं० अ० १३ क० ४७ । (३) शु० य० सं० अ० १३ क० ४७ । (४) शु० य० सं० अ० १३ क० ४७ ।

स्तेन चिन्न्वान ऽआत्मानꣳ सँस्कुरुष्वेत्येत॑न्नमयुन्ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि॑ति तन्नमयौ च शुचं दधाति यं च द्वेष्टि तस्मिँश्च ॥ ३२ ॥ अथाश्वस्य । 'इमं मा हिꣳसीरेकशफं पशुमि'त्येकशफो वा ऽएष पशुर्यदश्वस्तं मा हिꣳसीरित्येत'त्कनिक्रदं वाजिनं वाजिनेष्वि'ति कनिक्रदो वा ऽएष वाज्यु वाजिनेषु 'गौरमारण्यमनु ते दिशामी'ति तदस्मै गौरमारण्यमनुदिशति 'तेन चिन्न्वानस्तन्न्वो निषीदे'ति तेन चिन्न्वानऽआत्मानꣳ संस्कुरुष्वेत्येत'द्गौरं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि'ति तद्गौरे च शुचं दधाति यं च द्वेष्टि तस्मिँश्च ॥ ३३ ॥ अथ गोः । 'इमꣳ साहस्रꣳ शतधारमुत्समि'ति साहस्रो वा ऽएष शतधार ऽउत्सो यद्गौ'र्व्यच्यमानꣳ सरिरस्य मध्य' ऽइतीमे वै लोकाः सरिरमुपजीव्यमानमेषु लोकेष्वित्येत'द्घृतं दुहानामदितिं जनाये'ति घृतं वा ऽएषादितिर्जनाय दुहे'ऽग्ने मा हिꣳसीः परमे व्योमन्नि'तीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिꣳसीरित्येतद् 'गवयमारण्यमनु ते दिशामी'ति तदस्मै गवययारण्यमनुदिशति 'तेन चिन्न्वानस्तन्न्वो निषीदे'ति तेन चिन्न्वान ऽआत्मानꣳ संस्कुरुष्वेत्येतद्-

(१) शु० य० सं० अ० १३ क० ४७ । (२) शु० य० सं० अ० १३ क० ४८ । (३) शु० य० सं० अ० १३ क० ४८ । (४) शु० य० सं० अ० १३ क० ४८ । (५) शु० य० सं० अ० १३ क० ४८ । (६) शु० य० सं० अ० १३ क० ४८ । (७) शु० य० सं० अ० १३ क० ४९ । (८) शु० य० सं० अ० १३ क० ४९ । (९) शु० य० सं० अ० १३ क० ४९ । (१०) शु० य० सं० अ० १३ क० ४९ । (११) शु० य० सं० अ० १३ क० ४९ । (१२) शु० य० सं० अ० १३ क० ४९ ।

'गवयं[1] ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि'ति तद् गवये च शुचं दधाति यं च द्वेष्टि तस्मिँश्च ॥ ३४ ॥ अथावेः । 'इममूर्णायुमि'[2]त्यूर्णावलमित्येत'द्वरुणस्य नाभि[3]मि'ति वारुणो ह्यवि'स्त्वचं[4] पशूनां द्विपदां चतुष्पदामि' त्युभयेषाᳬहैष पशूनां त्वग्द्विपदां च चतुष्पदां च 'त्वष्टुः[5] प्रजानां प्रथमं जनित्रमि'त्येतद्ध त्वष्टा प्रथमᳬ रूपं विचका'राग्ने[6] मा हिᳬसीः परमे व्योमन्नि'तीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिᳬसीरित्येत- 'दुष्ट्रमारण्यमनु[7] ते दिशामी'ति तदस्मा ऽउष्ट्रमारण्य- मनुदिशति 'तेन[8] चिन्वानस्तन्वो निषीदे'ति तेन चिन्वान- ऽआत्मानᳬ संस्कुरुष्वेत्येत'दुष्ट्रं[9] ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि'ति तदुष्ट्रे च शुचं दधाति यं च द्वेष्टि तस्मिँश्च ॥ ३५ ॥ अथाजस्य । 'अजो ह्यग्नेरजनिष्ट[10] शोकादि'ति यद्वै प्रजापतेः शोकादजायत तदग्नेः शोका- दजायत 'सो ऽअपश्यज्जनितारमग्र'[11] ऽइति प्रजापतिर्वै जनिता सोऽपश्यत्प्रजापतिमग्र ऽइत्येत'त्तेन देवा[12] देवता- मग्रमायन्नि'ति वाग्वा ऽअजो वाचो वै देवा देवता- मग्रमाँयस्तेन 'रोहमायन्नुप[13] मेध्यास' ऽइति स्वर्गो वै

---

(१) शु० य० सं० अ० १३ क० ४९। (२) शु० य० सं० अ० १३ क० ५०। (३) शु० य० सं० अ० १३ क० ५०। (४) शु० य० सं० अ० १३ क० ५०। (५) शु० य० सं० अ० १३ क० ५०। (६) शु० य० सं० अ० १३ क० ५०। (७) शु० य० सं० अ० १३ क० ५०। (८) शु० य० सं० अ० १३ क० ५०। (९) शु० य० सं० अ० १३ क० ५०। (१०) शु० य० सं० अ० १३ क० ५१। (११) शु० य० सं० अ० १३ क० ५१। (१२) शु० य० सं० अ० १३ क० ५१। (१३) शु० य० सं० अ० १३ क० ५१।

लोको रोहस्तेन स्वर्ग्गं लोकमायन्नुप मेद्ध्यास ऽइत्येत'च्छरभमारण्यमनु ते दिशामी'ति तदस्मै शरभमारण्यमनुदिशति 'तेन चिन्न्वानस्तन्न्वो निषीदे'ति तेन चिन्न्वानऽआत्मानꣳ संस्कुरुष्वेत्येत'च्छरभं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि'ति तच्छरभे च शुचं दधाति यं च द्वेष्टि तस्मिँश्च ॥ ३६ ॥ तदाहुः । यां वै तत्प्रजापतिरेतेषां पशूनाꣳ शुचं पाप्मानमपाहँस्त ऽएते पञ्च पशवोऽभवँस्त ऽएत ऽउत्क्रान्तमेधा ऽअमेद्ध्या ऽअयज्ञियास्तेषां ब्राह्मणो नाश्नीयात्तानेतस्यां दिशि दधाति तस्मादेतस्यां दिशि पर्ज्जन्न्यो न वर्षुको यत्रैते भवन्ति ॥ ३७ ॥

प्रत्येत्याग्निमुपतिष्ठते * । एतद्वा ऽएतद्ययथायथं करोति यदग्नौ सामिचिते बहिर्वेद्येति तस्मा ऽएवैतन्निह्नुतेऽहिꣳसाया ऽआग्नेय्यागेय ऽएवैतन्निह्नुते गायत्र्या † गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्माऽएतन्निह्नुतेऽनिरुक्तया सर्व्वं वा ऽअनिरुक्तꣳ सर्व्वेणैवास्माऽएतन्निह्नुते यविष्ठवत्यैतद्धास्य प्प्रियं धाम यद्यविष्ठऽइति यद्वै जात ऽइदꣳ सर्वमयुवत तस्माद्यविष्ठः ॥ ३८ ॥

'त्वं र्यविष्ठ दाशुष' ऽइति । यजमानो वै दाश्वा'न्नॄꣳ पाही'ति मनुष्या वै नरः 'श्रृणुधी गिर' ऽइति श्रृणु

---

(१) शु० य० सं० अ० १३ क० ५१ । (२) शु० य० सं० अ० १३ क० ५१ ।
(३) शु० य० सं० अ० १३ क० ५१ ।

* का० श्रौ० सू० १७. ६. १ ।

† 'गायत्र्यो' इति 'ग' पाठः ।

(४) शु० य० सं० अ० १३ क० ५२ । (५) शु० य० सं० अ० १३ क० ५२ ।
(६) शु० य० सं० अ० १३ क० ५२ ।

न ऽइमाꣳ स्तुतिमित्येत'द्रक्षा तोकमुतत्मने'ति प्रजा वै तोकꣳ रक्ष प्रजां चात्मानं चेत्येतत् ॥ ३९ ॥ आरुह्याग्निं जघनेन स्वयमातृण्णां परीत्यापस्या ऽउपदधाति । आप ऽएता यदपस्या ऽअथ वा ऽएतेभ्यः पशुभ्य ऽआप ऽउत्क्रान्ता भवन्ति तद्यदपस्या ऽउपदधात्येष्वेवैतत्पशुष्वपो दधात्यनन्तर्हिताः पशुभ्य ऽउपदधात्यनन्तर्हितास्तत्पशुभ्योऽपो दधाति पञ्च—पञ्चोपदधाति पञ्च ह्येते पशवः सर्वत ऽउपदधाति सर्वत ऽएवैष्वेतदपो दधाति ॥ ४० ॥ तद्याः पञ्चदश पूर्वाः । ता ऽअपस्या वज्रो वा ऽआपो वज्रः पञ्चदशस्तस्माद्येनापो यन्त्यपैव तत्र पाप्मानं घ्नन्ति वज्रो हैव तस्यार्द्धस्य पाप्मानमपहन्ति तस्माद्वर्षत्यप्रावृतो व्रजेदयं मे वज्रः पाप्मानमपहनदिति ॥ ४१ ॥ अथ याः पञ्चोत्तराः । ताश्छन्दस्याः पशवो वै छन्दाꣳस्यन्नं पशवोऽन्नमु पशोर्माꣳसमथ वा ऽएतेभ्यः पशुभ्यो माꣳसान्न्युत्क्रान्तानि भवन्ति तद्यच्छन्दस्या ऽउपदधात्येष्वेवैतत्पशुषु माꣳसानि दधात्यनन्तर्हिताः पशुभ्य ऽउपदधात्यनन्तर्हितानि तत्पशुभ्यो माꣳसानि दधात्यन्तरा ऽअपस्या भवन्ति बाह्याश्छन्दस्या ऽअन्तरा ह्यापो बाह्यानि माꣳसानि ॥ ४२ ॥ तदाहुः । यदिमा ऽआप ऽएतानि माꣳसान्न्यथ क्व त्वक् क्व लोमेत्यन्नं वाव पशोस्त्वगन्नं लोम तद्यच्छन्दस्या ऽउपदधाति सैव पशोस्त्वक्तल्लोमाथो

(१) शु० य० सं० अ० १३ क० ५२ ।

यान्न्यमून्न्युखायामजलोमानि तानि लोमानि बाह्योखा भवत्यन्तराणि पशुशीर्षाणि बाह्यानि हि लोमान्न्यन्तर ऽआत्मा यदीतरेण यदीतरेणेति ह स्माह शाण्डिल्यः सर्व्वानेव वयं कृत्स्नान्पशून्त्सँस्कुर्म्म ऽइति ॥ ४३ ॥ यद्वेवापस्या ऽउपदधाति * । प्रजापतेर्व्विस्रस्तादाप ऽआयँस्तास्वितास्वविशद्यदविशत्तस्माद्विःशतिस्ता ऽअस्याङ्गुलिभ्योऽध्यस्रवन्नन्तो वा ऽअङ्गुलयोऽन्तत ऽएवास्माता ऽआप ऽआयन् ॥ ४४ ॥ स यः स प्रजापतिर्व्यस्रःसत । अयमेव स योऽयमग्निश्चीयतेऽथ या ऽअस्मात्ता ऽआप ऽआयन्नेतास्ता ऽअपस्यास्तद्यदेता ऽउपदधाति या ऽएवास्मात्ता ऽआप ऽआयँस्ता ऽअस्मिन्नेतत्प्रतिदधाति तस्मादेता ऽअत्रोपदधाति ॥ ४५ ॥ 'अपां [1]त्वेमन्त्सादयामी'ति । वायुर्वा ऽअपामेम यदा ह्येवैष ऽइतश्चेतश्च वात्यथापो यन्ति वायौ ताः सादयति ॥ ४६ ॥ '[2]अपां त्वोद्मन्त्सादयामी'ति । ओषधयो वा ऽअपामोद्म यत्र ह्याप ऽउन्दन्त्यस्तिष्ठन्ति तदोषधयो जायन्त ऽओषधिषु ताः सादयति ॥ ४७ ॥ '[3]अपां त्वा भस्मन्त्सादयामी'ति । अभ्रं वा ऽअपां भस्माभ्रे ताः सादयति ॥ ४८ ॥ '[4]अपां त्वा ज्योतिषि सादयामी'ति । विद्युद्वा ऽअपां ज्योतिर्व्विद्युति ताः सादयति ॥ ४९ ॥ '[5]अपां त्वायने सादया-

---

* का० श्रौ० सू० १७. ६. २ ।

(१) शु० य० सं० अ० १३ क० ५३ । (२) शु० य० सं० अ० १३ क० ५३ । (३) शु० य० सं० अ० १३ क० ५३ । (४) शु० य० सं० अ० १३ क० ५३ । (५) शु० य० सं० अ० १३ क० ५३ ।

मी'ति । इयं वा ऽअपामयनमस्याᳫं ह्यापो यन्त्यस्यां ताᳫं सादयति तद्या ऽअस्यैतेभ्यो रूपेभ्य ऽआप-ऽआयँस्ता ऽअस्मिन्नेतत्प्रतिदधात्यथो ऽएतान्येवास्मिन्नेत-द्रूपाणि दधाति ॥५०॥ 'अर्ण्णवे[1] त्वा सदने सादयामी'ति । प्राणो वा ऽअर्ण्णवः प्राणे ताᳫं सादयति ॥ ५१ ॥ 'समुद्रे[2] त्वा सदने सादयामी'ति । मनो वै समुद्रो मनसो वै समुद्राद्वाचाभ्र्या देवास्त्रयीं विद्यां निरखनँस्तदेष श्लोकोऽभ्युक्तो ये समुद्रान्निरखनन्देवास्तीक्ष्णाभिरभ्रिभिः सुदेवो ऽअद्य तद्विद्याद्यत्र निर्वपणं दधुरिति मनः समुद्रो वाक्तीक्ष्णाभ्रिस्त्रयी विद्या निर्वपणमेतदेष श्लोकोऽभ्युक्तो मनसि ताᳫं सादयति ॥ ५२ ॥ 'सरिरे[3] त्वा सदने सादयामी'ति । वाग्वै सरिरं वाचि ताᳫं सादयति ॥ ५३ ॥ 'अपां[4] त्वा क्षये सादयामी'ति । चक्षुर्वा ऽअपां क्षयस्तत्र हि सर्व्वदैवापः क्षियन्ति चक्षुषि ताᳫं सादयति ॥ ५४ ॥ 'अपां[5] त्वा सधिषि सादयामी'-ति । श्रोत्रं वा ऽअपाᳫं सधिः श्रोत्रे ताᳫं सादयति तद्या ऽअस्यैतेभ्यो रूपेभ्य ऽआप ऽआयँस्ता ऽअस्मि-न्नेतत्प्रतिदधात्यथो ऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥ ५५ ॥ 'अपां[6] त्वा सदने सादयामी'ति । द्यौर्वा-ऽअपाᳫं सदनं दिवि ह्यापः सन्ना दिवि ताᳫं

(१) शु॰ य॰ सं॰ अ॰ १३ क॰ ५३ । (२) शु॰ य॰ सं॰ अ॰ १३ क॰ ५३ । (३) शु॰ य॰ सं॰ अ॰ १३ क॰ ५३ । (४) शु॰ य॰ सं॰ अ॰ १३ क॰ ५३ । (५) शु॰ य॰ सं॰ अ॰ १३ क॰ ५३ । (६) शु॰ य॰ सं॰ अ॰ १३ क॰ ५३ ।

सादयति ॥ ५६ ॥ '[1]अपां त्वा सधस्थे सादयामीति । अन्तरिक्षं वा ऽअपाꣳ सधस्थमन्तरिक्षे ताꣳ सादयति ॥ ५७ ॥ '[2]अपां त्वा योनौ सादयामी'ति । समुद्रो वा ऽअपां योनिः समुद्रे ताꣳ सादयति ॥ ५८ ॥ '[3]अपां त्वा पुरीषे सादयामी'ति । सिकता वा ऽअपां पुरीषꣳ सिकतासु ताꣳ सादयति ॥ ५९ ॥ '[4]अपां त्वा पाथसि सादयामी'ति । अन्नं वा ऽअपां पाथोऽन्ने ताꣳ सादयति तद्या ऽअस्यैतेभ्यो रूपेभ्य ऽआप ऽआयँस्ता ऽअस्मिन्नन्नेतत्प्रतिदधात्यथो ऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥ ६० ॥ '[5]गायत्रेण त्वा च्छन्दसा सादयामि । त्रैष्टुभेन त्वा च्छन्दसा सादयामि जागतेन त्वा च्छन्दसा सादयाम्म्यानुष्टुभेन त्वा च्छन्दसा सादयामि पाङ्क्तेन त्वा च्छन्दसा सादयामी'ति तद्या ऽअस्यैतेभ्यश्छन्दोभ्य ऽआप ऽआयँस्ता ऽअस्मिन्नेतत्प्रतिदधात्यथो ऽएतान्येवास्मिन्नेतच्छन्दाꣳसि दधाति ॥ ६१ ॥ ता ऽएता ऽअङ्गुलयः । ताः सर्वत ऽउपदधाति सर्वतो हीमा ऽअङ्गुलयो तेषूपदधात्यन्तेषु हीमा ऽअङ्गुलयश्चतुर्द्धोपदधाति चतुर्द्धा हीमा ऽअङ्गुलयः पञ्च-पञ्चोपदधाति पञ्च—पञ्च हीमा ऽअङ्गुलयो नानोपदधाति नाना हीमा ऽअङ्गुलयः

---

(१) शु० य० सं० अ० १३ क० ५३। (२) शु० य० सं० अ० १३ क० ५३। (३) शु० य० सं० अ० १३ क० ५३। (४) शु० य० सं० अ० १३ क० ५३। (५) शु० य० सं० अ० १३ क० ५३।

सकृत्सादयति समानं तत्करोति तस्मात्समानसम्बन्धनात् ॥ ६२ ॥ (B)

### पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या १०० ॥

### इति पञ्चमोऽध्यायः ॥ ५ ॥

† हस्तिघटं नाम सप्तमं काण्डं समाप्तम् ॥ ७ ॥



(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ९. ५. १-४; कठ० सं० १६. १६-१८; कपि० सं० २५. ८, ९; मै० सं० ११. ७. १७, १८; तै० सं० ४. २. ९, ३. ११

† अस्मिन्काण्डे कण्डिकासंख्या ॥ ३९८ ॥

# अथ चितिनामाष्टकं काण्डम्



अस्मिन् काण्डे प्रतिपाद्या विषयाः— प्राणभृत्संज्ञकेष्टकोपधानम्, आश्विनीष्टकोपधानादि, स्वयमातृण्णाद्युपधानम्, विश्वज्योतिर्ऋतव्याद्युपधानम्, स्तोमभागाद्युपधानम्, स्तोमचित्यर्थवादः, असपत्नाद्युपधानम्, ऋतव्याद्यर्थवादादि, इष्टकाप्रमाणम्, पुरीषनिवापादि, सुवर्णशकलसहस्रेण प्रोक्षणादिकं चेति ।



[ प्राणभृत्संज्ञकेष्टकोपधानम् ]

ओ३म् ॥ प्राणभृत ऽउपदधाति । प्राणा वै प्प्राणभृतः प्प्राणानेवैतदुपदधाति ताः प्प्रथमायां चिता ऽउपदधाति पूर्वार्द्धे ऽएषोऽग्नेर्यत्प्रथमा चितिः पुरस्तात्तत्प्राणान्दधाति तस्म्मादिमे पुरस्तात्प्राणाः ॥ १ ॥ ता दशदशोपदधाति । दश वै प्प्राणा यद्दु वा ऽअपि बहुकृत्वो दश–दश दशैव तत्पञ्चकृत्वो दश–दशोपदधाति पञ्च वा ऽएतान्पशूनुपदधाति दश–दश वा ऽएकैकस्मिन्न्पशौ प्प्राणास्तदेषु सर्व्वेषु प्प्राणान्दधात्यनन्तर्हिताः पशुभ्य ऽउपदधात्यनन्तर्हितांस्तत्पशुभ्यः प्प्राणान्दधाति सर्व्वत ऽउपदधाति सर्व्वत ऽएवैष्वेतत्प्राणान्दधाति ॥ २ ॥ यद्वेव प्प्राणभृत ऽउपदधाति । प्रजापतेर्विस्रस्तात्प्राणा ऽउदक्रामन्देवता भूत्वा तानब्रवीदुप मेत प्प्रति म ऽएतद्धत्त येन मे यूयमुदक्रमिष्टेति स वै तदन्नः सृजस्व यत्ते वयं पश्यन्त ऽउपवसामेति ते वा ऽउभये

सृजामहा ऽइति तथेति ते प्प्राणाश्च प्रजापतिश्चै-
तदन्नमसृजन्तैताः प्प्राणभृतः ॥ ३ ॥ स * पुरस्तादुप-
दधाति । ‘अयं[1] पुरो भुव’ ऽइत्यग्निर्वै पुरस्तद्यत्तमाह पुर-
ऽइति प्राञ्चꣳ ह्यग्निमुद्धरन्ति प्प्राञ्चमुपचरन्त्यथ यद्भुव-
ऽइत्याहाग्निर्वै भुवोऽग्नेर्हीदꣳ सर्वं भवति प्प्राणो ह्यग्नि-
र्भूत्वा पुरस्तात्तस्थौ तदेव तद्रूपमुपदधाति ॥ ४ ॥ ‘तस्य[2]
प्प्राणो भौवायन’ ऽइति । प्राणं तस्माद्रूपादग्नेर्न्निरमिमीत
‘वसन्तः[3] प्प्राणायन’ ऽइति वसन्तमृतुं प्राणान्निरमिमीत
‘गायत्री[4] वासन्ती’ति गायत्रीं छन्दो वसन्तादृतोर्न्निर-
मिमीत ‘गायत्र्यै[5] गायत्रमि’ति गायत्र्यै च्छन्दसो गायत्रꣳ
साम निरमिमीत ‘गायत्रादुपाꣳशुरि’[6]ति गायत्रात्साम्न-
ऽउपाꣳशुं ग्रहं निरमिमीतो‘पाꣳशोस्त्रिवृदि’[7]त्युपाꣳशो-
र्ग्रहात्त्रिवृतꣳ स्तोमं निरमिमीत ‘त्रिवृतो रथन्तरमि’[8]ति
त्रिवृत स्तोमाद्रथन्तरं पृष्ठं निरमिमीत ॥ ५ ॥ ‘वसिष्ठ[9]-
ऽऋषिरि’ति । प्राणो वै वसिष्ठ ऽ षिर्यद्वै नु श्रेष्ठस्तेन
वसिष्ठोऽथो यद्वस्तृतमो वसति तेनो ऽएव वसिष्ठः
‘प्प्रजापतिगृहीतया[10] त्वये’ति प्रजापतिसृष्टया त्वयेत्येत-
‘त्प्राणं[11] गृह्णामि प्प्रजाभ्य’ ऽइति प्राणं पुरस्तात्प्रा-

---

* का० श्रौ० सू० १७. ६. ३ ।

(१) शु० य० सं० अ० १३ क० ५४। (२) शु० य० सं० अ० १३ क० ५४। (३) शु० य० सं० अ० १३ क० ५४। (४) शु० य० सं० अ० १३ क० ५४। (५) शु० य० सं० अ० १३ क० ५४। (६) शु० य० सं० अ० १३ क० ५४। (७) शु० य० सं० अ० १३ क० ५४। (८) शु० य० सं० अ० १३ क० ५४। (९) शु० य० सं० अ० १३ क० ५४। (१०) शु० य० सं० अ० १३ क० ५४। (११) शु० य० सं० अ० १३ क० ५४।

पादयत नानोपदधाति ये नानाकामाः प्राणे तांस्तद्दधाति सकृत्सादयत्येकं तत्प्राणं करोत्यथ यन्नाना सादयेत्प्राणः ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका यजुः सादनः सूददोहास्तत्त्रिवृत्त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तत्कृत्वोपदधाति ॥ ६ ॥ अथ दक्षिणतः । 'अयं दक्षिणा विश्वकर्म्मे'त्ययं वै वायुर्विश्वकर्म्मा योऽयं पवत ऽएष हीदः सर्वं करोति तद्यत्तमाह दक्षिणेति तस्मादेष दक्षिणैव भूयिष्ठं वाति मनो ह वायुर्भूत्वा दक्षिणतस्तस्थौ तदेव तद्रूपमुपदधाति ॥ ७ ॥ * 'तस्य मनो वैश्वकर्म्मणमि'ति । मनस्तस्माद्रूपाद्वायोर्निरमिमीत 'ग्रीष्मो मानस' ऽइति ग्रीष्ममृतुं मनसो निरमिमीत 'त्रिष्टुब्ग्रैष्मी'ति त्रिष्टुभं छन्दो ग्रीष्मादृतोर्निरमिमीत 'त्रिष्टुभः स्वारमि'ति त्रिष्टुभश्छन्दसः स्वारः साम निरमिमीत 'स्वारादन्तर्यामि' ऽइति स्वारात्साम्नोऽन्तर्यामं ग्रहं निरमिमीता'न्तर्यामात्पञ्चदश' ऽइत्यन्तर्यामाद् ग्रहात्पञ्चदशः स्तोमं निरमिमीत 'पञ्चदशाद् बृहदि'ति पञ्चदशात्स्तोमाद् बृहत्पृष्ठं निरमिमीत ॥ ८ ॥ 'भरद्वाज ऽऋषिरि'ति । मनो वै भरद्वाज ऽऋषिरन्नं वाजो यो वै मनो बिभर्त्ति सोऽन्नं

(१) शु० य० सं० अ० १३ क० ५५ ।

* अत्र शतम् ४३०० ॥

(२) शु० य० सं० अ० १३ क० ५५ (३) शु० य० सं० अ० १३ क० ५५ । (४) शु० य० सं० अ० १३ क० ५५ । (५) शु० य० सं० अ० १३ क० ५५ । (६) शु० य० सं० अ० १३ क० ५५ । (७) शु० य० सं० अ० १३ क० ५५ । (८) शु० य० सं० अ० १३ क० ५५ । (९) शु० य० सं० अ० १३ क० ५५ ।

व्राजं भरति तस्मान्मनो भरद्वाज ऽऋषिः 'प्रजापति-गृहीतया त्वये'ति प्रजापतिसृष्टया त्वयेत्येत'न्मनो गृह्णामि प्प्रजाब्भ्य' ऽइति मनो दक्षिणतः प्प्रापादयत नानोपदधाति ये नानाकामा मनसि ताँस्तद्दधाति सकृत्सादयत्येकं तन्मनः करोत्यथ यन्नाना सादयेन्मनो ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः ॥ १ ॥ (A)

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



अथ † पश्चात् । 'अयं पश्चाद्विश्वव्व्यचा' ऽइत्यसौ वा ऽआदित्यो विश्वव्व्यचा यदा ह्येवैष ऽउदेत्यथेदः सर्वं व्व्यचो भवति तद्यत्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्ति चक्षुर्हादित्यो भूत्वा पश्चात्तस्थौ तदेव तद्रूपमुपदधाति ॥ १ ॥ 'तस्य चक्षुर्वैश्वव्व्यचस'मि'ति । चक्षुस्तस्माद्रूपादादित्यान्निरमिमीत-'वर्षाश्चाक्षुष्य' ऽइति वर्षा ऽऋतुं चक्षुषो निरमिमीत 'जगती वार्षी'ति जगतीं छन्दो वर्षाब्भ्य ऽऋतोर्न्निरमिमीत 'जगत्या ऽऋक्समम्मि'ति जगत्यै च्छन्दस ऽऋक्समः साम निरमिमीत'र्क्समाच्छुक्र' ऽइत्यृक्समात्साम्नः शुक्रं

(१) शु० य० सं० अ० १३ क० ५५। (२) शु० य० सं० अ० १३ क० ५५।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १०. १. १; कठ० सं० १६. १९; कपि० सं० २५. ९; मै० सं० ११. ७. १९; तै० सं० ४. ३. २।

* का० श्रौ० सू० १७. ६. ४।

(३) शु० य० सं० अ० १३ क० ५६। (४) शु० य० सं० अ० १३ क० ५६। (५) शु० य० सं० अ० १३. ५६। (६) शु० य० सं० अ० १३ क० ५६। (७) शु० य० सं० अ० १३ क० ५६। (८) शु० य० सं० अ० १३ क० ५६।

ग्रहं निरमिमीत 'शुक्रा[1]त्सप्तदश' ऽइति शुक्राद् ग्रहात्सप्तदशꣳ स्तोमं निरमिमीत 'सप्त[2]दशाद्वैरूपमि'ति सप्तदशात्स्तोमाद्वैरूपं पृष्ठं निरमिमीत ॥ २ ॥ 'जम[3]दग्निर्ऋषिरि'ति । चक्षुर्वै जमदग्निर्ऋषिर्यदेनेन जगत्पश्यत्यथो मनुते तस्माच्चक्षुर्जमदग्निर्ऋषिः 'प्रजा[4]पतिगृहीतया त्वये'ति प्रजापतिसृष्टया त्वयेत्येत'च्चक्षुर्गृह्णामि प्रजाभ्य' ऽइति चक्षुः पश्चात्प्रापादयत * नानोपदधाति ये नानाकामाश्चक्षुषि तांस्तद्दधाति सकृत्सादयत्येकं तच्चक्षुः करोत्यथ यन्नाना सादयेच्चक्षुर्ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः ॥ ३ ॥ अथोत्तरतः । 'इदमु[6]त्तरात्स्वरि'ति दिशो वा ऽउत्तरात्तद्यत्ता ऽआहोत्तरादित्युत्तरा ह्यस्मात्सर्वस्माद्दिशोऽथ यत्स्वरित्याह स्वर्गो हि लोको दिशः श्रोत्रꣳ ह दिशो भूत्वोत्तरतस्तस्थौ तदेव तद्रूपमुपदधाति ॥ ४ ॥ 'तस्य[7] श्रोत्रꣳ सौवमि'ति । श्रोत्रं तस्माद्रूपाद्दिग्भ्यो निरमिमीत 'शर[8]च्छ्रौत्री'ति शरदमृतुꣳ श्रोत्रान्निरमिमी'तानु[9]ष्टुप्शारदी'त्यनुष्टुभं छन्दः शरद ऽऋतोर्निरमिमीता'नु[10]ष्टुभ ऽऐडमि'त्यनुष्टुभश्छन्दस ऽऐडꣳ साम निरमिमी'तैडा[11]न्मन्थी'त्यैडात्साम्नो मन्थिनं ग्रहं निरमिमीत 'मन्थि[12]न ऽएकविꣳश' ऽइति मन्थिनो

(१) शु० य० सं० अ० १३ क० ५६। (२) शु० य० सं० अ० १३ क० ५६। (३) शु० य० सं० अ० १३ क० ५६। (४) शु० य० सं० अ० १३ क० ५६। (५) शु० य० सं० अ० १३ क० ५६। * 'यन्त' इति 'ख' पुस्तके। (६) शु० य० सं० अ० १३ क० ५७। (७) शु० य० सं० अ० १३ क० ५७। (८) शु० य० सं० अ० १३ क० ५७। (९) शु० य० सं० अ० १३ क० ५७। (१०) शु० य० सं० अ० १३ क० ५७। (११) शु० य० सं० अ० १३ क० ५७। (१२) शु० य० सं० अ० १३ क० ५७।

ग्रहादेकविᳪशᳪ स्तोमं निरमिमी'तैकविᳪशाद्वैराजमि'त्येकविᳪशात्स्तोमाद्वैराजं पृष्ठं निरमिमीत ॥ ५ ॥ 'विश्वा[1]मित्र ऽऋषिरि'ति । श्रोत्रं वै विश्वामित्र ऽऋषिर्यदेनेन सर्वतः शृणोत्यथो यदस्मै सर्वतो मित्रं * भवति तस्माच्छ्रोत्रं विश्वामित्र ऽऋषिः 'प्रजापतिगृ[3]हीतया त्वये'ति प्रजापतिसृष्टया त्वयेत्येत'च्छ्रोत्रं गृ[4]ह्णामि प्रजाभ्य' ऽइति श्रोत्रमुत्तरतः प्रापादयत नानोपदधाति ये नानाकामाः श्रोत्रे तांस्तद्दधाति सकृत्सादयत्येकं तच्छ्रोत्रं करोत्यथ यन्नाना सादयेच्छ्रोत्रᳪ ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः ॥ ६ ॥ अथ मध्ये । 'इयमुपरि म[5]तिरि'ति चन्द्रमा वा ऽउपरि तद्यत्तमाहोपरीत्युपरि हि चन्द्रमा ऽअथ यन्मतिरित्याह वाग्वै मतिर्वाचा हीदᳪ सर्वं मनुते वाग्घ चन्द्रमा भूत्वोपरिष्टात्तस्थौ तदेव तद्रूपमुपदधाति ॥ ७ ॥ 'तस्यै वाङ्[6]मात्ये'ति । वाचं तस्माद्रूपाच्चन्द्रमसो निरमिमीत 'हेमन्तो [7]वाँच्य' ऽइति हेमन्तमृतुं वाचो निरमिमीत 'प[8]ङ्क्तिर्हैमन्ती'ति पङ्क्तिं छन्दो हेमन्तादृतोर्न्निरमिमीत 'प[9]ङ्क्त्यै निधनवदि'ति पङ्क्त्यै च्छन्दसो निधनवत्साम निरमिमीत 'निधनव[10]त ऽआग्रयण' ऽइति निधनवतः साम्न ऽआग्रयणं ग्रहं निरमिमी'ता-

(१) शु० य० सं० अ० १३ क० ५७ । (२) शु० य० सं० अ० १३ क० ५७ ।
* 'ते भवति' इति 'ख' पाठः ।
(३) शु० य० सं० अ० १३ क० ५७ । (४) शु० य० सं० अ० १३ क० ५७ ।
(५) शु० य० सं० अ० १३ क० ५७ । (६) शु० य० सं० अ० १३ क० ५८ ।
(७) शु० य० सं० अ० १३ क० ५८ । (८) शु० य० सं० अ० १३ क० ५८ ।
(९) शु० य० सं० अ० १३ क० ५८ । (१०) शु० य० सं० अ० १३ क० ५८ ।

त्रयोदशसु मासेषु कामꣳ सप्तस्वृतुषु तद्यावाँस्त्रयोदशसु मासेषु कामꣳ सप्तस्वृतुषु तन्तत्सर्व्वमात्मानमभिसञ्चिनुते ॥ १५ ॥ स सँवत्सरम्प्रसुतꣳ स्यात्। सर्वं वै सँवत्सरꣳ सर्व्वमेकशतविधꣳ सर्व्वेणैव तत्सर्व्वमाप्नोति यदि सँवत्सरन्न शक्नुयाद्विश्वजिता सर्व्वपृष्ठेनातिरात्रेण यजेत तस्मिमन्त्सर्व्ववेदसन्दद्यात्सर्व्वं वै विश्वजित्सर्व्वपृष्ठोऽतिरात्रꣳ सर्व्वꣳ सर्व्ववेदसꣳ सर्व्वमेकशतविधꣳ सर्व्वेणैव तत्सर्व्वमाप्नोति ॥ १६ ॥ (E)

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ प्रजापतेः प्रकारान्तरेणैकशतसंख्याकत्वादिविधानम् ]

सँवत्सरो वै प्रजापतिरेकशतविधꣳ। तस्याहोरात्राण्यर्द्धमासा मासा ऽऋतवꣳ षष्टिर्म्मासस्याहोरात्राणि मासि वै सँवत्सरस्याहोरात्राण्याप्यन्ते चतुर्विंꣳशतिरर्द्धमासास्त्रयोदश मासास्त्रय ऽऋतवस्ताꣳ शतं विधाꣳ सँवत्सर ऽएवैकशततमी विधा ॥ १ ॥ स ऽऋतुभिरेव सप्तविधꣳ। षडृतवꣳ सँवत्सर ऽएव सप्तमी विधा तस्यैतस्य सँवत्सरस्यैतत्तेजो य ऽएष तपति तस्य रश्मयꣳ शतं विधा मण्डलमेवैकशततमी विधा ॥ २ ॥ स दिग्भिरेव सप्तविधꣳ। ये प्राच्यान्दिशि रश्मयꣳ सैका विधा ये दक्षिणायाꣳ सैका ये प्रतीच्याꣳ सैका य ऽउदीच्याꣳ सैका य ऽऊर्द्ध्वायाꣳ

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२, २, ४।

सैका येऽस्याश्चयाः सैका मण्डलमेव सप्तमी विधा ॥ ३ ॥
तस्यैतस्य परस्तात्कामप्रो लोकः । अमृतं वै कामप्रममृत-
मेवास्य तत्परस्तात्तद्यत्तदमृतमेतत्तद्यदेतदर्चिर्दीप्यते ॥ ४ ॥
तदेतद्वसुचित्रं राधः । तदेष सविता विभक्ताभ्यः
प्रजाभ्यो विभजत्यप्योषधिभ्योऽपि वनस्पतिभ्यो
भूय इव ह त्वेकाभ्यः प्रयच्छति कनीय इवैकाभ्य-
स्तद्याभ्यो भूयः प्रयच्छति ता ज्योक्तमाञ्जीवन्ति
याभ्यः कनीयः कनीयस्ताः ॥ ५ ॥ तदेतदृचाभ्युक्तम् ।
'विभक्तारं हवामहे वसोश्चित्रस्य राधसः । सवितारन्नृच-
क्षसमि'ति तदेतत्सर्वमायुर्दीर्घमनन्तं हि तद्यदिदमाहु-
र्दीर्घन्त आयुरस्तु सर्वमायुरिहीत्येष ते लोक एतत्ते-
ऽस्त्विति हैवैतत् ॥ ६ ॥ पश्यन्ती वाग्वदति । तदेतदे-
कशतविधेन वैवाप्त्यं शतायुतया वा य एवैकशतविधं
विधत्ते यो वा शतं वर्षाणि जीवति स हैवैतदमृतमाप्नोति
तस्माद्ये चैतद्विदुर्ये च न लोक्यया शतायुतेत्येवाहुस्त-
स्मादु ह न पुरायुषः स्वकामी प्रेयादलोक्यं हैत उ वाव
लोका यदहोरात्राण्यर्द्धमासा मासा ऋतवः संवत्सरः
॥ ७ ॥ तद्येऽर्वाग्विंशेषु वर्षेषु प्रयन्ति । अहोरात्रेषु
ते लोकेषु सज्यन्तेऽथ ये परोविंशेष्वर्वाक्चत्वारिं-
शेष्वर्द्धमासेषु तेऽथ ये परश्चत्वारिंशेष्वर्वाक्षष्टेषु मासेषु
तेऽथ ये परः षष्टेष्वर्वागशीतेष्वृतुषु तेऽथ ये परोऽशीते-
ष्वर्वाक्शतेषु सँवत्सरे तेऽथ य एव शतं वर्षाणि यो वा

(१) शु० य० सं० अ० ३० क० ४।

भूयाᳬसि जीवति स हैवैतदमृतमाप्नोति ॥ ८ ॥ बहुभिर्ह वै यज्ञैः । एकमहरेका रात्रिर्म्मिता स य ऽएवैकशतविधं विधत्ते यो वा शतं वर्षाणि जीवति स हैवैनदद्धातममामाप्नोत्येष वा ऽएकशतविधं विधत्ते य ऽएनᳬ सँव्वत्सरं बिभर्त्ति तस्मादेनᳬ सँव्वत्सरभृतमेव चिन्वीतेत्यधिदेवतम् ॥ ९ ॥ अथाधियज्ञम् । यानमूनेकशतमुद्द्वाहून्पुरुषान्मिमीते स विधैकशतविधः स चितिभिरेव सप्तविधः षड्तव्व्यवत्यश्चितयोऽग्निरेव सप्तमी विधा ॥ १० ॥ स ऽउ वा ऽइष्टकैकशतविधः । याः पञ्चाशत्प्रथमा ऽइष्टका याश्चोत्तमास्ताः शतं विधा ऽअथ या ऽएतदन्तरेणेष्टका ऽउपधीयन्ते सैवैकशततमी विधा ॥ ११ ॥ स ऽउ ऽएव यजुस्तेजाः । यजुरेकशतविधो यानि पञ्चाशत्प्रथमानि यजूᳬषि यानि चोत्तमानि ताः शतं विधा ऽअथ यान्येतदन्तरेण यजूᳬषि क्रियन्ते सैवैकशततमी विधैवमु सप्तविध ऽएकशतविधो भवति स यः शतायुतायाङ्कामो य ऽएकशतविधे सप्तविधेन हैव तमेवंविदाप्नोति ॥ १२ ॥ एवं वाव सर्वे यज्ञाः । एकशतविधा ऽअग्निहोत्रादृग्भिर्यजुर्भिः पदैरक्षरैः कर्म्मभिः सामभिः स यः शतायुतायाङ्कामो य ऽएकशतविधे यः सप्तविधे यज्ञेन-यज्ञेन हैव तमेवंविदाप्नोतीत्यु ऽएवाधियज्ञम् ॥ १३ ॥ अथाध्यात्मम् । पञ्चेमाश्चतुर्विधा ऽअङ्गुलयो द्वे कल्कुषी दोरᳬसफलकश्चाक्षश्च तत्पञ्चविᳬशतिरेवमिमानीतराण्यङ्गानि ताः शतं विधा ऽआत्मैवैकशततमी

विधोक्तः सप्तविधतायै ॥ १४ ॥ स ऽउ ऽएव प्राणतेजाः । प्राणैकशतविधोऽन्वङ्गमङ्गेऽङ्गे हि प्राणः स यः शतायुतायाङ्कामो य ऽएकशतविधे यः सप्तविधे यः सर्वेषु यज्ञेषु विद्यया हैव तमेवंविदाप्नोति सर्वैर्हि यज्ञैरात्मानः सम्पन्नं विदे ॥१५॥ त्रीणि वा ऽइमानि पञ्चविधानि । सँवत्सरोऽग्निः पुरुषस्तेषाम्पञ्चविधा ऽअन्नम्पानꣳ श्रीर्ज्योतिरमृतं यदेव सँवत्सरेऽन्नन्तदन्नं या ऽआपस्तत्पानः रात्रिरेव श्रीः श्रियाꣳ हैतद्रात्र्याꣳ सर्वाणि भूतानि सँवसन्त्यहर्ज्योतिरादित्योऽमृतमित्यधिदेवतम् ॥ १६ ॥ अथाधियज्ञम् । यदेवाग्नावन्नमुपधीयते तदन्नं या ऽआपस्तत्पानम्परिश्रित ऽएव श्रीस्तद्धि रात्रीणाꣳ रूपं यजुष्मत्यो ज्योतिस्तद्ध्यह्नाꣳ रूपमग्निरमृतन्तद्ध्यादित्यस्य रूपमित्यु ऽएवाधियज्ञम् ॥ १७ ॥ अथाध्यात्मम् । यदेव पुरुषेऽन्नन्तदन्नं या ऽआपस्तत्पानमस्थीन्येव श्रीस्तद्धि परिश्रिताꣳ रूपम्मज्जानो ज्योतिस्तद्धि यजुष्मतीनाꣳ रूपम्प्राणोऽमृतन्तद्ध्यग्ने रूपम्प्राणोऽग्निः प्राणोऽमृतमित्यु वा ऽआहुः ॥ १८ ॥ अन्नाद्वा ऽअशनाया निवर्त्तते । पानात्पिपासा श्रियै पाप्मा ज्योतिषस्तमोऽमृतान्मृत्युर्न्नि ह वा ऽअस्मादेतानि सर्वाणि वर्त्तन्तेऽप पुनर्म्मृत्युञ्जयति सर्वमायुरेति य ऽएवं वेद तदेतदमृतमित्येवामुत्रोपासीतायुरितीह प्राण ऽइति हैक ऽउपासते प्राणोऽग्निः प्राणोऽमृतमिति वदन्तो न तथा विद्यादध्रुवं वै तद्यत्प्राण'स्तन्ते विष्याम्यायुषो न मध्यादि'ति-

(१) शु० य० सं० अ० १२ क० ६५।

ह्यपि यजुषाऽभ्युक्तन्तस्मादेनदमृतमित्येवामुत्रोपासीतायुरितीह तथो ह स सर्व्वमायुरेति ॥ १९ ॥ (F)

द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ गायत्र्यादि-सप्तच्छन्दसां वीर्यरूपत्वेन स्तुतिः ]

प्प्राणो गायत्री । चक्षुरुष्ष्णिग्ग्वागनुष्ष्टुम्मनो बृहतीऽश्श्रोत्रम्पङ्क्तिर्य्यं ऽएवायम्प्रजननं प्प्राण ऽएष त्रिष्ष्टुबथ योऽयमवाङ् प्प्राण ऽएष जगती तानि वा ऽएतानि सप्प्त च्छन्दाᳩसि चतुरुत्तराण्ण्यग्ग्नौ क्क्रियन्ते ॥ १ ॥ प्प्राणो गायत्रीति । तद्य ऽएव प्प्राणस्य महिमा यद्द्वीर्य्यन्तदेतत्सहस्रम्प्राणस्यैवैतद्द्वीर्य्यᳫँ ऽयद्ध्यस्य चिन्न्वतं प्प्राण ऽउत्क्क्रामेत्तत ऽएवैषोऽग्ग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष गायत्रीं सञ्चितो भवति ॥ २ ॥ चक्षुरुष्ष्णिगिति । तद्य ऽएव चक्षुषो महिमा यद्द्वीर्य्यन्तदेतत्सहस्रञ्चक्षुषऽएवैतद्द्वीर्य्यᳫँ ऽयद्ध्यस्य चिन्न्वतश्चक्षुरुत्क्क्रामेत्तत ऽएवैषोऽग्ग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष ऽउष्ष्णिहं सञ्चितो भवति ॥ ३ ॥ व्वागनुष्ष्टुबिति । तद्य ऽएव व्वाचो महिमा यद्द्वीर्य्यन्तदेतत्सहस्रं व्वाच ऽएवैतद्द्वीर्य्यᳫँ ऽयद्ध्यस्य चिन्न्वतो व्वागुत्क्क्रामेत्तत ऽएवैषोऽग्ग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेषोऽनुष्ष्टुभं सञ्चितो

(F) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. २. ५ ।

भवति ॥४॥ मनो बृहतीति । तद्य ऽएव मनसो महिमा यद्द्वीरुर्यन्तदेतत्सहस्रम्मनस ऽएवैतद्द्वीरुर्यँरुयच्छ्यस्य चिन्न्वतो मन ऽउत्क्रामेत्तत ऽएवैषोऽग्निनर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष बृहतीः सञ्चितो भवति ॥५॥ श्रोत्रम्पङ्क्तिरिति । तद्य ऽएव श्रोत्रस्य महिमा यद्द्वीरुर्यन्तदेतत्सहस्रꣳ श्रोत्रस्यैवैतद्द्वीरुर्यं रुयच्छ्यस्य चिन्वतः श्रोत्रमुत्क्रामेत्तत ऽएवैषोऽग्निनर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष पङ्क्तीः सञ्चितो भवति ॥ ६ ॥ यऽएवायम्प्रजननः प्प्राणः । एष त्रिष्टुबिति तद्य ऽएवैतस्य प्प्राणस्य महिमा यद्द्वीरुर्यन्तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य व्वीरुर्यं रुयच्छ्यस्य चिन्वत ऽएष प्प्राण ऽआलुब्भ्येत्तत ऽएवैषोऽग्निनर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष त्रिष्टुभः सञ्चितो भवति ॥ ७ ॥ अथ योऽयमवाङ् प्प्राणः । एष जगतीति तद्य ऽएवैतस्य प्प्राणस्य महिमा यद्द्वीरुर्यन्तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य व्वीरुर्यं रुयच्छ्यस्य चिन्वत ऽएष प्प्राण ऽआलुब्भ्येत्तत ऽएवैषोऽग्निनर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष जगतीः सञ्चितो भवति ॥ ८ ॥ तानि वा ऽएतानि । सप्त च्छन्दाꣳसि चतुरुत्तराण्यन्योऽन्यस्मिन्न्प्रतिष्ठितानि सप्तेमे पुरुषे प्प्राणा ऽअन्योऽन्यस्मिन्न्प्रतिष्ठितास्तद्यावन्तमेवँविच्छन्दसाङ्गणमन्वाह च्छन्दसश्छन्दसो हैवास्य सोऽनूक्तो भवति स्तुतो वा शस्तो व्वोपहितो वा ॥ ९ ॥ (E)

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ३. १ ।

[ वेदवादिप्रश्नोत्तराभ्यां शिरोग्रीवादीनां छन्दोमयत्वनिरूपणम् ]

तदाहुः । किञ्छन्दः का देवताग्नेः शिर ऽइति गायत्री च्छन्दोऽग्निर्देवता शिरः ॥ १ ॥ किञ्छन्दः । का देवता ग्ग्रीवा ऽइत्युष्णिक्क्छन्दः सविता देवता ग्ग्रीवाः ॥ २ ॥ किञ्छन्दः । का देवतानूकमिति बृहती च्छन्दो बृहस्प्पतिर्देवतानूकम् * ॥ ३ ॥ किञ्छन्दः । का देवता पक्षाविति बृहद्रथन्तरे च्छन्दो द्यावापृथिवी देवते पक्षौ ॥४॥ किञ्छन्दः का देवता मद्ध्यमिति त्रिष्टुप्प्छन्द ऽइन्द्रो देवता मद्ध्यम् ॥ ५ ॥ किञ्छन्दः । का देवता श्श्रोणी ऽइति जगती च्छन्द ऽआदित्यो देवता श्श्रोणी ॥ ६ ॥ किञ्छन्दः । का देवता यस्म्मादिदम्प्राणाद्रेतः सिच्च्यत ऽइत्यतिच्छन्दाश्छन्दः प्प्रजापतिर्देवता॥ ७ ॥ किञ्छन्दः । का देवता योऽयमवाङ् प्प्राण ऽइति यज्ञायज्ञियञ्छन्दो वैश्श्वानरो देवता ॥ ८ ॥ किञ्छन्दः । का देवतोरूऽइत्त्यनुष्टुप्प्छन्दो विश्श्वे देवा देवतोरू ॥ ९ ॥ किञ्छन्दः । का देवताष्ठीवन्ताविति पङ्क्तिश्छन्दो मरुतो देवताष्ठीवन्तौ (A) ॥ १० ॥ किञ्छन्दः । का देवता प्प्रतिष्ठेऽइति द्विपदा च्छन्दो विष्णुर्देवता प्प्रतिष्ठे ॥ ११॥ किञ्छन्दः । का देवता प्प्राणा ऽइति विच्छन्दाश्छन्दो वायुर्देवता प्प्राणाः ॥ १२ ॥ किञ्छन्दः । का देवतोनातिरिक्तानीति न्न्यूनाक्षरा च्छन्द ऽआपो देवतोनातिरिक्तानि सैषात्म-

* अनूकशब्दस्य पक्षयोर्मध्यदेहस्य सन्धिः ।
पुच्छमध्ययोश्च सन्धिरित्यर्थः ॥

( A ) ष्ठीवन्तौ जानुप्रदेशावित्यर्थः । सा० भा० ॥

विद्यैवैतन्मयो हैवैता देवता ऽएतमात्मानमभिसम्भवति न हात्रान्न्या लोक्यताया ऽआशीरस्ति ॥ १३ ॥ (B)

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ धीरमहाशालनाम्नोर्महर्ष्योः प्रश्नप्रतिवचनाभ्यामग्नेः सर्व-देवतासमष्टिरूपप्राणवाग्व्यात्मकत्वप्रतिपादनम् ]

धीरो ह शातपर्णेयः । महाशालञ्जाबालमुपोत्ससाद तꣳ होवाच किम्मा विद्द्वानुपोदसद ऽइत्यग्निं वेदेति * कमग्निं वेत्थेति वाचमिति यस्तमग्निं वेद किꣳ स भवतीति वाग्ग्मी भवतीति होवाच नैनं वाग्ग्जहातीति ॥ १ ॥ वेत्थाग्निमिति होवाच । किमेव मा विद्द्वानुपोदसद ऽइत्यग्निं वेदेति कमग्निं वेत्थेति चक्षुरिति यस्तमग्निं वेद किꣳ स भवतीति चक्षुष्म्मान्भवतीति होवाच नैनञ्च-क्षुर्ज्जहातीति ॥ २ ॥ वेत्थाग्निमिति होवाच । किमेव मा विद्द्वानुपोदसद ऽइत्यग्निं वेदेति कमग्निं वेत्थेति मन ऽइति यस्तमग्निं वेद किꣳ स भवतीति मनस्वी भवतीति होवाच नैनम्मनो जहातीति ॥ ३ ॥ वेत्थाग्निमिति होवाच । किमेव मा विद्द्वानुपोदसद ऽइत्यग्निं वेदेति कमग्निं वेत्थेति श्श्रोत्रमिति यस्तमग्निं वेद किꣳ स भवतीति श्श्रोत्रवान्भवतीति होवाच नैनꣳ श्श्रोत्रञ्जहातीति ॥४॥ वेत्थाग्निमिति होवाच । किमेव मा विद्द्वानुपोदसद

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ३. २ ।

* सर्वत्र प्रश्नप्रतिवचनसमाप्तिद्योतका इतिशब्दाः ।

ऽइत्यग्निं व्वेदेति कमग्निं व्वेत्थेति स ऽएतत्सर्व्वमग्निस्तं व्वेदेति तस्मिन्न्होक्तऽउपावरुरोहाधीहि भोस्तमग्निमिति ॥ ५ ॥ स होवाच । प्प्राणो वाव सोऽग्निर्यदा वै पुरुषः स्वपिति प्प्राणन्तर्हि व्वागप्प्येति प्प्राणञ्चक्षुः प्प्राणम्मनः प्प्राणँ श्रोत्रं यदा प्प्रबुद्ध्यते प्प्राणादेवाधि पुनर्ज्जायन्तऽइत्यध्यात्मम् ॥ ६ ॥ अथाधिदेवतम् । या वै सा व्वाग[1]ग्निरेव स यत्तच्चक्षुरसौ स ऽआदित्यो यत्तन्मनऽएष स चन्द्रमा यत्तच्छ्रोत्रन्दिश ऽएव तदथ यः स प्प्राणोऽयमेव स व्वायुर्योऽयम्पवते ॥ ७ ॥ यदा वा ऽअग्निरनुगच्छति । व्वायुन्तर्ह्यनूद्द्वाति तस्मादेनमुदवासीदित्याहुर्व्वायुꣳ ह्यनूद्द्वाति यदादित्योऽस्तमेति व्वायुन्तर्हि प्प्रविशति व्वायुश्चन्द्रमा व्वायौ दिशः प्प्रतिष्ठिता व्वायोरेवाधि पुनर्ज्जायन्ते स यदेवं व्विदस्म्माल्लोकात्प्रैति व्वाचैवाग्निमप्प्येति चक्षुषादित्यम्मनसा चन्द्रꣳश्रोत्रेण दिशः प्प्राणेन व्वायुꣳ स ऽएतन्मय ऽएव भूत्वैतासान्देवतानां यांयाङ्कामयते सा भूत्वेलयति ॥ ८ ॥ (M)

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ अनेकैः प्रश्नप्रतिवचनैः पुरुषस्यार्करूपत्वेन स्तुतिः ]

श्वेतकेतुर्हारुणेयः । यक्ष्यमाण ऽआस तꣳ ह पितोवाच कानृत्विजोऽवृथा ऽइति स होवाचायन्न्वेव मे व्वैश्वा-

(१) "अग्निर्व्वाग्भूत्वा मुखं प्राविशद्" इति श्रुतेः । ऐ० उ० २ । ४ ।

(M) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२, ३, ३ ।

वसऽव्यो होतेति तꣳ ह पप्रच्छ व्वेत्थ ब्ब्राह्मण वैश्वाव-सव्व्य ॥ १ ॥ चत्त्वारि महान्तीऽ३ ऽइति । व्वेद भो३ ऽइति होवाच व्वेत्थ चत्त्वारि महताम्महान्तीऽ३ ऽइति व्वेद् भो३ ऽइति होवाच व्वेत्थ चत्त्वारि व्व्रतानी३ ऽइति व्वेद भो३ ऽइति होवाच व्वेत्थ चत्त्वारि व्व्रतानां व्व्रतानी३ ऽइति व्वेद् भो३ ऽइति होवाच व्वेत्थ चत्त्वारि क्कयानी३ ऽइति व्वेद् भो३ ऽइति होवाच व्वेत्थ चत्त्वारि क्कयाना-ङ्क्कयानी३ इति व्वेद् भो३ इति होवाच व्वेत्थ चतुरोऽर्क्कां३निति व्वेद् भो३ ऽइति होवाच व्वेत्थ चतुरोऽर्क्काणामर्क्कां३निति-व्वेद् भो३ ऽइति होवाच ॥ २ ॥ व्वेत्थार्क्कमिति । अथ वै नो भवान्न्वक्ष्यतीति व्वेत्थार्क्कपर्ण्णे ऽइत्त्यथ वै नो भवान्न्व-क्ष्यतीति व्वेत्थार्क्कपुष्प्पे ऽइत्त्यथ वै नो भवान्न्वक्ष्यतीति व्वेत्थार्क्ककोश्श्यावित्त्यथ वै नो भवान्न्वक्ष्यतीति व्वेत्थार्क्कस-मुद्गावित्त्यथ वै नो भवान्वक्ष्यतीति व्वेत्थार्क्कधाना ऽइत्त्यथ वै नो भवान्वक्ष्यतीति व्वेत्थार्क्काष्ठीलामित्त्यथ वै नो भवा-न्न्वक्ष्यतीति व्वेत्थार्क्कमूलमित्त्यथ वै नो भवान्न्वक्ष्यतीति ॥ ३ ॥ स ह वै यत्तदुवाच । व्वेत्थ चत्त्वारि महान्ति व्वेत्थ चत्त्वारि महताम्महान्तीत्त्यग्ग्निर्म्महाँस्तस्य महतो महदोषधयश्च्च व्वनस्पतयश्च्च तद्धस्यान्नं व्वायुर्म्महाँस्तस्य महतो महदापस्तद्ध्यस्यान्नमादित्त्यो महाँस्तस्य महतो महच्चन्द्रमास्तद्ध्यस्यान्नम्पुरुषो महाँस्तस्य महतो मह-त्पशवस्तद्धयस्यान्नमेताद्र्येव चत्त्वारि महान्त्येतानि चत्त्वारि

(१) कः प्रजापतिः, तस्मै हितानि क्यानि ।

महतां महान्त्येव चत्वारि व्रतान्न्येतानि चत्वारि व्रतानां व्रतान्न्येतान्न्येव चत्वारि क्क्यान्न्येतानि चत्वारि क्क्यानां क्क्यान्न्येत ऽएव चत्वारोऽर्क्का ऽएते चत्वारोऽर्क्काणामर्क्काः ॥ ४ ॥ अथ ह वै यत्तदुवाच वेत्थार्क्कमिति पुरुषꣳ हैव तदुवाच । वेत्थार्क्कपर्ण्णे ऽइति कर्ण्णौ हैव तदुवाच वेत्थार्क्कपुष्पे इत्यऽक्षिणी हैव तदुवाच वेत्यार्क्ककोश्श्याविति नासिके हैव तदुवाच वेत्थार्क्कसमुद्गावित्योष्ठौ हैव तदुवाच वेत्थार्क्कधाना ऽइति दन्तान्हैव तदुवाच वेत्थार्क्काष्ठीलामिति जिह्वाꣳ हैव तदुवाच वेत्थार्क्कमूलमित्यन्नꣳ हैव तदुवाच स ऽएषोऽग्निरर्क्को यत्पुरुषः स यो हैतमेवमग्निमर्क्कम्पुरुषमुपास्तेऽयमहमग्निरर्क्कोऽस्मीति विद्यया हैवास्यैष ऽआत्मन्नग्निरर्क्कश्चितो भवति ॥ ५ ॥ (A)

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ यजुषो विधायकब्राह्मणयोर्निर्वचनम् ]

( तत्राधिदैवाध्यात्मभेदेनार्थप्रतिपादनम्, उपनिषदः स्तुतिः, तत्स्वरूपनिर्वचनादि, उपांश्वनुष्ठानप्रतिपादनं च )

अयं वाव यजुर्योऽयम्पवते । एष हि यन्नेवेदꣳ सर्व्वं जनयत्येतं यन्तमिदमनु प्रजायते तस्माद्वायुरेव यजुः ॥ १ ॥ अयमेवाकाशो जूः । यदिदमन्तरिक्षमेतꣳ ह्याकाशमनु जवते तदेतद्यजुर्व्वायुश्चान्तरिक्षञ्च यच्च जूश्च तस्माद्यजुरेष ऽएव यदेष ह्येति तदेतद्यजुर्ऋक्सामयोः

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. ४. ४ ।

प्प्रतिष्ठितमृक्कसामे वहतस्तस्म्मात्समानैरेवाद्ध्वर्य्युर्ग्ग्रहैः कर्म्म करोत्यन्न्यान्न्यन्न्यानि स्तुतशस्त्राणि भवन्ति यथा पूर्व्वाभ्याꣳ स्यत्त्वापराभ्यान्धावयेत्तादृक्तत् ॥ २ ॥ अग्निरेव पुरः । अग्निꣳ हि पुरस्कृत्त्येमाः प्रजा ऽउपासत ऽआदित्य ऽएव चरणं यदा ह्येवैष ऽउदेत्यथेदꣳ सर्व्वञ्चरति तदेतद्यजुः सपुरश्चरणमधिदेवतम् ॥ ३ ॥ अथाद्ध्यात्मम् । प्प्राण ऽएव यजुः प्प्राणो हि यन्नेवेदꣳ सर्व्वञ्जनयति प्प्राणं यन्तमिदमनु प्प्रजायते तस्म्मात्प्राण ऽएव यजुः ॥ ४ ॥ अयमेवाकाशो जूः । योऽयमन्तरात्मन्नाकाश ऽएतꣳ ह्याकाशमनु जवते तदेतद्यजुः प्प्राणश्चाकाशश्च यच्च जूश्च तस्म्माद्यजुः प्प्राण ऽएव यत्प्राणो ह्येति ॥ ५ ॥* अन्नमेव यजुः । अन्नेन हि जायतेऽन्नेन जवते तदेतद्यजुरन्ने प्प्रतिष्ठितमन्नँ वहति तस्म्मात्समान ऽएव प्प्राणेऽन्न्यदन्न्यदन्नन्धीयते ॥ ६ ॥ मन ऽएव पुरः । मनो हि प्प्रथमम्प्राणानाञ्चक्षुरेव चरणञ्चक्षुषा ह्ययमात्मा चरति तदेतद्यजुः सपुरश्चरणमधिदेवतञ्चाद्ध्यात्मञ्च प्प्रतिष्ठितꣳ स यो हैतदेवं यजुः सपुरश्चरणमधिदेवतञ्चाद्ध्यात्मञ्च प्प्रतिष्ठितं वेद ॥ ७ ॥ अरिष्टो हैवानार्त्तः । स्वस्ति यज्ञस्योदृचमश्नुतेऽथो[2] स्वानाꣳ श्रेष्ठः पुर ऽएता भवत्यन्नादोऽधिपतिर्य ऽएवं वेद ॥ ८ ॥ य ऽउ हैवँविदꣳ स्वेषु प्प्रतिप्प्रति-

(१) 'ज' पुस्तके 'स्यत्वा' इत्यत्र 'स्यन्त्वा' इति पाठो दृश्यते । स तु न समीचीनः, 'स्यन्दू' प्रस्रवणे इत्यस्मात्, क्त्वा प्रत्यये, उदित्वादिडभावपक्षे 'क्त्वि स्कन्दिस्यन्दोः' ( पा० ६।४।३१ ) इति नकारलोपात् ।

* अत्र शतम् ५३०० ।

(२) 'ज' पुस्तके 'ऽथो' नास्ति ।

र्बुभूषति न हैवालम्भार्य्येभ्यो भवत्यथ य ऽएवैतमनुभवति यो वै तमनु भार्य्यान्बुभूर्षति स हैवालम्भार्य्येभ्यो भवति ॥ ९ ॥ तदेतज्ज्येष्ठम्ब्रह्म । न ह्येतस्म्मात्किञ्चन ज्यायोऽस्ति ज्येष्ठो ह वै श्श्रेष्ठः स्वानाम्भवति य ऽएवं वेद ॥ १० ॥ तदेतद्ब्रह्मापूर्व्वमपरवत् । स यो हैतदेवम्ब्रह्मापूर्व्वमपरवद्वेद न हास्म्मात्कश्चन श्श्रेयान्त्समानेषु भवति श्श्रेयाᳫँसः श्रेयाᳫँसो हैवास्म्मादपरपुरुषा जायन्ते तस्म्माद्योऽस्म्माज्ज्यायान्त्स्याद्दिशोऽस्म्मात्पूर्व्वा ऽइत्युपासीत तथो हैनन्न हिनस्ति ॥ ११ ॥ तस्य वा ऽएतस्य यजुषः । रस ऽएवोपनिषत्तस्म्माद्यावन्नमात्रेण यजुषाद्ध्वर्य्युर्ग्ग्रहङ्गृह्णाति स ऽउभे स्तुतशस्त्रे ऽअनुविभवत्युभे स्तुतशस्त्रे ऽअनुव्व्यश्श्नुते तस्म्माद्यावन्नमात्रऽइवान्नस्य रसः सर्व्वमन्नमवति सर्व्वमन्नमनुव्व्येति ॥ १२ ॥ तृप्तिरेवास्य गतिः । तस्म्माद्यदान्नस्य तृप्यत्यथ स गत ऽइव मन्यत ऽआनन्द ऽएवास्य विज्ञानमात्मानन्दात्मानो हैव सर्व्वे देवाः सा हैषैव देवानामद्धाविद्या स ह स न मनुष्यो य ऽएवंविद्देवानाᳫँ हैव स एकः ॥ १३ ॥ एतद्ध स्म्म वै तद्विद्वान्प्रियव्रतो रौहिणायन ऽआह । वायुं वान्तमानन्दस्त ऽआत्मेतो वा वाहीतो वेति स ह स्म्म तथैव वाति तस्म्माद्यान्देवेष्वाशिषमिच्छेदेतेनैवोपतिष्ठेतानन्दो व ऽआत्मासौ मे कामः स मे समृद्ध्यतामिति सᳫँ हैवास्म्मै स काम ऽऋद्ध्यते यत्कामो भवत्येताᳫँ ह वै तृप्तिमेताङ्गतिमेतमानन्दमेतमात्मानमभिसम्भवति य ऽएवं वेद

॥ १४ ॥ तदेतद्यजुरुपाᳬंशुअनिरुक्तम् । प्राणो वै यजुरुपाᳬंश्वायतनो वै प्राणस्तद्य ऽएनन्निब्र्ब्रुवन्तम्ब्रूयाद्-निरुक्तान्देवतान्निरवोचत्प्राण ऽएनᳪं हास्यतीति तथा हैव स्यात् ॥ १५ ॥ तस्य ह यो निरुक्तमाविर्ब्भावं वेद । आविर्ब्भवति कीर्त्या यशसोपाᳬंशु यजुषाद्ध्रुर्ग्गृह्णाति गृहीतᳪं सन्न ऽआविर्ब्भवत्युपाᳬंशु यजुषाग्निञ्चिनोति चितᳪं सञ्चित ऽआविर्ब्भवत्युपाᳬंशु यजुषा हविर्न्निर्वपति शृतन्निष्ठितमाविर्ब्भवत्येवं य्यत्किञ्चोपाᳬंशु करोति कृतन्निष्ठितमाविर्ब्भवति तस्य ह य ऽएतमेवन्निरुक्तमाविर्ब्भावं वेदाविर्ब्भवति कीर्त्या यशसा ब्ब्रह्मवर्च्चसेन क्षिप्प्रऽउ हैवाविदङ्गच्छति स ह यजुरेव भवति यजुषैनमाचक्षते ॥१६॥(B)

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ प्रजापतेर्भोक्तृत्वमाहवनीयरूपत्वम्, रुक्मपुरुषयोरिन्द्राग्न्यात्मना स्तुत्यादिकञ्च ]

प्रजापतिं विस्रस्तम् । यत्र देवाः समस्कुर्वँस्तमुखायां य्योनौ रेतो भूतमसिञ्चन्योनिर्वा ऽउखा तस्मा ऽएतᳬंसंवत्सरेऽन्नᳪं समस्कुर्वन्योऽयमग्निश्चितस्तदात्मना पर्य्यदधुस्तदात्मना परिहितमात्मैवाभवत्तस्मादन्नमात्मना परिहितमात्मैव भवति ॥ १ ॥ तथैवैतद्यजमानः । आत्मा-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ३. ५ ।

नमुखायां ऽयोनौ रेतो भूतꣳ सिञ्चति योनिर्वा ऽउखा तस्म्मा ऽएतत्सँव्वत्सरेऽन्नꣳ संस्करोति योऽयमग्निश्चित-स्तदात्मना परिदधाति तदात्मना परिहितमात्मैव भवति तस्म्मादन्नमात्मना परिहितमात्मैव भवति ॥ २ ॥ तन्नि-दधाति । व्वौषडिति व्वौगिति वा ऽएष षडितीदꣳ षट्चिति-कमन्नङ्कृत्वास्म्मा ऽअपिदधात्यात्मसम्मितं ऽयदु वा ऽआत्मसम्मितमन्नन्तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ ३ ॥ स ऽएष ऽएवार्क्कः । यमे-तमत्राग्निमाहरन्ति तस्यैतदन्नङ्क्यं ऽयोऽयमग्निश्चित-स्तदुक्थँ ऽयजुष्ट्ट ऽएष ऽएव महाँस्तस्यैतदन्नं व्रतन्तन्म-हाव्रतꣳ सामत ऽएष ऽउ ऽएवोक्क्थस्यैतदन्नन्थन्तदुक्क्थ-मृक्कस्तदेतदेकꣳ स त्रेधा क्ख्यायते ॥ ४ ॥ अथेन्द्राग्नी वा ऽअसृज्ज्येताम् । ब्रह्म च क्षत्रञ्चाग्निरेव ब्रह्मेन्द्रः क्षत्रन्तौ सृष्टौ नानैवास्तान्तावब्रूतान्न वा ऽइत्थꣳ सन्तौ शक्ष्यावः प्प्रजाः प्प्रजनयितुमेकꣳ रूपमुभावसावेति तावेकꣳ रूपमुभावभवताम् ॥ ५ ॥ तौ यौ ताविन्द्राग्नी । एतौ तौ रुक्क्मश्च पुरुषश्च रुक्क्म ऽएवेन्द्रः पुरुषोऽग्निस्तौ हिरण्मयौ भवतो ज्ज्योतिर्वै हिरण्यञ्ज्योतिरिन्द्राग्नी ऽअमृतꣳ हिरण्यममृतमिन्द्राग्नी ॥ ६ ॥ तावेताविन्द्राग्नी ऽएव चिन्वन्ति । यद्धि किञ्चेष्टकमग्निरेव तत्तस्म्मात्त-दग्निना पचन्ति यद्धि किञ्चाग्निना पचन्त्यग्निरेव तदथ यत्पुरीषꣳ स ऽइन्द्रस्तस्म्मात्तदग्निना न पचन्ति नेदग्नि-रेवासन्नेन्द्र ऽइति तस्म्मादेताविन्द्राग्नी ऽएव चितौ ॥ ७ ॥

अथ यश्चितेऽग्निर्निधीयते । तदेकꣳ रूपमुभौ भवतस्तस्मात्तावेतेनैव रूपेणेमाः प्रजाः प्रजनयतः सैषैकैवेष्टकाग्निरेव तामेष सर्वोऽग्निरभिसम्पद्यते सैवेष्टकासम्पत्तदेतदेकमेवाक्षरं वौगिति तदेष सर्वोऽग्निरभिसम्पद्यते सैवाक्षरसम्पत् ॥ ८ ॥ तद्धैतत्पश्यन्नृषिरभ्यनूवाद । भूतम्भविष्यत्प्रस्तौमि महद्ब्रह्मैकमक्षरम्बहु ब्रह्मैकमक्षरमित्त्येतद्ध्येवाक्षरꣳ सर्वे देवाः सर्वाणि भूतान्न्यभिसम्पद्यन्ते तदेतद्ब्रह्म च क्षत्रञ्चाग्निरेव ब्रह्मेन्द्रः क्षत्रमिन्द्राग्नी वै विश्वे देवा विडु विश्वे देवास्तदेतद्ब्रह्म क्षत्रं विट् ॥ ९ ॥ एतद्ध स्म वै तद्विद्वाञ्छ्यापर्णः सायकायन ऽआह । यद्वै मऽइदङ्कर्म्म समाप्स्यत ममैव प्रजा सल्ल्वानाꣳ राजानोऽभविष्यन्मम ब्राह्मणा मम वैश्या यत्तु मऽएतावत्कर्म्मणः समापि तेन मऽउभयथा सल्ल्वान्प्रजातिरेक्ष्यतऽइति स ऽएष ऽएव श्रीरेष यश ऽएषोऽन्नादः ॥ १० ॥ एतद्ध वै तच्छाण्डिल्यः । वामकक्षायणाय प्रोच्योवाच श्रीमान्यशस्व्यन्नादो भविष्यसीति श्रीमान्ह वै यशस्व्यन्नादो भवति य ऽएवं वेद ॥ ११ ॥ स ऽएषोऽग्निः प्रजापतिरेव । ते देवा ऽएतमग्निम्प्रजापतिꣳ सँस्कृत्याथास्मा ऽएतत्सँवत्सरेऽन्नꣳ समस्कुर्वन्य ऽएष महाव्रतीयो ग्रहः B ॥ १२ ॥ तमद्ध्वर्य्युर्ग्रहेण गृह्णाति । यद्गृह्णाति तस्माद् ग्रहस्त-

B कात्यायनमहर्षिणापि महाव्रतैकनियतग्रहणं सूत्रितम्, 'महाव्रतमग्निष्टोमः' 'प्राजापत्य उपालम्भ्यः' 'ग्रहं गृह्णाति ''विन ऽइन्द्र'' वाचस्पतिं विश्वकर्मन्निति'' वा', का० श्रौ० सू० अ० १३ । कं० २ सू० २१, २२, २३ ।

स्मिन्नुद्गाता महाव्रतेन रसन्दधाति सर्व्वाणि हैतानि सामानि यन्महाव्रतन्तदस्मिन्त्सर्वैः सामभी रसन्दधाति तस्मिन्न्होता महतोक्थेन रसन्दधाति सर्व्वा हैता ऽऋचो यन्महदुक्थन्तदस्मिन्त्सर्व्वाभिर्ऋग्भी रसन्दधाति ॥ १३ ॥ ते यदा स्तुवते यदानुशꣳसति । अथास्मिन्नेतं वषट्कृते जुहोति वौगिति वा ऽएष षडितीदꣳ षड्विधमन्न- ङ्कृत्वास्मा ऽअपिदधात्यात्मसम्मितं य्यदु वा ऽआत्मसम्मि- तमन्नन्तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ १४ ॥ स ऽएष ऽएवार्क्कः । योऽयमग्नि- श्चितस्तस्यैतदन्नङ्क्यमेष महाव्रतीयो ग्ग्रहस्तदुक्थꣳ य्यजुष्ट ऽएष ऽएव महाꣳस्तस्यैतदन्नं व्रतन्तन्महाव्रतꣳ सामत ऽएष ऽउ ऽएवोक्थस्यैतदन्नं* थन्तदुक्थमृक्तस्तदेतदेकꣳ स त्रेधा ख्यायते ॥ १५ ॥ स ऽएष सँव्वत्सरः प्प्रजापति- रग्निः । तस्यार्द्धमेव सावित्राण्यर्द्धं वैश्वकर्म्मणान्यष्टा- वेवास्य कलाः सावित्राण्यष्टौ वैश्वकर्म्मणान्यथ यदेत- दन्तरेण कर्म्म क्रियते स ऽएव सप्तदशः प्प्रजापतिर्य्यो वै कला मनुष्याणामक्षरन्तद्देवानाम् ॥ १६ ॥ तद्द्वे लोमेति द्वे ऽअक्षरे । त्वगिति द्वे ऽअसृगिति द्वे मेद ऽइति द्वे माꣳसमिति द्वे स्नावेति द्वे ऽअस्थीति द्वे मज्जेति द्वे ताः षोडश कला ऽअथ य ऽएतदन्तरेण प्प्राणः सञ्चरति स ऽएव सप्तदशः प्प्रजापतिः ॥ १७ ॥ तस्मा ऽएतस्मै प्प्राणाय । एताः षोडश कला ऽअन्नमभिह-

---

* 'ग-ज' पुस्तकयोः 'एवोक्तदन्नं' इति पाठः समुपलभ्यते ।

रन्ति ता यदानभिहर्त्तुन्ध्रियन्तेऽथैता ऽएव जग्ध्वोत्क्रामति तस्म्मादु हैतदशिशिषतस्तृप्रमिव भवति प्प्राणैरद्यमानस्य तस्म्मादु हैतदुपतापी कृश ऽइव भवति प्प्राणैर्हि जग्धो भवति ॥ १८ ॥ तस्म्मा ऽएतस्म्मै सप्तदशाय प्प्रजापतये । एतत्सप्तदशमन्नᳩ समस्कुर्वन्न्य ऽएष सौम्म्योऽध्वरोऽथ या ऽअस्य ताः षोडश कला ऽएते ते षोडशर्त्त्विजस्त-स्म्मान्न सप्तदशमृत्त्विजङ्कुर्वीत नेदतिरेचयानीत्यथ य ऽएवान्न रसो या ऽआहुतयो हूयन्ते तदेव सप्तदशमन्नम् ॥ १९ ॥ ते यदा स्तुवते यदानुशᳩसति । अथास्मिन्नेतं वषट्कृते जुहोति वौगिति वा ऽएष षडितीदᳩ षड्विध-मन्नङ्कृत्वास्म्मा ऽअपिदधात्यात्मसम्मितं ह्यदु वा ऽआत्म-सम्मितमन्नन्तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्य-त्कनीयो न तदवति ॥ २० ॥ स ऽएष ऽएवार्क्कः । योऽय-मग्निश्चितस्तस्यैतदन्नङ्क्यमेष सौम्म्योऽध्वरस्तदुक्क्यᳩ ह्यजुष्ट ऽएष ऽएव महाँस्तस्यैतदन्नं व्रतन्तन्महाव्रतᳩ सामत ऽएष ऽउ ऽएवोक्क्तस्यैतदन्नन्थन्तदुक्क्थमृक्कस्तदेत-दुक्कᳩ स त्रेधा ख्यायते स ऽएतेनान्नेन सहोर्द्ध्व ऽउदक्रामत्स यः स ऽउदक्रामदसौ स ऽआदित्योऽथ येन तेनान्नेन सहोद-क्रामदेष स चन्द्रमाः ॥ २१ ॥ स ऽएष ऽएवार्क्को य ऽएष तपति । तस्यैतदन्नङ्क्यमेष चन्द्रमास्तदुक्क्यᳩ ह्यजुष्ट ऽएष ऽएव महाँस्तस्यैतदन्नं व्रतन्तन्महाव्रतᳩ सामत ऽएष

(१) "षोडशर्त्विजो ब्रह्मोद्गातृ-होत्रध्वर्यु-ब्राह्मणाच्छᳩसि-प्रस्तोतृ-मैत्रावरुण-प्रतिप्रस्थातृ-पोतृ-प्रतिहर्त्रच्छावाक-नेष्टृग्नीत्-सुब्रह्मण्य-ग्रावस्तदुन्नेतॄन् वृणीते" का० श्रौ० सू० ७. १. ७।

ऽउ ऽएवोक्क्तस्यैतदन्नन्थन्तदुक्क्थमृक्कस्तदेतदेकꣳ स त्रेधा ख्यायत ऽइत्यधिदेवतम् ॥ २२ ॥ अथाध्यात्मम् । प्प्राणो वा ऽअर्क्कस्तस्यान्नमेव क्कयन्तदक्कर्यं य्यजुष्टꣳ प्प्राण ऽएव महाँस्तस्यान्नमेव व्रतन्तन्महाव्रतꣳ सामतꣳ प्प्राण ऽउ ऽएवोक्क्तस्यान्नमेव थन्तदुक्क्थमृक्कस्तदेतदेकꣳ स त्रेधा ख्यायते स ऽएष ऽएवैषोऽधिदेवतमयमध्यात्मम् ॥ २३ ॥ (B)

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ १०९ ॥



सँव्वत्सरो वै प्प्रजापतिरग्निꣳ । सोमो राजा चन्द्रमाꣳ स ह स्वयमेवात्मानम्प्रोचे यज्ञवचसे राजस्तम्बायनाय यावन्ति वाव मे ज्योतीꣳषि तावत्यो मऽइष्टका इति ॥ १ ॥ तस्य वा ऽएतस्य सँव्वत्सरस्य प्प्रजापतेꣳ । सप्त च शतानि विꣳशतिश्चाहोरात्राणि ज्योतीꣳषि ता ऽइष्टकाꣳ षष्टिश्च त्रीणि च शतानि परिश्रितꣳ षष्टिश्च त्रीणि च शतानि यजुष्मत्यꣳ सोऽयꣳ सँव्वत्सरꣳ प्प्रजापतिꣳ सर्व्वाणि भूतानि ससृजे यच्च प्प्राणि यच्चाप्प्राणमुभयान्देवमनुष्यान्त्स सर्व्वाणि भूतानि सृष्ट्वा रिरिचान ऽइव मेने स मृत्योर्ब्बिभयाञ्चकार ॥ २ ॥ स हेक्षाञ्चक्रे । कथ-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ४. १ ।

न्न्वहमिमानि सर्वाणि भूतानि पुनरात्मन्नावपेय पुनरात्मन्दधीय कथन्न्वहमेवैषाᳫं सर्वेषाम्भूतानाम्पुनरात्मा स्यामिति ॥ ३ ॥ स द्वेधात्मानं व्यौहत् । षष्टिश्च त्रीणि च शतान्न्यन्न्यतरस्येष्टका ऽअभवन्नेवमन्न्यतरस्य स न व्याप्नोत् ॥ ४ ॥ त्रीनात्मनोऽकुरुत । तिस्रस्तिस्रोऽशीतय ऽएकैकस्येष्टका ऽअभवन्त्स नैव व्याप्नोत् ॥ ५ ॥ चतुर ऽआत्मनोऽकुरुत । अशीतिशतेष्टकान्त्स नैव व्याप्नोत् ॥ ६ ॥ पञ्चात्मनोऽकुरुत । चतुश्चत्त्वारिᳫंशᳫंशतमेकैकस्येष्टका ऽअभवन्त्स नैव व्याप्नोत् ॥ ७ ॥ षडात्मनोऽकुरुत । विᳫंशतिशतेष्टकान्त्स नैव व्याप्नोन्न सप्तधा व्यभवत् ॥ ८ ॥ अष्टावात्मनोऽकुरुत । नवतीष्टकान्त्स नैव व्याप्नोत् ॥ ९ ॥ नवात्मनोऽकुरुत । अशीतीष्टकान्त्स नैव व्याप्नोत् ॥ १० ॥ दशात्मनोऽकुरुत । द्वासप्ततीष्टकान्त्स नैव व्याप्नोन्नैकादशधा व्यभवत् ॥ ११ ॥ द्वादशात्मनोऽकुरुत । षष्टीष्टकान्त्स नैव व्याप्नोन्न त्रयोदशधा व्यभवन्न चतुर्दशधा ॥ १२ ॥ पञ्चदशात्मनोऽकुरुत । अष्टाचत्त्वारिᳫंशदिष्टकान्त्स नैव व्याप्नोत् ॥ १३ ॥ षोडशात्मनोऽकुरुत । पञ्चचत्त्वारिᳫंशदिष्टकान्त्स नैव व्याप्नोन्न सप्तदशधा व्यभवत् ॥ १४ ॥ अष्टादशात्मनोऽकुरुत । चत्त्वारिᳫंशदिष्टकान्त्स नैव व्याप्नोन्नैकान्नविᳫंशतिधा व्यभवत् ॥ १५ ॥ विᳫंशतिमात्मनोऽकुरुत । षट्त्रिᳫंशदिष्टकान्त्स नैव व्याप्नोन्नैक-

विꣳशतिधा व्यभवन्न द्वाविꣳशतिधा न त्रयोविꣳ-
शतिधा ॥ १६ ॥ चतुर्विꣳशतिमात्मनोऽकुरुत । त्रिꣳश-
दिष्टकान्त्सोऽत्रातिष्ठत पञ्चदशे व्यूहे तद्यत्पञ्चदशे व्यू-
हेऽतिष्ठत तस्मात्पञ्चदशापूर्य्यमाणस्य रूपाणि पञ्च-
दशापक्षीयमाणस्य ॥ १७ ॥ अथ यच्चतुर्विꣳशतिमा-
त्मनोऽकुरुत । तस्माच्चतुर्विꣳशत्यर्द्धमासः सँवत्सरः
स ऽएतैश्चतुर्विꣳशत्या त्रिꣳशदिष्टकैरात्मभिर्न्न व्यभवत्स
पञ्चदशाह्नो रूपाण्यपश्यदात्मनस्तन्वो मुहूर्त्ताँल्लोक-
म्पृणाः पञ्चदशैव रात्रेस्तद्यन्मुहु त्रायन्ते तस्मान्मुहूर्त्ता
ऽअथ यत्क्षुद्राः सन्त ऽइमाँल्लोकानापूरयन्ति तस्माल्लो-
कम्पृणाः ॥ १८ ॥ एष वा ऽइदꣳ सर्वम्पचति । अहोरात्रैर-
र्द्धमासैर्म्मासैर्ऋतुभिः सँवत्सरेण तदमुना पक्वमयम्पचति
पक्वस्य पक्तेति ह स्माह भारद्वाजोऽग्निममुना हि
पक्वमयम्पचतीति ॥ १९ ॥ तानि सँवत्सरे । दश च
सहस्राण्यष्टौ च शतानि समपद्यन्त सोऽत्रातिष्ठत दशसु
च सहस्रेष्वष्टासु च शतेषु ॥ २० ॥ अथ सर्वाणि भूतानि
पर्य्यैक्षत् । स त्रय्यामेव विद्यायाꣳ सर्वाणि भूतान्यपश्य-
दत्र हि सर्वेषाञ्छन्दसामात्मा सर्वेषाꣳ स्तोमानाꣳ सर्वे-
षाम्प्राणानाꣳ सर्वेषान्देवानामेतद्वा ऽअस्त्येतद्ध्यमृतं य-
द्ध्यमृतन्तद्ध्यस्त्येतदु तद्यन्मर्त्यम् ॥ २१ ॥ स ऽऐक्षत
प्रजापतिः । त्रय्यां वाव विद्यायाꣳ सर्वाणि भूतानि हन्त
त्रयीमेव विद्यामात्मानमभिसंस्करवा ऽइति ॥ २२ ॥ स
ऽऋचो व्यौहत् । द्वादश बृहतीसहस्राण्येतावत्यो हर्च्चो

याः प्प्रजापतिसृष्टास्ताँस्त्रिᳪंशत्तमे व्यूहे पङ्क्तिष्ष्वतिष्ठन्त ता यस्त्रिᳪंशत्तमे व्यूहेऽतिष्ठन्त तस्मात्त्रिᳪंशन्मासस्य रात्रयोऽथ यत्पङ्क्तिषु तस्मात्पाङ्क्तः* प्रजापतिस्ता ऽअष्टाशतᳪं शतानि पङ्क्तयोऽभवन् ॥ २३ ॥ अथेतरौ व्वेदौ व्यौहत् । द्वादशैव बृहतीसहस्राण्यष्टौ यजुषाञ्चत्वारि साम्नामेतावद्धैतयोर्व्वेदयोर्यत्प्रजापतिसृष्टन्तौ त्रिᳪंशत्तमे व्यूहे पङ्क्तिष्ष्वतिष्ठेतान्तौ यस्त्रिᳪंशत्तमे व्यूहेऽतिष्ठेतान्तस्मात्त्रिᳪंशन्मासस्य रात्रयोऽथ यत्पङ्क्तिषु तस्मात्पाङ्क्तः प्रजापतिस्ता ऽअष्टाशतमेव शतानि पङ्क्तयोऽभवन् ॥ २४ ॥ ते सर्वे त्रयो व्वेदाः । दश च सहस्राण्यष्टौ च शतान्न्यशीतीनामभवन्त्स मुहूर्त्तेन-मुहूर्त्तेनैवाशीतिमाप्नो-न्मुहूर्त्तेन-मुहूर्त्तेनाशीतिः समपद्यत ॥ २५ ॥ स ऽएषु त्रिषु लोकेषूखायाम् । योनौ रेतो भूतमात्मानमसिञ्च च्छन्दोमयᳪं स्तोममयम्प्राणमयन्देवतामयन्तस्यार्द्धमासे प्प्रथम ऽआत्मा समस्क्रियत दवीयसि परो दवीयसि परः सँव्वत्सर ऽएव सर्व्वः कृत्स्नः समस्क्रियत ॥ २६ ॥ तद्यत्परिश्रितमुपाधत्त । तद्रात्रिमुपाधत्त तदनु पञ्चदश मुहूर्त्तान्मुहूर्त्ताननु पञ्चदशाशीतीरथ यद्य-जुष्मतीमुपाधत्त तदहरुपाधत्त तदनु पञ्चदश मुहूर्त्ता-न्मुहूर्त्ताननु पञ्चदशाशीतीरेवमेतान्त्रयीं व्विद्यामात्मन्नाव-पतात्मन्नकुरुत सोऽत्रैव सर्व्वेषाम्भूतानामात्माभवच्छन्दोमय स्तोममयः प्राणमयो देवतामयः स ऽएतन्मय ऽएव

* पाङ्क्तत्वं नाम पञ्चसंख्यावत्वम्, पञ्चपदा पङ्क्तिरिति संख्यासाम्यात्' प्रजापतेर्लोमत्वङ्मांसास्थिमज्जात्मानः पञ्चचितय इति षष्ठे प्रतिपादितम् । (१) 'ग' 'ज' पुस्तकयोः 'नाशी०'

भूत्वोर्द्ध्व ऽउदक्क्रामत्स यः स ऽउदक्क्रामदेष स चन्द्रमाः ॥ २७ ॥ तस्यैषा प्प्रतिष्ट्ठा । य ऽएष तपत्त्येतस्म्माद्देवाद्ध्यचीयतैतस्मिन्नद्ध्यचीयतात्त्मन ऽएवैनन्तन्निरमिमीतात्मनः प्प्राजनयत् ॥ २८ ॥ स यदग्निञ्चेष्ष्यमाणो दीक्षते । यथैव तत्प्रजापतिरेषु त्रिषु लोकेषूखायां योनौ रेतो भूतमात्मानमसिञ्चदेवमेवैष ऽएतदात्मानमुखायां योनौ रेतो भूतः सिञ्चति च्छन्दोमयथ्ठं स्तोममयम्प्राणमयन्देवतामयन्तस्यार्द्धमासे प्प्रथम ऽआत्मा संस्क्रियते द्वीयसि परो दवीयसि परः सँव्वत्सर ऽएव सर्व्वः कृत्स्नः संस्क्रियते ॥ २९ ॥ तद्यत्परिश्रितमुपधत्ते । तद्रात्रिमुपधत्ते तदनु पञ्चदश मुहूर्त्तान्मूहूर्त्ताननु पञ्चदशाशीतीरथ यद्यजुष्मतीमुपधत्ते तदहरुपधत्ते तदनु पञ्चदश मुहूर्त्तान्मुहूर्त्ताननु पञ्चदशाशीतीरेवमेतान्त्रयीं विद्यामात्मन्नावपत ऽआत्मन्कुरुते सोऽत्रैव सर्व्वेषाम्भूतानामात्मा भवति च्छन्दोमय स्तोममयः प्प्राणमयो देवतामयः स ऽएतन्मय ऽएव भूत्वोर्द्ध्व ऽउत्क्रामति ॥ ३० ॥ तस्यैषा प्प्रतिष्ट्ठा । य ऽएष तपत्त्येतस्म्माद्देवाधिचीयत ऽएतस्मिन्नधिचीयत ऽआत्मन ऽएवैनन्तन्निर्म्मितीत ऽआत्मनः प्प्रजनयति स यदैवंविदस्म्माल्लोकात्प्रैत्यथैतमेवात्मानमभिसम्भवति च्छन्दोमयथ्ठं स्तोममयम्प्राणमयन्देवतामयः स ऽएतन्मय ऽएव भूत्वोर्द्ध्व ऽउत्क्रामति य ऽएवं विद्वानेतत्कर्म्म कुरुते यो वैतदेवं व्वेद ॥३१॥(E)

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. ४. २ ।

[ संवत्सररूपप्रजापतेर्मृत्य्वन्तरूपत्वम् , तद्रूपोपासनस्य फलम्, अग्निचयनस्यामृतलक्षणं फलं, परिश्रिद्यजुष्मतीलोकम्पृणेष्टकानां संख्या च ]

एष वै मृत्युर्यत्सँवत्सरः । एष हि मर्त्यानामहोरात्राभ्यामायुः क्षिणोत्यथ म्रियन्ते तस्मादेष ऽएव मृत्युः स यो हैतम्मृत्युꣳ सँवत्सरं वेद न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुः क्षिणोति सर्वꣳ हैवायुरेति ॥ १ ॥ एष ऽउ ऽएवान्तकः । एष हि मर्त्यानामहोरात्राभ्यामायुषोऽन्तङ्गच्छत्यथ म्रियन्ते तस्मादेष ऽएवान्तकः स यो हैतमन्तकम्मृत्युꣳ सँवत्सरं वेद न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुषोऽन्तङ्गच्छति सर्वꣳ हैवायुरेति ॥ २ ॥ ते देवाः । एतस्मादन्तकान्मृत्योः सँवत्सरात्प्रजापतेर्बिभयाञ्चक्रुर्यद्वै नोऽयमहोरात्राभ्यामायुषोन्तन्न गच्छेदिति ॥ ३ ॥ त ऽएतान्यज्ञक्रतूँस्तेनिरे । अग्निहोत्रन्दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धꣳ सौम्यमध्वरन्त ऽएतैर्यज्ञक्रतुभिर्यजमानानामृतत्वमानशिरे ४ ते हाप्यग्निञ्चिक्यिरे । ते ऽपरिमिता ऽएव परिश्रित ऽउपदधुरपरिमिता यजुष्मतीरपरिमिता लोकम्पृणा यथेदमप्येतर्ह्येक ऽउपदधतीति देवा ऽअकुर्वन्निति ते ह नैवामृतत्वमानशिरे ॥ ५ ॥ तेऽर्चन्तः श्राम्यन्तश्चेरुः । अमृतत्वमवरुरुत्समानास्तान्ह[1] प्रजापतिरुवाच न वै मे सर्वाणि रूपाण्युपधत्थे[2]ति वैव रेचयथ न वाभ्यापयथ तस्मान्नामृता भवथेति ॥ ६ ॥ ते होचुः । तेभ्यो वै

(१) अवरोद्धुकामाः । (२) 'ग' 'ज' पुस्तकयोः 'धत्था' इति पाठः समुपलभ्यते ।

त्रीणि च शतानि सँव्वत्सरस्य रात्रयस्तासामेकविꣳशतिङ्गार्ह-पत्ये परिश्रयति द्वाभ्यान्नाशीतिन्धिष्ण्येषु द्वे ऽएक-षष्टे शते ऽआहवनीये ॥ १३ ॥ अथ यजुष्मत्यः दर्भ-स्तम्बो लोगेष्टकाः पुष्करपर्णꣳ रुक्मपुरुषौ स्रुचौ स्वय-मातृण्णा दूर्वेष्टका द्वियजू रेतःसिचौ विश्वज्ज्योतिर्ऋत-व्ये ऽअषाढा कूर्म्म ऽउलूखलमुसले ऽउखा पञ्च पशुशी-र्षाणि पञ्चदशापस्याः पञ्च छन्दस्याः पञ्चाशत्प्राणभृतस्ता द्वाभ्यान्न शतम्प्रथमा चितिः ॥ १४ ॥ [अर्धप्रपाठः ४५] अथ द्वितीया । पञ्चाश्विन्न्यो द्वे ऽऋतव्ये पञ्च वैश्वदेव्यः पञ्च प्प्राणभृतः पञ्चापस्या ऽएकया न विꣳशतिर्व्वयस्यास्ता ऽएकचत्त्वारिꣳशद्द्वितीया चितिः ॥ १५ ॥ अथ तृतीया । स्वयमातृण्णा पञ्च दिश्या विश्वज्ज्योतिश्चतस्र ऽऋ-तव्या दश प्प्राणभृतः षट्त्रिꣳशच्छन्दस्याश्चतुर्दश वाल-खिल्ल्यास्ता ऽएकसप्ततिस्तृतीया चितिः ॥ १६ ॥ अथ चतुर्थी । अष्टादश प्प्रथमा ऽअथ द्वादशाऽथ सप्तदश ताः सप्तचत्त्वारिꣳशच्चतुर्थी चितिः ॥ १७ ॥ अथ पञ्चमी । पञ्चासपत्नाश्चत्त्वारिꣳशद्विराज ऽएकया न त्रिꣳशत्स्तोमभागाः पञ्च नाकसदः पञ्च पञ्चचूडा ऽएक-त्रिꣳशच्छन्दस्या ऽअष्टौ गार्हपत्त्या चितिरष्टौ पुनश्चिति-र्ऋतव्ये विश्वज्ज्योतिर्व्विमण्णी च स्वयमातृण्णा चाश्मा पृश्निरुर्परिश्चिते ऽग्निर्न्निधीयते ता ऽअष्टात्रिꣳशꣳ शत-म्पञ्चमी चितिः ॥ १८ ॥ ताः सर्व्वाः पञ्चभिर्न्न चत्त्वारि शतानि । ततो याः षष्टिश्च त्रीणि च शतान्न्यहर्ल्लोकास्ता

ऽअह्नामेव साप्तिः क्रियतेऽह्नाम्प्रतिमा ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि सँव्वत्सरस्याहान्यथ याः षट्त्रिंशत्पुरीषन्तासाꣳ षट्त्रिंशी ततो याश्चतुर्विंशतिरर्द्धमासलोकास्ता ऽअर्द्धमासानामेव साप्तिः क्रियतेऽर्द्धमासानाम्प्रतिमाथ या द्वादश मासलोकास्ता मासानामेव साप्तिः क्रियते मासानाम्प्रतिमा ता ऽउ द्वे-द्वे सहर्त्तुलोका ऽऋतूनाम-शून्यतायै ॥ १९ ॥ अथ या लोकम्पृणाः । मुहूर्त्तलो-कास्ता मुहूर्तानामेव साप्तिः क्रियते मुहूर्त्तानाम्प्रतिमा ता दश च सहस्राण्यष्टौ च शतानि भवन्त्येतावन्तो हि सँव्वत्सरस्य मुहूर्त्तास्तासामेकविंशतिङ्गार्हपत्य ऽउपदधाति द्वाभ्यान्नाशीतिन्धिष्ण्येष्वाहवनीय ऽइतरा ऽएतावन्ति वै सँव्वत्सरस्य रूपाणि तान्यस्यात्राप्तान्युपहितानि भवन्ति ॥ २० ॥ तद्धैके । आहवनीय ऽएवैताꣳ सम्पदमा-पिपयिषन्त्यन्ये वा ऽएतेऽग्नयश्चिताः किमन्यत्रोपहि-ता ऽइह सम्पश्येमेति न तथा कुर्याद्दश वा ऽएतानग्नी-श्चिनुतेऽष्टौ धिष्ण्यानाहवनीयञ्च गार्हपत्यञ्च तस्मादा-हुर्विराडग्निरिति दशाक्षरा हि विराट् तानु सर्वानेकमिवै-वाचक्षतेऽग्निरित्येतस्य ह्येवैतानि सर्वाणि रूपाणि यथा सँव्वत्सरस्याहोरात्राण्यर्द्धमासा मासा ऽऋतव ऽएवमस्यै-तानि सर्वाणि रूपाणि ॥ २१ ॥ ते ये ह तथा कुर्वन्ति एतानि हास्य ते रूपाणि बहिर्द्धा कुर्वन्त्यथो पापवस्यस-ङ्कुर्वन्ति क्षत्राय विशम्प्रतिप्रतिनीम्प्रत्युद्यामिनीमाग्नी-

द्वितीये वा ऽअश्मानम्पृश्निमुपदधात्यथ तं सम्पश्यति किमु तं सम्पश्यन्नितरा न सम्पश्येद्येनैव निर्ऋतिम्पाप्मानमपहते स ऽएकादशः ॥ २२ ॥ तदाहुः । कथमु ता ऽअत्र न सम्पश्यतीति न ह्येना ऽअभिजुहोत्याहुत्या वा ऽइष्टका सर्वा कृत्स्ना भवतीति ॥ २३ ॥ तदाहुः । कथमस्यैता ऽअनतिरिक्ता ऽउपहिता भवन्तीति वीर्य्यं वा ऽअस्यैता ऽअनतिरिक्तं वै पुरुषं वीर्य्यंः स ह वा ऽएतं सर्वङ्कृत्स्नम्प्रजापतिं संस्करोति य ऽएवं विद्वानेतत्कर्म्म कुरुते यो वैतदेवं वेद ॥ २४ ॥ (A)

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ संवत्सररूपाग्नेः, तदवयवानाञ्च सहस्ररूपत्वेनोपासनम् , तत्फलञ्च ]

प्रजापतिं वै प्रजाः सृजमानम् । पाप्मा मृत्युरभिपरिजघान स तपोऽतप्यत सहस्रं सँवत्सरान्पाप्मानं विजिहासन् ॥१॥ तस्य तपस्तेपानस्य । एभ्यो लोमगर्त्तेभ्य ऽऊर्द्ध्वानि ज्योतींष्यायँस्तद्यानि तानि ज्योतींष्येतानि तानि नक्षत्राणि यावन्त्येतानि नक्षत्राणि तावन्तो लोमगर्त्ता यावन्तो लोमगर्त्तास्तावन्तः सहस्रसँवत्सरस्य मुहूर्त्ताः ॥ २ ॥ स सहस्रतमे सँवत्सरे । सर्व्वोऽत्यपवत स यः सोऽत्यपवतायमेव स वायुर्य्योऽयम्पवतेऽथ यन्तम्पाप्मानमत्यपवतेदन्तच्छरीरं ऽउ तस्मै मनुष्यो यः सहस्रसँवत्सरमवरुन्धीत विद्यया ह वा ऽएवंवित्सहस्रसँवत्सर-

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ४. ३ ।

मवरुन्द्धे ॥ ३ ॥ सर्वा ऽएवैता ऽइष्टकाः साहस्रीरुपासीत। रात्रिसहस्रेण रात्रिसहस्रेणैकैकाम्परिश्रितः सम्पन्नामुपासीताहःसहस्रेणाहःसहस्रेणैकैकामहर्भाजमर्द्धमाससहस्रेणार्द्धमाससहस्रेणैकैकामर्द्धमासभाजम्माससहस्रेण माससहस्रेणैकैकाम्मासभाजमृतुसहस्रेणर्त्तुसहस्रेणैकैकामृतुभाजम्मुहूर्त्तसहस्रेण मुहूर्त्तसहस्रेणैकैकाम्मुहूर्त्तभाजः सँवत्सरसहस्रेण सँवत्सरन्ते य ऽएतमेवमग्निः सँवत्सरेण सम्पन्नं विदुः सहस्रतमीँ हास्य ते कलां विदुरथ य ऽएनमेवन्न विदुर्न्न हास्य ते सहस्रतमीश्चन कलां विदुरथ य ऽएवैवं वेद यो वैतत्कर्म्म कुरुते स हैवैतः सर्वङ्कृत्स्नम्प्राजापत्यमग्निमाप्नोति यम्प्रजापतिराप्नोत्तस्मादेवंवित्तप ऽएव तप्येत यदु ह वा ऽएवंवित्तपस्तप्यत ऽआमैथुनात्सर्वः हास्य तत्स्वर्ग्गँल्लोकमभिसम्भवति ॥ ४ ॥ तदेतदृचाभ्युक्तम् । 'न मृषाश्रान्तं यदवन्ति देवा' ऽइति न हैवैवं विदुषः किञ्चन मृषाश्रान्तम्भवति तथो हास्यैतत्सर्वन्देवा ऽअवन्ति ॥ ५ ॥ (B)

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ व्यष्टिरूपाग्निविषयोपासना ]

अथादेशा ऽउपनिषदाम् । वायुरग्निरिति ह शाकायनिन ऽउपासत ऽआदित्योऽग्निरित्यु हैक ऽआहुरथ ह स्माह श्रौमत्यो वा हालिङ्गवो वा वायुरेवाग्निस्तस्माद्य-

(१) ऋ० सं० अ० २, अ० ४ व० २२ ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा—का० श० १२. ४. ४।

दैवाद्ध्रुवाद्ध्रुरुत्तमङ्कर्म्म करोत्यथैतमेवाप्येतीति ॥ १ ॥ शाट्यायनिरु ह स्माह । सँवत्सर ऽएवाग्निस्तस्य वसन्तः शिरो ग्ग्रीष्मो दक्षिणः पक्षो वर्षा ऽउत्तरः शरदृतुर्म्मध्यमात्मा हेमन्तशिशिरावृतू पुच्छम्प्रतिष्ठा वागग्निः प्प्राणो वायुश्चक्षुरादित्यो मनश्चन्द्रमाः श्रोत्रन्दिश ऽआपो मिथुनन्तपः प्रतिष्ठा मासाः पर्वाण्यर्द्धमासा नाड्योऽहोरात्राणि रजतसुवर्णानि पत्राणि स ऽएवन्देवानप्येतीति सँवत्सरोऽग्निरित्यु हैव विद्यादेतन्मयो भवतीति त्वेव विद्यात् ॥ २ ॥ चेलक ऽउ ह स्माह शाण्डिल्यायनः । इम ऽएव लोकास्तिस्रः स्वयमातृण्णवत्यश्चितयो यजमानश्चतुर्थी सर्वे कामाः पञ्चमीमाँश्च लोकान्त्संस्कुर्व ऽआत्मानञ्च सर्वाँश्च कामानित्येव विद्यादिति ॥ ३ ॥ (C)

चतुर्थाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥



[ त्रयीमयादित्येऽग्न्युपासना ]

तस्य वा ऽएतस्याग्नेः । वागेवोपनिषद्वाचा हि चीयत ऽऋचा यजुषा साम्नेति नु दैव्याऽथ यन्मानुष्या वाचाहेतीदङ्कुरुतेतीदङ्कुरुतेति तदु ह तया चीयते ॥ १ ॥ सा वा ऽएषा वाक्त्रेधाविहिता । ऋचो यजूंषि सामानि तेनाग्निस्त्रेधाविहित ऽएतेन हि त्रयेण चीयतेऽप्यहैव-

(C) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा—का० श० १२. ४. ५।

न्त्रेधाविहित ऽइत्थꣳ ह त्वेवापि त्रेधाविहितो यदस्मिँ-स्त्रेधाविहिता ऽइष्टका ऽउपधीयन्ते पुन्नाम्न्य स्त्रीनाम्न्यो नपुꣳसकनाम्न्यस्त्रेधाविहितान्यु ऽएवेमानि पुरुषस्याङ्गानि पुन्नामानि स्त्रीनामानि नपुꣳसकनामानि ॥ २ ॥ * सो-ऽयमात्मा त्रेधाविहित एव । सोऽनेन त्रेधाविहितेना-त्मनैतन्त्रेधाविहितन्दैवममृतमाप्नोति ता ऽउ सर्वा ऽइष्टका ऽइत्येवाचक्षते नेष्टक ऽइति नेष्टकमिति वाचो रूपेण वाग्घ्येवैतत्सर्वं यत्स्त्री पुमान्नपुꣳसकं वाचा ह्येवैतत्सर्वं-माप्तन्तस्मादेना 'ऽअङ्गिरस्वद्ध्रुवा सीदे'त्येव सर्वाः साद-यति नाङ्गिरस्वद्ध्रुवः सीदेति नाङ्गिरस्वद्ध्रुवꣳ सीदेति वाचꣳ ह्येवैताꣳ संस्कुरुते ॥ ३ ॥ सा या सा वागसौ स ऽआदित्यः । स ऽएष मृत्युस्तद्यत्किञ्चार्वाचीनमादित्या-त्सर्वन्तन्मृत्युनाप्तꣳ स यो हैनमतोऽर्वाचीनञ्चिनुते मृत्युना हैनꣳ स ऽआप्तञ्चिनुते मृत्यवे ह स ऽआत्मा-नमपिदधात्यथ य ऽएनमत ऽऊर्द्ध्वञ्चिनुते स पुनर्म्मृत्यु-मपजयति विद्यया ह वा ऽअस्यैषोऽत ऽऊर्द्ध्वञ्चितो भवति ॥ ४ ॥ सा वा ऽएषा वाक्त्रेधाविहिता । ऋचो यजूꣳषि सामानि मण्डलमेवर्चोऽर्च्चिः सामानि पुरुषो यजूꣳष्यथैतदमृतं यदेतदर्च्चिर्द्दीप्यत ऽइदन्तत्पुष्करपर्णन्त-द्यत्पुष्करपर्णमुपधायाग्निञ्चिनोत्येतस्मिन्नेवैतदमृत ऽऋङ्-

* अत्र शतम् ५४०० ।

(1) शु० य० सं० अ० 12 क० ५३ ।

मयं ऋग्यजुर्म्मयᳬ सामम्मयमात्मानᳬ संस्कुरुते सोऽमृतो भवति ॥ ५ ॥ (D)

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ सूर्यमण्डलार्चिःपुरुषत्रयस्याधिदैवाधियज्ञाध्यात्मपरत्वेनार्थप्रतिपादनम् ]

यदेतन्मण्डलन्तपति । तन्महदुक्थन्ता ऽऋचᳬ स ऽऋचाँल्लोकोऽथ यदेतदर्च्चिर्दीप्यते तन्महाव्रतन्तानि सामानि स साम्नाँल्लोकोऽथ य ऽएष ऽएतस्मिन्मण्डले पुरुषᳬ सोऽग्निस्तानि यजूᳬषि स यजुषाँल्लोकᳬ ॥ १ ॥ सैषा त्र्य्येव विद्या तपति । तद्धैतदप्यविद्वाᳬस ऽआहुस्त्रयी वा ऽएषा विद्या तपतीति वाग्घैव तत्पश्यन्ती वदति ॥ २ ॥ स ऽएष ऽएव मृत्युᳬ । य ऽएष ऽएतस्मिन्मण्डले पुरुषोऽथैतदमृतं यदेतदर्च्चिर्दीप्यते तस्मान्मृत्युर्न्न म्रियतेऽमृते ह्यन्तस्तस्मादु न दृश्यतेऽमृते ह्यन्तᳬ ॥ ३ ॥ तदेष श्लोको * भवति । अन्तरम्मृत्योरमृतमित्यवरᳬ ह्येतन्मृत्योरमृतम्मृत्यावमृतमाहितमित्येतस्मिन्हि पुरुष ऽएतन्मण्डलम्प्रतिष्ठितन्तपति मृत्युर्विवस्वन्तं वस्त ऽइत्यसौ वा ऽआदित्यो विवस्वानेष ह्यहोरात्रे विवस्ते तमेष वस्ते सर्वतो ह्यनेन परिवृतो मृत्योरात्मा विवस्वतीत्येतस्मिन्हि मण्डल ऽएतस्य पुरुषस्यात्मैतदेष श्लोको भवति ॥ ४ ॥ तयोर्वा ऽएतयोᳬ । उभयोरेतस्य चार्च्चिष ऽएतस्य च

(D) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा—का० श० १२. ५. १ ।

* श्लोकः—मन्त्रः पादबद्धत्वसाम्यात् ।

"अर्द्धो वा एष आत्मनो यत्पत्नी"ति तैत्तिरीयश्रुतेः ॥

पुरुषस्यैतन्न्मण्डलम्प्रतिष्ठा तस्म्मान्नमहदुक्क्थम्परस्म्मै न शꣳसेन्नेदेताम्प्रतिष्ठाञ्छिनदा ऽइत्त्येताꣳ ह स प्प्रतिष्ठाञ्छिन्ते यो महदुक्क्थम्परस्म्मै शꣳसति तस्म्मादुक्क्थशꣳसम्भूयिष्ठम्परिचक्षते प्प्रतिष्ठाच्छिन्नो हि भवतीत्त्यधिदेवतम् ॥ ५ ॥ अथाधियज्ञम् । यदेतन्न्मण्डलन्तपत्त्ययꣳ स रुक्क्मोऽथ यदेतदर्च्चिर्द्दीप्प्यत ऽइदन्तत्पुष्क्करपर्णमापो ह्येताꣳ आपꣳ पुष्क्करपर्णमथ य ऽएष ऽएतस्म्मिन्न्मण्डले पुरुषोऽयमेव स योऽयꣳ हिरण्मयꣳ पुरुषस्तदेतद्वैतत्त्रयꣳ सꣳस्कृत्त्येहोपधत्ते तद्यज्ञस्यैवानु सꣳस्थामूर्द्ध्वमुत्क्रामति तदेतमप्प्येति य ऽएष तपति तस्म्मादग्ग्निन्नाद्रियेत परिहन्तुममुत्र ह्येष तदा भवतीत्त्यु ऽएवाधियज्ञम् ॥ ६ ॥

अथाद्ध्यात्मम् । यदेतन्न्मण्डलन्तपति यश्च्चैष रुक्क्म ऽइदन्तच्छुक्क्लमक्षन्नथ यदेतदर्च्चिर्द्दीप्प्यते यच्चैतत्पुष्क्करपर्णमिदन्तत्कृष्ण्णमक्षन्नथ य ऽएष ऽएतस्म्मिन्न्मण्डले पुरुषो यश्च्चैष हिरण्मयꣳ पुरुषोऽयमेव स योऽयन्दक्षिणेऽक्षन्न्पुरुषꣳ ॥ ७ ॥ स ऽएष ऽएव लोकम्पृणा । तामेष सर्व्वोऽग्ग्निरभिसम्पद्यते तस्यैतन्न्मिथुनं योऽयꣳ सव्व्येऽक्षन्न्पुरुषोऽर्द्धमु हैतदात्त्मनो यन्न्मिथुनं यदा वै सह मिथुनेनाथ सर्व्वोऽथ कृत्स्नꣳ कृत्स्नतायै तद्यत्ते द्वे भवतो द्वन्द्वꣳ हि मिथुनम्प्रजननन्तस्म्माद्द्वे-द्वे लोकम्पृणे ऽउपधीयेते तस्म्मादु द्वाभ्यान्द्वाभ्याश्चितिम्प्रणयन्ति ॥ ८ ॥

स ऽएष ऽएवेन्द्रꣳ । योऽयन्दक्षिणेऽक्षन्न्पुरुषोऽथेयमिन्द्राणी ताभ्यान्देवा ऽएतां विधृतिमकुर्व्वन्न्नासिकान्तस्म्माज्जायाया

ऽअन्ते नाश्नीयाद्व्रीरुर्षवाङ्हास्म्माज्जायते व्व्रीरुर्षवन्तमु ह सा जनयति यस्या ऽअन्ते नाश्नाति ॥ ९॥ तदेतद्देवव्व्रतꣳ राजन्न्यबन्धवो मनुष्ष्याणामनुतमाङ्गोपायन्ति तस्म्मादु तेषु व्व्रीरुर्षवान्जायतेऽमृतवाका व्वयसाꣳ साक्षिप्प्रश्श्येनञ्ज-नयति ॥ १० ॥ तौ हृदयस्याकाशम्प्रत्यवेत्य । मिथुनी-भवतस्तौ यदा मिथुनस्यान्तङ्गच्छतोऽथ हैतत्पुरुषꣳ स्वपिति तद्यथा हैवेदम्मानुषस्य मिथुनस्यान्तङ्गत्वासंव्विद-ऽइव भवत्येवꣳ हैवैतदसंव्विद ऽइव भवति दैवꣳ ह्येतन्न्मि-थुनम्परमो ह्येष ऽआनन्दः ॥ ११ ॥ तस्म्मादेवंव्वित्स्वप्प्यात् । लोक्क्यꣳ हैते ऽएव तद्देवते मिथुनेन प्प्रियेण धाम्म्ना समर्द्धयति तस्म्मादु ह स्वपन्तन्धुरेव न बोधयेन्नेदेते देवते मिथुनीभवन्त्यौ हिनसानीति तस्म्मादु हैतत्सुषुप्षुषꣳ श्लेष्म्मणमिव मुखम्भवत्येते ऽएव तद्देवते रेतꣳ सिञ्चत-स्तस्म्माद्रेतस ऽइदꣳ सर्व्वꣳ सम्भवति यदिदङ्किञ्च ॥ १२ ॥ स ऽएष ऽएव मृत्युꣳ । य ऽएष ऽएतस्मिन्न्मण्डले पुरुषो यश्च्चायन्दक्षिणेऽक्षन्न्पुरुषस्तस्य हैतस्य हृदये पादावतिहतौ तौ हैतदाच्छिद्योत्क्रामति स यदोत्क्रामत्यथ हैतत्पुरुषो म्म्रियते तस्म्मादु हैतत्प्रेतमाहुराच्छेद्यस्येति ॥ १३ ॥ एष ऽउ ऽएव प्प्राणꣳ । एष हीमाꣳ सर्वाꣳ प्रजाꣳ प्रणयति तस्यैते प्प्राणाꣳ स्वाꣳ स यदा स्वपित्यथैनमेते प्प्राणाꣳ स्वा ऽअपियन्ति तस्म्मात्स्वाप्प्ययꣳ स्वाप्प्ययो ह वै तꣳ स्वप्प्न ऽइत्याचक्षते परोऽक्षम्परोऽक्षकामा हि देवाꣳ ॥ १४ ॥ स ऽएतैꣳ सुप्प्तꣳ । न कस्य चन व्वेद न मनसा सङ्कल्प-

यति* न व्वाचान्नस्य रसं व्विजानाति न प्प्राणेन गन्धं व्विजानाति न चक्षुषा पश्श्यति न श्श्रोत्रेण शृणोत्येतॐ ह्येते तदापीता भवन्ति स ऽएष ऽएकः सन्प्रजासु बहुधा व्व्याविष्टस्तस्मादेका सती लोकम्पृणा सर्व्वमग्निमनुविभवत्यथ यदेक ऽएव तस्मादेका ॥ १५ ॥ तदाहुः । एको मृत्युर्ब्बहवा ३ इत्येकश्च बहवश्चेति ह ब्ब्रूयाद्यदहासावमुत्र तेनैकोऽथ यदिह प्प्रजासु बहुधा व्व्याविष्टस्तेनो बहवः ॥ १६ ॥ तदाहुः । अन्तिके मृत्युर्दूरा ऽइत्यन्तिके च दूरे चेति ह ब्ब्रूयाद्यदहायमिहाद्ध्यात्मन्तेनान्तिकेऽथ यदसावमुत्र तेनो दूरे ॥ १७ ॥ तदेष श्श्लोको भवति । अन्ने भात्यपश्श्रितो रसानाॐ संक्षरेऽमृत ऽइति यदेतन्मण्डलन्तपति तदन्नमथ य ऽएष ऽएतस्मिन्मण्डले पुरुषः सोऽत्ता स ऽएतस्मिन्नन्नेऽपश्श्रितो भातीत्यधिदेवतम् ॥ १८ ॥ अथाद्ध्यात्मम् । इदमेव शरीरमन्नमथ योऽयन्दक्षिणेऽक्षन्पुरुषः सोऽत्ता स ऽएतस्मिन्नन्नेऽपश्श्रितो भाति ॥ १९ ॥ तमेतमग्निरित्यद्ध्वर्य्यव ऽउपासते । यजुरित्येष हीदꣳ सर्वं य्युनक्ति सामेति च्छन्दोगा ऽएतस्मिन्हीदꣳ सर्व्वꣳ समानमुक्क्थमिति बह्वृचा† ऽएष हीदꣳ सर्व्वमुत्थापयति यातुरिति यातुविद ऽएतेन हीदꣳ सर्व्वं य्यतं व्विषमिति सर्प्पाः सर्प्प ऽइति सर्प्पविद ऽऊर्ग्गिति देवा रयिरिति मनुष्ष्या मायेत्यसुराः स्वधेति पितरो देवजन ऽइति देवजनविदो रूपमिति गन्धर्व्वा

* सङ्कल्पोऽध्यवसायः ।

† बह्व्य ऋचो येषां ते बह्वृचा ऋग्वेदिनः ।

गन्ध ऽइत्यप्सरसस्तं यथा यथोपासते तदेव भवति तद्धैनान्भूत्वावति तस्मादेतमेवंविदसवैरेवैतैरुपासीत सर्वᳩ हैतद्भवति सर्वᳩ हैनमेतद्भूत्वावति ॥ २० ॥ स ऽएष त्रीष्टकोऽग्निः । ऋगेका यजुरेका सामैका तद्यामेतामृचोपदधाति रुक्म ऽएव तस्या ऽआयतनमथ यां यजुषा पुरुष ऽएव तस्या ऽआयतनमथ याᳩ साम्ना पुष्करपर्णमेव तस्या ऽआयतनमेवन्त्रीष्टकः ॥ २१ ॥ ते वा ऽएते । उभे ऽएष च रुक्म ऽएतच्च पुष्करपर्णमेतम्पुरुषमपीत ऽउभे ह्यृक्सामे यजुरपीत ऽएवम्वेकेष्टकः ॥ २२ ॥ स ऽएष ऽएव मृत्युः । य ऽएष ऽएतस्मिन्मण्डले पुरुषो यश्चायन्दक्षिणेऽक्षन्पुरुषः स ऽएष ऽएवंविद ऽआत्मा भवति स यदैवंविदस्माल्लोकात्प्रैत्यथैतमेवात्मानमभिसम्भवति सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति ॥ २३ ॥ (A)

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या ॥ ९१ ॥



[ सकलपुरुषवर्त्तिमनोवाक्प्राणचक्षुःश्रोत्रकर्माग्निवृत्तिसम्पाद्य-
चित्याग्निविषयोपासनाकथनम् ]

नेव वा ऽइदमग्रेऽसदासीन्नेव सदासीत् । आसीदिव वा ऽइदमग्रे नेवासीत्तद्ध तन्मन ऽएवास ॥ १ ॥ तस्मा-

(A) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा—का० श० १२. ५. २ ।

देतदृषिणाऽभ्यनूक्तम् । नासदासीन्नो सदासीत्तदानी-
मिति नैव हि सन्मनो नैवासत् ॥ २ ॥ तदिदम्मनः
सृष्टमाविरबुभूषत् । निरुक्ततरम्मूर्त्ततरन्तदात्मानमन्वै-
च्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिꣳशतꣳ सहस्राण्यप-
श्यदात्मनोऽग्नीनर्क्कान्मनोमयान्मनश्चितस्ते मनसैवा-
धीयन्त मनसाचीयन्त मनसैषु ग्ग्रहा ऽअगृह्णन्त मनसा-
स्तुवत मनसा शꣳसन्यत्किञ्च यज्ञे कर्म्म क्क्रियते यत्किञ्च
यज्ञियङ्कर्म्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनो-
मयमक्क्रियत तद्यत्किञ्चेमानि भूतानि मनसा सङ्कल्पयन्ति
तेषामेव सा कृतिस्तानेवादधति ताँश्चिन्वन्ति तेषु ग्ग्रहा-
न्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै मनसो
विभूतिरेतावती विसृष्टिरेतावन्मनः षट्त्रिꣳशत्सहस्रा-
ण्यग्ग्नयोऽर्क्कास्तेषामेकैक ऽएव तावान्यावानसौ पूर्वः
॥ ३ ॥ तन्मनो वाचमसृजत । सेयं वाक्सृष्टाविर-
बुभूषन्निरुक्ततरा मूर्त्ततरा सात्मानमन्वैच्छत्सा तपोऽ-
तप्यत सा प्रामूर्च्छत्सा षट्त्रिꣳशतꣳ सहस्राण्यपश्य-
दात्मनोऽग्नीनर्क्कान्वाङ्मयान्वाक्चितस्ते वाचैवाधीयन्त
वाचाचीयन्त वाचैषु ग्ग्रहा ऽअगृह्णन्त वाचास्तुवत वाचाशꣳ-
सन्यत्किञ्च यज्ञे कर्म्म क्क्रियते यत्किञ्च यज्ञियङ्कर्म्म
वाचैव तेषु तद्वाङ्मयेषु वाक्चित्सु वाङ्मयमक्क्रियत तद्य-
त्किञ्चेमानि भूतानि वाचा वदन्ति तेषामेव सा कृति-
स्तानेवादधति ताँश्चिन्वन्ति तेषु ग्ग्रहान्गृह्णन्ति तेषु
स्तुवते तेषु शꣳसन्त्येतावती वै वाचो विभूतिरेतावती

व्विसृष्टिरेतावती वाक्षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्ते-षामेकैक ऽएव तावान्यावानसौ पूर्वः ॥ ४ ॥ सा व्वाक्प्रा-णमसृजत । सोऽयम्प्राणः सृष्ट ऽआविरबुभूषन्निरुक्ततरो मूर्त्ततरः स ऽआत्मानमन्वैच्छत्स तपोऽतप्यत स प्प्रामू-र्च्छत्स षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्का-न्प्राणमयान्प्राणचितस्ते प्प्राणेनैवाधीयन्त प्प्राणेना-चीयन्त प्राणेनैषु ग्ग्रहा ऽअगृह्णन्त प्प्राणेनास्तुवत प्प्राणे-नाशꣳसन्यत्किञ्च यज्ञे कर्म्म क्क्रियते यत्किञ्च यज्ञियङ्कर्म्म प्प्राणेनैव तेषु तत्प्राणमयेषु प्प्राणचित्सु प्प्राणमयमक्क्रियत तद्यत्किञ्चेमानि भूतानि प्प्राणेन प्प्राणन्ति तेषामेव सा कृतिस्तानेवादधति ताँश्चिन्वन्ति तेषु ग्ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै प्प्राणस्य व्विभूतिरेतावती व्विसृष्टिरेतावान्प्राणः षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषा-मेकैक ऽएव तावान्यावानसौ पूर्वः ॥ ५ ॥ स प्प्राणश्च-क्षुरसृजत । तदिदञ्चक्षुः सृष्टमाविरबुभूषन्निरुक्ततरम्मूर्त्त-तरन्तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्-त्रिꣳशतꣳसहस्राण्यपश्यदात्मनोऽग्नीनर्काँश्चक्षुर्म्मयाँश्च-क्षुश्चितस्ते चक्षुषैवाधीयन्त चक्षुषाचीयन्त चक्षुषैषु ग्ग्रहा ऽअगृह्णन्त चक्षुषास्तुवत चक्षुषाशꣳसन्यत्किञ्च यज्ञे कर्म्म क्क्रियते यत्किञ्च यज्ञियङ्कर्म्म चक्षुषैव तेषु तच्चक्षुर्म्मयेषु चक्षुश्चित्सु चक्षुर्म्मयमक्क्रियत तद्यत्किञ्चेमानि भूतानि चक्षुषा पश्यन्ति तेषामेव सा कृतिस्तानेवादधति ताँश्चि-न्वन्ति तेषु ग्ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येता-

वती वै चक्षुषो विभूतिरेतावती विसृष्टिरेतावच्चक्षुः षट्-त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक ऽएव तावान्यावा-नसौ पूर्वः ॥ ६ ॥ तच्चक्षुः श्रोत्रमसृजत । तदिदं श्रो-त्रं सृष्टमाविरबुभूषन्निरुक्ततरम्मूर्त्ततरन्तदात्मानमन्वैच्छ-त्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिंशतं सहस्राण्यप-श्यदात्मनोऽग्नीनर्काञ्छ्रोत्रमयाञ्छ्रोत्रचितस्ते श्रोत्रेणैवा-धीयन्त श्रोत्रेणाचीयन्त श्रोत्रेणैषु ग्रहा ऽअगृह्यन्त श्रोत्रेणास्तुवत श्रोत्रेणाशंसन्यत्किञ्च यज्ञे कर्म्म क्रियते यत्किञ्च यज्ञियङ्कर्म्म श्रोत्रेणैव तेषु तच्छ्रोत्रमयेषु श्रोत्रचित्सु श्रोत्रमयमक्रियत तद्यत्किञ्चेमानि भूतानि श्रोत्रेण शृण्वन्ति तेषामेव सा कृतिस्तानेवादधति ताँश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शंस-न्त्येतावती वै श्रोत्रस्य विभूतिरेतावती विसृष्टिरेतावच्छ्रोत्रं षट्त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक ऽएव तावा-न्यावानसौ पूर्वः ॥ ७ ॥ तच्छ्रोत्रङ्कर्म्मासृजत । तत्प्रा-णानभिसममूर्च्छदिमं सन्देहमन्नसन्देहमकृत्स्नं वै कर्म्म-ऽर्त्ते प्राणेभ्योऽकृत्स्ना ऽउ वै प्राणा ऽऋते कर्म्मणः ॥ ८ ॥ तदिदङ्कर्म्म सृष्टमाविरबुभूषत् । निरुक्ततरम्मूर्त्त-तरन्तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्-त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्कर्म्ममया-न्कर्म्मचितस्ते कर्म्मणैवाधीयन्त कर्मणाचीयन्त कर्म्मणैषु ग्रहा ऽअगृह्यन्त कर्म्मणास्तुवत कर्म्मणाशंसन्यत्किञ्च यज्ञे कर्म्म क्रियते यत्किञ्च यज्ञियङ्कर्म्म कर्म्मणैव तेषु

तत्कर्म्ममयेषु कर्म्मचित्सु कर्म्ममयमक्रियत तद्यत्किञ्चेमानि भूतानि कर्म्म कुर्वते तेषामेव सा कृतिस्तानेवादधति ताँश्चि-न्न्वन्ति तेषु ग्ग्रहान्गृह्णन्ति तेषु शꣳसन्त्येतावती वै कर्म्मणो विभूतिरेतावती विसृष्टिरेतावत्कर्म्म षट्त्रिꣳशत्सहस्राण्यग्ग्नयोऽर्क्कास्तेषामेकैक ऽएव तावान्यावानसौ पूर्वः ॥ ९ ॥ तत्कर्म्माग्ग्निमसृजत । आविस्तरां वा ऽअग्निः कर्म्मणः कर्म्मणा ह्येनञ्जनयन्ति कर्म्मणेन्धते ॥ १० ॥ सोऽयमग्निः सृष्ट ऽआविरबुभूषत् । निरुक्ततरो मूर्त्ततरः स ऽआत्मा-नमन्वैच्छत्स तपोऽतप्यत स प्रामूर्च्छत्स षट्त्रिꣳशतꣳ सह-स्राण्यपश्यदात्मनोऽग्नीनर्क्कानग्निमयानग्निचितस्तेऽग्नि-नैवाधीयन्ताग्निनाचीयन्ताग्निनैषु ग्रहा ऽअगृह्यन्ताग्निना-स्तुवताग्निनाशꣳसन्यत्किञ्च यज्ञे कर्म्म क्रियते यत्किञ्च यज्ञियङ्कर्म्माग्निनैव तेषु तदग्निमयेष्वग्निचित्स्वग्निमय-मक्रियत तद्यत्किञ्चेमानि भूतान्यग्निमिन्धते तेषामेव सा कृतिस्तानेवादधति ताँश्चिन्न्वन्ति तेषु ग्ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वा ऽअग्ग्नेर्व्विभूतिरे-तावती विसृष्टिरेतावानग्निः षट्त्रिꣳशत्सहस्राण्यग्ग्नयो-ऽर्क्कास्तेषामेकैक ऽएव तावान्यावानसौ पूर्वः ॥ ११ ॥ ते हैते विद्याचित ऽएव । तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्न्वन्त्यपि स्वपते विद्यया हैवैत ऽएवंविदश्चिता भवन्ति ॥ १२ ॥ (A)

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



(A) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा—का० श० १२. ५. ३ ।

[ भूम्यादिलोकत्रयादित्यनक्षत्रछन्दःसंवत्सरात्माचित्याग्निविषयोपासनाप्रतिपादनम् ]

अयं वाव लोक ऽएषोऽग्निश्चितः । तस्याप ऽएव परिश्रितो मनुष्या यजुष्मत्य ऽइष्टकाः पशवः सूददोहा ऽओषधयश्च वनस्पतयश्च पुरीषमाहुतयः समिधोऽग्निर्लोकम्पृणा तद्वा ऽएतत्सर्वमग्निमेवाभिसम्पद्यते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ १ ॥ अन्तरिक्षꣳ हत्वेवैषोग्निश्चितः । तस्य द्यावापृथिव्योरेव सन्धिः परिश्रितः परेण हान्तरिक्षन्द्यावापृथिवी सन्धत्तस्ताः परिश्रितो वयाꣳसि यजुष्मत्य ऽइष्टका वर्षꣳ सूददोहा मरीचयः पुरीषमाहुतयः समिधो वायुर्लोकम्पृणा तद्वा ऽएतत्सर्वं वायुमेवाभिसम्पद्यते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ २ ॥ द्यौर्हैत्वेवैषोऽग्निश्चितः । तस्याप ऽएव परिश्रितो यथा ह वा ऽइदङ्कोशः समुब्जित ऽएवमिमे लोका ऽअप्स्वन्तस्तद्या ऽइमाँल्लोकान्परेणापस्ताः परिश्रितो देवा यजुष्मत्य ऽइष्टका यदेवैतस्मिँल्लोकेऽन्नन्तत्सूददोहा नक्षत्राणि पुरीषमाहुतयः समिध ऽआदित्यो लोकम्पृणा तद्वा ऽएतत्सर्वमादित्यमेवाभिसम्पद्यते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ ३ ॥ आदित्यो ह त्वेवैषोऽग्निश्चितः । तस्य दिश ऽएव परिश्रितस्ताः

षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यन्दिशः समन्तम्परियन्ति रश्मयो यजुष्मत्य ऽइष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यस्य रश्मयस्तद्यत्परिश्रित्सु यजुष्मतीः प्रत्यर्प्पयति रश्मीँ स्तद्दिक्षु प्रत्यर्प्पयत्यथ यदन्तरा दिशश्च रश्मीँश्च तत्सूददोहा ऽअथ यद्दिक्षु च रश्मिषु चान्नन्तत्पुरीषन्ता ऽआहुतयस्ताः समिधोऽथ यद्दिश ऽइति च रश्मय ऽइति चाख्यायते तल्लोकम्पृणा तद्द्वा ऽएतत्सर्वन्दिश ऽइति चैव रश्मय ऽइति चाख्यायते तत्सर्वोऽग्निर्ल्लोकम्पृणा-मभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूत-मेतत्सर्वमभिसम्पद्यते ॥ ४ ॥ नक्षत्राणि ह त्वेवैषोऽग्नि-श्चितः। तानि वा ऽएतानि सप्तविंशतिर्न्नक्षत्राणि सप्तविंशतिः सप्तविंशतिर्होपनक्षत्राण्येकैकन्नक्षत्रमनु-पतिष्ठन्ते तानि सप्त च शतानि विंशतिश्चाधि षट्त्रिंशत्ततो यानि सप्त च शतानि विंशतिश्चेष्टका ऽएव ताः षष्टिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्योऽथ यान्यधि षट्त्रिंशत्स त्रयोदशो मासः स ऽआत्मा त्रिंशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर ऽएव षट्त्रिंश्यौ तद्यत्ते द्वे भवतो द्व्यक्षरं हि शिरोऽथ यदन्तरा नक्षत्रे तत्सूद-दोहा ऽअथ यन्नक्षत्रेष्वन्नन्तत्पुरीषन्ता ऽआहुतयस्ताः समिधोऽथ यन्नक्षत्राणीत्याख्यायते तल्लोकम्पृणा तद्द्वा

रुन्द्धेऽथो यत्किञ्च भूतेन च भविष्यता च जय्यꣳ सर्वꣳ हैव तज्जयति ॥ १३ ॥ ब्रह्माग्नेयः पुरोडाशः । स यो ह वै ब्रह्माग्नेयः पुरोडाश इति वेदाव ह ब्रह्म रुन्द्धेऽथो यत्किञ्च ब्रह्मणा जय्यꣳ सर्वꣳ हैव तज्जयति ॥ १४ ॥ क्षत्रमुपाꣳशुयाजः । स यो ह वै क्षत्रमुपाꣳशुयाज इति वेदाव ह क्षत्रꣳ रुन्द्धेऽथो यत्किञ्च क्षत्रेण जय्यꣳ सर्वꣳ हैव तज्जयति तद्यदुपाꣳशुयाजं कुर्वन्त्येके नैके तस्मादुच्चैश्चोपाꣳशु च क्षत्रायाचक्षते ॥ १५ ॥ विडुत्तरः पुरोडाशः । स यो ह वै विडुत्तरः पुरोडाश इति वेदाव ह विशꣳ रुन्द्धेऽथो यत्किञ्च विशा जय्यꣳ सर्वꣳ हैव तज्जयति तद्यदाग्नेयश्च पुरोडाश उपाꣳशुयाजश्च पूर्वौ भवतस्तस्मादुभे ब्रह्म च क्षत्रञ्च विशि प्रतिष्ठिते ॥ १६ ॥ राष्ट्रꣳ सान्नाय्यम् । स यो ह वै राष्ट्रꣳ सान्नाय्यमिति वेदाव ह राष्ट्रꣳ रुन्द्धेऽथो यत्किञ्च राष्ट्रेण जय्यꣳ सर्वꣳ हैव तज्जयति तद्यत्सन्नयन्त्येके नैके तस्माद्राष्ट्रꣳ सञ्चैति वि च ॥ १७ ॥ तपः स्विष्टकृत् । स यो ह वै तपः स्विष्टकृदिति वेदाव ह तपो रुन्द्धेऽथो यत्किञ्च तपसा जय्यꣳ सर्वꣳ हैव तज्जयति ॥ १८ ॥ लोकः प्राशित्रम् । स यो ह वै लोकः प्राशित्रमिति वेदाव ह लोकꣳ रुन्द्धेऽथो यत्किञ्च लोकेन जय्यꣳ सर्वꣳ हैव तज्जयति नो ह लवेन लोकाद्व्यथते लवेन ह वा अमुष्मिँल्लोके लोकाद्व्यथन्तेऽथ य एवं वेद न ह बहु चन पापङ्कृत्वा लोकाद्व्यथते ॥ १९ ॥ श्रद्धेडा ।

स यो ह वै श्रद्धेडेति वेदाव ह श्रद्धाᳬं रुन्द्धेऽथो यत्किञ्च श्रद्धया जयति सर्वᳬं हैव तज्जयति ॥ २० ॥ अशनिरेव प्रथमोऽनुयाजः । ह्रादुनिर्द्वितीय ऽउल्कुषी तृतीयः ॥२१॥ स प्रथममनुयाजमनुमन्त्रयेत । अशन्यमुञ्जहीति यन्द्विष्याद्ध्रादुन्यमुञ्जहीति द्वितीयमुल्कुष्यमुञ्जहीति तृतीयम् ॥ २२ ॥ स य ऽएष क्षिप्रम्म्रियते । अशनिर्हं तमनुयाजो हन्त्यथ यो विस्रवन्निमिव ऽइव ह्रादुनिर्हं तमनुयाजो हन्त्यथ योऽभ्युष्टमिव ऽइवोल्कुषी ह तमनुयाजो हन्ति ॥ २३ ॥ सैषा यज्ञमेनिः । एतया वै मेन्या देवा ऽअसुरान्पराभावयाञ्चक्रुस्तथो ऽएवैवंविद्यजमानः पाप्मानन्द्विषन्तम्भ्रातृव्यम्पराभावयति ॥ २४ ॥ स यदनुयाजान्तो यज्ञः स्यात् । अशन्यन्तः स्याद्ध्रादुन्यन्त ऽउल्कुष्यन्तस्तस्माद्वै देवानां यज्ञ ऽइडान्तो वैव शंय्वन्तो वा ॥ २५ ॥ प्रयाजैर्वै देवाः । स्वर्गँल्लोकमायँस्तानसुरा ऽअन्वाजिगाᳬंसँस्ताननुयाजैः प्रत्यौहँस्तद्यदनुयाजा ऽइज्यन्ते पाप्मानमेव तद्द्विषन्तम्भ्रातृव्यं यजमानः प्रत्यूहति ॥ २६ ॥ प्राणा वै प्रयाजाः । अपाना ऽअनुयाजास्तस्मात्प्रयाजाः प्राञ्चो हूयन्ते तद्धि प्राणरूपम्प्रत्यञ्चोऽनुयाजास्तदपानरूपमेता ह वै दर्शपूर्णमासयोरुपसदो यदनुयाजास्तस्मात्त ऽउपसद्रूपेण प्रत्यञ्चो हूयन्ते ॥ २७ ॥ सᳬंस्था सूक्तवाकः । स यो ह वै सᳬंस्था सूक्तवाक ऽइति वेदाव ह सᳬंस्थाᳬं रुन्द्धेऽथो यत्किञ्च सᳬंस्थया जयति सर्वᳬं हैव तज्जयति गच्छति व्रयसः सᳬंस्थाम् ॥ २८ ॥

प्रतिष्ठा शँय्योर्वाकः । स यो ह वै प्प्रतिष्ठा शँय्योर्वाक ऽइति वेदाव ह प्प्रतिष्ठाᳬं रुन्द्धेऽथो यत्किञ्च प्प्रतिष्ठया जय्यᳬं सर्व्वᳬं हैव तज्जयति गच्छति प्प्रतिष्ठाम् ॥ २९ ॥ ते देवाः । एतान्पत्नीसँय्याजान्पश्चात्पय्यौहन्त मिथुनमेवैतदुपरिष्टाद्दधत प्प्रजात्यै तद्यत्पत्नीसंय्याजा ऽइज्ज्यन्ते मिथुनमेवैतदुपरिष्टाद्धत्ते प्प्रजात्यै देवानाᳬं ह वै प्प्रजातिमनु प्प्रजायते मिथुनेन मिथुनेन ह प्प्रजायते य ऽएवमेतद्वेद ॥ ३० ॥ अन्नᳬं समिष्टयजुः । स यो ह वा ऽअन्नᳬं समिष्टयजुरिति वेदाव हान्नᳬं रुन्द्धेऽथो यत्किञ्चान्नेन जय्यᳬं सर्व्वᳬं हैव तज्जयति ॥ ३१ ॥ सँव्वत्सरो यजमानः । तमृतवो याजयन्ति वसन्त ऽआग्नीद्ध्रस्तस्माद्वसन्ते दावाश्चरन्ति तद्ध्यग्निरूपङ्ग्रीष्मोऽद्ध्वर्य्युस्तप्त ऽइव वै ग्रीष्मस्तप्तमिवाद्ध्वर्य्युर्न्निष्क्रामति वर्षा ऽउद्गाता तस्माद्यदा बलवद्वर्षति साम्न ऽइवोपब्दिः क्रियते शरद्ब्रह्मा तस्माद्यदा सस्यम्पच्यते ब्रह्मण्यवत्यः प्प्रजा ऽइत्याहुर्हेमन्तो होता तस्माद्धेमन्न्वषट्कृताः पशवः सीदन्त्येता ह वा ऽएनन्देवता याजयन्ति स यद्येनमेषावीरा याजयेयुरेता ऽएव देवता मनसा द्ध्यायेदेता हैवैनन्देवता याजयन्ति ॥ ३२ ॥ अथ हैषैव तुला । यद्दक्षिणो वेद्यन्तः स यत्साधु करोति तदन्तर्व्वेद्यथ यदसाधु तद्बहिर्वेदि तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीत तुलायाᳬं ह वा ऽअमुष्मिँल्लोक ऽआदधति यतरद्यᳬंस्यति तदन्न्वेष्यति यदि साधु वासाधु वेत्यथ य ऽएवं वेदास्मिन्हैव लोके

तुलामारोहत्यत्यमुष्मिँल्लोके तुलाधानम्मुच्यते साधुकृत्त्या हैवास्य यच्छति न पापकृत्त्या ॥ ३३ ॥ [ अर्धं प्रपाठकः ५.२ ]

द्वितीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ अग्निहोत्रावयवोपासनाप्रकारः ]

व्वाग्घ वा ऽएतस्याग्निहोत्रस्याग्निहोत्री * । मन ऽएव व्वत्सस्तदिदम्मनश्च व्वाक्च समानमेव सन्नानेव तस्म्मात्समान्न्या रज्ज्वा व्वत्सञ्च मातरञ्चाभिदधति तेज ऽएव श्श्रद्धा सत्त्यमाज्ज्यम् ॥ १ ॥ तद्धैतज्जनको व्वैदेहः । याज्ञवल्क्यम्पप्रच्छ व्वेत्थाग्निहोत्रं य्याज्ञवल्क्या३ ऽइति व्वेद सम्म्राडिति किमिति पय ऽएवेति ॥ २ ॥ यत्पयो न स्यात् । केन जुहुया ऽइति व्व्रीहियवाब्भ्यामिति यद्व्रीहियवौ न स्याताङ्केन जुहुया ऽइति या ऽअन्न्या ऽओषधय ऽइति यदन्न्या ऽओषधयो न स्युः केन जुहुया ऽइति या ऽआरण्ण्या ऽओषधय ऽइति यदारण्ण्या ऽओषधयो न स्युः केन जुहुया ऽइति व्वानस्पत्त्येनेति यद्वानस्पत्त्यन्न स्यात्केन जुहुया ऽइत्यद्भिरिति यदापो न स्युः केन जुहुया ऽइति ॥ ३ ॥ स होवाच । न वा ऽइह तर्हि किञ्चनासीदथैतदहूयतैव सत्त्यꣳ श्रद्धायामिति व्वेत्थाग्निहोत्रं य्याज्ञवल्क्य धेनुशतन्ददामीति होवाच ॥ ४ ॥ तदप्प्येते श्श्लोकाः । किन्थꣳ

* अग्निहोत्रमिति कर्मनामधेयम् । अग्नये होत्रं होमोऽस्मिन्निति तद्व्युत्पत्तिः । उपचारात् तदर्थं पयोऽप्यग्निहोत्रम्, तस्य दोग्ध्री धेनुरप्यग्निहोत्रीत्युच्यते ।

स्विद्विद्वान्प्रवसत्यग्निहोत्री गृहेभ्यः कथꣳ स्विदस्य काव्यङ्कथꣳ सन्ततो ऽअग्निभिरिति कथꣳ स्विदस्यानपप्प्रोषितम्भवतीत्येवैतदाह ॥ ५ ॥ यो जविष्ठो भुवनेषु । स विद्वान्प्रवसन्विदे तथा तदस्य काव्यन्तथा सन्ततो ऽअग्निभिरिति मन ऽएवैतदाह मनसैवास्यानपप्प्रोषितम्भवतीति ॥ ६ ॥ यत्स दूरम्परेत्य । अथ तत्र प्प्रमाद्यति कस्मिन्त्सास्य हुताहुतिर्गृहे यामस्य जुह्वतीति यत्स दूरम्परेत्याथ तत्र प्प्रमाद्यति कस्मिन्नस्य साहुतिर्हुता भवतीत्येवैतदाह ॥ ७ ॥ यो जागार भुवनेषु । विश्वा जातानि योऽबिभः तस्मिन्त्सास्य हुताहुतिर्गृहे यामस्य जुह्वतीति प्प्राणमेवैतदाह तस्मादाहुः प्प्राण ऽएवाग्निहोत्रमिति ॥ ८ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अग्निहोत्रे मिथुनत्वदर्शनम् ]

यो ह वा ऽअग्निहोत्रे । षण्मिथुनानि वेद मिथुनेन मिथुनेन ह प्प्रजायते सर्वाभिः प्प्रजातिभिर्यजमानश्च पत्नी च तदेकम्मिथुनन्तस्मादस्य पत्नीवदग्निहोत्रꣳ स्यादेतन्मिथुनमुपाप्नवानीति वत्सश्चाग्निहोत्री च तदेकम्मिथुनन्तस्मादस्य पुँवत्साग्निहोत्री स्यादेतन्मिथुनमुपाप्नवानीति स्थाली चाङ्गाराश्च तदेकम्मिथुनꣳ स्रुक्च स्रुवश्च तदेकम्मिथुनमाहवनीयश्च समिच्च तदेकम्मिथुनमाहुतिश्च स्वाहाकारश्च तदेकम्मिथुनमेतानि ह वा

ऽअग्निहोत्रे षण्मिथुनानि तानि य ऽएवं वेद मिथुनेन मिथुनेन ह प्रजायते सर्वाभिः प्रजातिभिः ॥ १ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ प्रसङ्गतः आख्यायिकया ब्रह्मचारिधर्मप्रतिपादनम् ]

ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत् । तस्मै ब्रह्मचारिणमेव न प्रायच्छत्सोऽब्रवीदस्तु मह्यमप्येतस्मिन्भाग ऽइति यामेव रात्रिꣳ समिधन्नाहराता ऽइति तस्माद्याꣳ रात्रिम्ब्रह्मचारी समिधन्नाहरत्यायुष ऽएव तामवदाय वसति तस्माद्ब्रह्मचारी समिधमाहरेन्नेदायुषोऽवदाय वसानीति ॥ १ ॥ दीर्घसत्रं वा ऽएष ऽउपैति । यो ब्रह्मचर्यमुपैति स यामुपयन्त्समिधमादधाति सा प्रायणीया याꣳ स्नास्यन्त्सोदयनीयाथ या ऽअन्तरेण सत्र्या ऽएवास्य ता ब्राह्मणो ब्रह्मचर्यमुपयन् ॥ २ ॥ चतुर्धा भूतानि प्रविशति । अग्निम्पदा मृत्युम्पदाचार्यम्पदात्मन्येवास्य चतुर्थः पादः परिशिष्यते ॥ ३ ॥ स यदग्नये समिधमाहरति । य ऽएवास्याग्नौ पादस्तमेव तेन परिक्रीणाति तꣳ संस्कृत्यात्मन्धत्ते स ऽएनमाविशति ॥ ४ ॥ अथ यदात्मानन्दरद्रीकृत्येव । अह्रीर्भूत्वा भिक्षते य ऽएवास्य मृत्यौ पादस्तमेव तेन परिक्रीणाति तꣳ संस्कृत्यात्मन्धत्ते स ऽएनमाविशति ॥ ५ ॥ अथ यदाचार्यवचसङ्करोति । यदाचार्याय कर्म्म करोति य ऽएवास्याचार्ये पादस्तमेव तेन परिक्रीणाति तꣳ संस्कृत्यात्मन्धत्ते

स ऽएनमाविशति ॥ ६ ॥ न ह वै स्नात्वा भिक्षेत । अप ह वै स्नात्वा भिक्षाञ्जयत्यप ज्ञातीनामशनायामप पितॄणाॅं स ऽएवं विद्वान्यस्या ऽएव भूयिष्ठॅं श्लाघेत ताम्भिक्षेतेत्याहुस्तल्लोक्क्यमिति स यद्यन्याम्भिक्षितव्यान्न विन्देदपि स्वामेवाचार्य्यजायाम्भिक्षेताथो स्वाम्मातरन्नैनꣳ सप्तम्म्यभिक्षितातीयात्तमेवं विद्वाॅंसमेवञ्चरन्तꣳ सर्व्वे व्वेदा ऽआविशन्ति यथा ह वा ऽअग्निꣳ समिद्धो रोचत ऽएवꣳ ह वै स स्नात्वा रोचते य ऽएवं विद्वान्ब्रह्मचर्य्यञ्चरति ॥ ७ ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ आख्यायिकया दर्शपूर्णमासयोः सर्वोत्पत्तिहेतुत्वकथनम् ]

उद्दालको हारुणिꣳ । उदीच्च्यान्वृतो धावयाञ्चकार तस्य निष्क्क ऽउपाहित ऽआसैतद्ध स्म वै तत्पूर्व्वेषां व्वृतानान्धावयतामेकधनमुपाहितम्भवत्युपवल्हाय बिभ्यतान्ताꣳहोदीच्च्यानाम्ब्राह्मणान्भीर्व्विवेद ॥ १ ॥ कौरुपाञ्चालो वा ऽअयम्ब्रह्मा ब्रह्मपुत्रꣳ । यद्वै नोऽयमर्द्धन्न पर्य्यादुदीत हन्तैनम्ब्रह्मोद्यमाह्वयामहा ऽइति केन व्वीरेणेति स्वैदायनेनेति शौनको ह स्वैदायन ऽआस ॥ २ ॥ ते होचुꣳ । स्वैदायन त्वया व्वीरेणेमम्प्रतिसंयतामहा ऽइति स होवाचोपान्न खलु रमताहन्न्वेनं व्वेदानीति तꣳ हाभिप्प्रपेदे तꣳ हाभिप्प्रपन्नमभ्युवाद स्वैदायना३ ऽइति हो३ गौतमस्य पुत्रे-

तीतरᳪं प्प्रतिशुश्श्राव तᳪं ह तत ऽएव प्प्रष्टुन्दध्रे ॥ ३ ॥ स वै गौतमस्य पुत्र व्वृतो जनन्धावयेत् । यो दर्शपूर्ण्णमासयोरष्टौ पुरस्तादाज्यभागान्विद्यात्पञ्च मद्ध्यतो हविर्भागान्षट् प्राजापत्यानष्टा ऽउपरिष्टादाज्यभागान् ॥ ४ ॥ स वै गौतमस्य पुत्र व्वृतो जनन्धावयेत् । यस्तद्दर्शपूर्ण्णमासयोर्विद्याद्यस्मादिमाᳪं प्प्रजा ऽअदन्तका जायन्ते यस्मादासाञ्जायन्ते यस्मादासाम्प्रभिद्यन्ते यस्मादासाᳪं सन्तिष्ठन्ते यस्मादासाम्पुनरुत्तमे व्वयसि सर्व्वं ऽएव प्प्रभिद्यन्ते यस्मादधर ऽएवाग्ग्रे जायन्तेऽथोत्तरे यस्मादणीयाᳪंस ऽएवाधरे प्प्रथीयाᳪंस ऽउत्तरे यस्माद्दᳪंष्ट्रा व्वर्षीयाᳪंसो यस्मात्समा ऽएव जम्भ्याᳪं ॥ ५ ॥ स वै गौतमस्य पुत्र व्वृतो जनन्धावयेत् । यस्तद्दर्शपूर्ण्णमासयोर्विद्याद्यस्मादिमाᳪं प्प्रजा लोमशा जायन्ते यस्मादासाम्पुनरिव श्मश्रूण्ण्यौपपक्ष्याणि दुर्व्वीरिणानि जायन्ते यस्माच्छीर्षण्ण्येवाग्ग्रे पलितो भवत्यथ पुनरुत्तमे व्वयसि सर्व्व ऽएव पलितो भवति ॥ ६ ॥ स वै गौतमस्य पुत्र व्वृतो जनन्धावयेत् । यस्तद्दर्शपूर्ण्णमासयोर्विद्याद्यस्मात्कुमारस्य रेतᳪं सिक्तन्न सम्भवति यस्मादस्य मद्ध्यमे व्वयसि सम्भवति यस्मादस्य पुनरुत्तमे व्वयसि न सम्भवति ॥ ७ ॥ यो गायत्रीᳪं हरिणीम् । ज्योतिष्पक्षां य्यजमानᳪं स्वर्ग्गँल्लोकमभिवहन्तीं विद्यादिति तस्मै ह निष्कम्प्रददावनूचानᳪं स्वैदायनासि सुवर्ण्णं व्वाव सुवर्ण्णविदे ददतीति तᳪं होपगुह्य निश्चक्क्राम तᳪं ह पप्प्रच्छुᳪं

किमिवैष गौतमस्य पुत्रोऽभूदिति ॥ ८ ॥ स होवाच । यथा ब्रह्मा ब्रह्मपुत्रो मूर्द्धास्य विपतेद्य एनमुपवल्हेतेति ते ह तत एव विप्रेयुस्तꣳ ह तत एव समित्पाणिः प्रतिचक्रम उप त्वायानीति किमध्येष्यमाण इति यानेव मा प्रश्नानप्राक्षीस्तानेव मे विब्रूहीति स होवाचानुपेतायैव त एनान्ब्रवाणीति ॥ ९ ॥ तस्मा उ हैतदुवाच । द्वावाघारौ पञ्च प्रयाजा आग्नेय आज्यभागोऽष्टम एतेऽष्टौ पुरस्तदाज्यभागाः सौम्य आज्यभागो हविर्भागाणाम्प्रथमो हविर्हि सोम आग्नेयः पुरोडाशोऽग्नीषोमीय उपाꣳशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदेते पञ्च मध्यतो हविर्भागाः ॥१०॥ प्राशित्रमिडा च । यच्चाग्नीध आदधाति ब्रह्मभागो यजमानभागोऽन्वाहार्य एते षट् प्राजापत्यास्त्रयोऽनुयाजाश्चत्वारः पत्नीसँयाजाः† समिष्टयजुरष्टममेतेऽष्टा उपरिष्टादाज्यभागाः ॥ ११ ॥ अथ यदपुरोऽनुवाक्यकाः प्रयाजा भवन्ति । तस्मादिमाः प्रजा अदन्तका जायन्तेऽथ यत्पुरोऽनुवाक्यवन्ति हवीꣳषि भवन्ति तस्माददासाञ्जायन्तेऽथ यदपुरोऽनुवाक्यका अनुयाजा भवन्ति तस्मादासाम्प्रभिद्यन्तेऽथ यत्पुरोऽनुवाक्यवन्तः पत्नीसँयाजा भवन्ति तस्मादासाꣳ सन्तिष्ठन्तेऽथ यदपुरोऽनुवाक्यकः

( १ ) उपांशु इज्यते इति उपांशुयाजः । एवमुपांशुजपश्च ''जिह्वोष्ठौ चालयेत् किञ्चिद् देवतागतमानसः । निजश्रवणयोग्यः स्यादुपांशु स जपः स्मृतः ॥'' इति स्मृत्युक्तः

( २ ) प्राशित्रं ब्रह्मणो भागः ।

† पत्नीदेवताका दर्शपूर्णमासाङ्गभूताश्चत्वारो यागविशेषाः पत्नीसंयाजाः ।

समिष्टयजुर्भवति तस्मादासाम्पुनरुत्तमे व्वयसि सर्व्वं ऽएव प्प्रभिद्यन्ते ॥ १२ ॥ * अथ यदनुवाक्क्यामनूच्य । याज्यया यजति तस्मादधर ऽएवाग्ग्रे जायन्तेऽथोत्तरेऽथ यद्गायत्रीमनूच्य त्रिष्टुभा यजति तस्मादणीयाᳫंस ऽएवाधरे प्प्रथीयाᳫंस ऽउत्तरेऽथ यत्प्राञ्चावाघारावाघारयति तस्माद्दᳫंष्ट्रा व्वर्षीयाᳫंसोऽथ यत्समच्छन्दसावेव संयाज्ज्ये भवतस्तस्मात्समा ऽएव जम्भ्याः ॥ १३ ॥ अथ यद्बर्हिस्तृणाति । तस्मादिमाः प्प्रजा लोमशा जायन्तेऽथ यत्पुनरिव प्प्रस्तरᳫं[A] स्तृणाति तस्मादासाम्पुनरिव श्मश्रूण्ण्यौपपक्ष्याणि दुर्ब्बीरिणानि जायन्तेऽथ यत्केवलमेवाग्ग्रे प्प्रस्तरमनुप्प्रहरति तस्माच्छीर्षण्ण्येवाग्ग्रे पलितो भवत्यथ यत्सर्व्वमेव बर्हिरनुप्प्रहरति तस्मात्पुनरुत्तमे व्वयसि सर्व्व ऽएव पलितो भवति ॥ १४ ॥ अथ यदाज्ज्यहविषः प्प्रयाजा भवन्ति । तस्मात्कुमारस्य रेतः सिक्तन्न सम्भवत्युदकमिवैव भवत्युदकमिव ह्याज्ज्यमथ यन्मद्ध्ये यज्ञस्य दद्ध्ना पुरोडाशेनेति चरन्ति तस्मादस्य मद्ध्यमे व्वयसि सम्भवति द्रप्प्सीवैव भवति द्रप्प्सीव हि रेतोऽथ यदाज्ज्यहविष ऽएवानुयाजा भवन्ति तस्मादस्य पुनरुत्तमे व्वयसि न सम्भवत्युदकमिवैव भवत्युदकमिव ह्याज्ज्यम् ॥ १५ ॥ व्वेदिरेव गायत्री । तस्यै येऽष्टौ पुरस्तादाज्ज्यभागाः स दक्षिणः पक्षो येऽष्टा ऽउपरिष्टादाज्ज्यभागाः स

* शतम् ५७०० ।

(A) प्रस्तरः कुशमुष्टिः ।

ऽउत्तरः पक्षः सैषा गायत्री हरिणी ज्योतिष्पक्षा यजमानꣳ स्वर्गँल्लोकमभिवहति य ऽएवमेतद्वेद ॥ १६ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ स्रुगादानप्रकारः ]

अथातः स्रुचोरादानस्य । तद्धैतदेके कुशला मन्यमाना दक्षिणेनैव जुहूमाददते सव्येनोपभृतन्न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयात्प्रतिप्रतिन्न्वा ऽअयमध्वर्युर्यजमानस्य द्विषन्तम्भ्रातृव्यमकःप्रत्युद्यामिनमितीश्वरो ह तथैव स्यात् ॥ १ ॥ इत्थमेव कुर्य्यात् । उभाभ्यामेव पाणिभ्याञ्जुहूम्परिगृह्योपभृत्यधिनिदध्यात्तस्य नोपमीमाꣳसास्ति तत्पशव्यमायुष्यन्ते ऽअसꣳशिञ्जयन्नाददीत ते * यत्सꣳशिञ्जयेद्योगक्षेमो यजमानमृच्छेत्तस्मादसꣳशिञ्जयन्नाददीत ॥ २ ॥ अथातोऽतिक्रमणस्य । वज्रेण ह वा ऽअन्योऽध्वर्युर्यजमानस्य पशून्विधमति वज्रेण हास्मा ऽअन्य ऽउपसमूहत्येष ह वा ऽअध्वर्युर्वज्रेण यजमानस्य पशून्विधमति य ऽआश्रावयिष्यन्दक्षिणेनातिक्रामति सव्येनाश्राव्याथ हास्मा ऽएष ऽउपसमूहति य ऽआश्रावयिष्यन्त्सव्येनातिक्रामति दक्षिणेनाश्राव्यैष हास्मा ऽउपसमूहति ॥ ३ ॥ अथातो धारणस्य । तद्धैतदेके कुशला मन्यमानाः प्रगृह्य बाहू स्रुचौ धारयन्ति न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयाच्छूलौ न्न्वा ऽअयमध्व-

* 'ग' 'ज' पुस्तकयोः 'ते' इति नास्ति ।

र्य्युर्ब्बाहू ऽअकृत शूलबाहुर्भविष्यतीतीश्वरो ह तथैव स्यादथ हैष मद्ध्यमः प्प्राणस्तस्मादु तमुपन्न्य-च्च्येवैव धारयेत् * ॥ ४ ॥ अथात ऽआश्श्रावणस्य । षड्ढ वा ऽआश्श्रावितानि न्न्यक्तिर्य्यगूर्द्ध्वङ्क्रुपणम्बहिः-श्रयन्तःश्रि ॥ ५ ॥ एतद्ध वै न्न्यक् । योऽयमुच्चैरा-दाय शनैर्न्निदधाति स यमिच्छेत्पापीयान्त्स्यादिति तस्योच्चैरादाय शनैर्न्निदद्ध्यात्तेन स पापीयान्भवति ॥ ६ ॥ अथ हैतत्तिर्य्यक् । योऽयं य्यावतैवादत्ते तावता निदधाति स यमिच्छेन्नैव श्श्रेयान्त्स्यान्न पापीयानिति तस्य यावतै-वाददीत तावता निदद्ध्यात्तेन स नैव श्श्रेयान्न पापीया-न्भवति ॥ ७ ॥ अथ हैतदूर्द्ध्वम् । योऽयꣳ शनैरादायो-च्चैर्न्निदधाति स यमिच्छेच्छ्रेयान्त्स्यादिति तस्य शनैरादायो-च्चैर्न्निदद्ध्यात्तेन स श्श्रेयान्भवति ॥ ८ ॥ अथ हैतत्क्रुपणम् । योऽयमणु दीर्ग्घमस्वरमाश्श्रावयति यो हैनन्तत्र ब्ब्रूयात्क्रुप-णन्न्वा ऽअयमद्ध्वर्य्युर्य्यजमानमकर्द्विषतो भ्भ्रातृव्व्यस्योपा-वसायिनमितीश्वरो ह तथैव स्यात् ॥ ९ ॥ अथ हैतद्ब-हिःश्रि । योऽयमपव्व्यादायौष्ठा ऽउच्चैरस्वरमाश्श्रावयति श्श्रीर्वै स्वरो बाह्यत ऽएव तच्छ्रियन्धत्तेऽशनायुको भवति ॥ १० ॥ अथ हैतदन्तःश्रि । योऽयꣳ सन्धायौष्ठा ऽउच्चैः स्वरवदाश्श्रावयति श्श्रीर्वै स्वरोऽन्तरत ऽएव तच्छ्रियन्ध-त्तेऽन्नादो भवति ॥ ११ ॥ स वै मन्द्रमिवोरसि । परास्त-ब्भ्योभयतो बार्हतमुच्चैस्ततो निदद्ध्यात्तस्य नोपमीमाꣳसे-

* तथा चोक्तं सूत्रकृता "नाभिदेशे धारणम्" ( का० श्रौ० सू० ३. २. १ ) ।

सास्ति तत्पशव्व्यमायुष्ष्यम् ॥ १२ ॥ अथातो होमस्य । तद्धैतदेके कुशला मन्न्यमानाः प्प्राचीᳬं स्रुचमुपावहृत्य हुत्वा पर्य्याहृत्योपभृत्यधिनिदधति न तथा कुर्य्याद्यो हैनन्तत्र ब्ब्रूयादनुयुवन्न्वा ऽअयमद्ध्वर्य्युर्य्यजमानमकद्विषतो ब्भ्रातृव्व्यस्यान्न्ववसायिनमितीश्श्वरो ह तथैव स्यात् ॥ १३ ॥ पार्श्वत ऽउ हैके । स्रुचमुपावहृत्य हुत्वा पर्य्याहृत्योपभृत्यधिनिदधति न तथा कुर्य्याद्यो हैनन्तत्र ब्ब्रूयादुतीर्त्थेन न्न्वा ऽअयमद्ध्वर्य्युराहुतीः प्प्रारौत्सीत्सं व्वा शरिष्ष्यते घुणिर्व्वा भविष्ष्यतीतीश्श्वरो ह तथैव स्यात् ॥ १४ ॥ इत्थमेव कुर्य्यात् । प्राचीमेव स्रुचमुपावहृत्य हुत्वा तेनैवाधिहृत्योपभृत्यधिनिदध्यात्तस्य नोपमीमाᳬंसास्ति तत्पशव्व्यमायुष्ष्यम् ॥ १५ ॥ प्रदग्ग्धाहुतिर्ह्वं वा ऽअन्न्योऽद्ध्वर्य्युः । आहुतीर्ह्यन्न्यः सन्तर्प्पयत्त्येष ह वै प्प्रदग्ग्धाहुतिरद्ध्वर्य्युर्य्योऽयमाज्ज्यᳬ हुत्वावदानानि जुहोत्त्येतᳬ ह वै तदृश्श्यमाना व्वागब्भ्युवाद प्प्रदग्ग्धाहुतिर्व्वा ऽअयमद्ध्वर्य्युरित्त्यथ हैना ऽएष सन्तर्प्पयति योऽयमाज्ज्यᳬ हुत्वावदानानि जुहोत्त्यथ पुनरन्तत ऽआज्ज्येनाभिजुहोत्त्येष हैनाः सन्तर्प्पयति तासाᳬं सन्तृप्तानान्देवा हिरण्मयाँश्चमसान्पूरयन्ते ॥ १६ ॥ तदु होवाच याज्ञवल्क्यः । यद्वा ऽउपस्तीर्य्यावदायाभिघारयति तदेवैनाः सन्तर्प्पयति तासाᳬं सन्तृप्तानान्देवा हिरण्मयाँश्चमसान्पूरयन्तेऽयस्थूणगृहपतीनाᳬं ह वै शौल्बायनोऽद्ध्वर्य्युरास ॥ १७ ॥ स

(१) "नां वै" इति 'ग' 'ज' पुस्तकयोः पाठः ।

होवाच । इदमहेदᳩ सत्रङ्कुशपङ्स्वल्पाज्यमथायङ्गृहपतिरस्म्मीति मन्न्यत ऽइति ॥ १८ ॥ स होवाच । अद्धर्युर्वा वै नोऽक्कुक्ष ऽएते वै ते स्रुचौ ये त्वᳩ सँवत्सरन्नाशक ऽआदातुं रुपद्दै त्वाहमेतयोरनुशिष्ष्यामि प्प्रजया पशुभिर्ज्जायेथा ऽअभि स्वर्ग्गँल्लोकं वहेरिति ॥ १९ ॥ स होवाच । उप त्वयानीति स होवाचात्र वाव खल्ल्वर्हसि यो नः सँवत्सरेऽद्ध्वर्युर्भूरनुपेतायैव त ऽएनंद्ब्रवाणीति तस्म्मा ऽउ हैतदेव स्रुचोरादानमुवाच यदेतद्व्याख्याम तस्म्मादेवंविदमेवाद्ध्वर्युङ्कुर्वीत नानेवंविदम् ॥ २० ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या १०४ ॥



[ मित्रविन्देष्टिः ]

प्रजापतिर्वै प्प्रजाः सृजमानोऽतप्प्यत । तस्म्माच्छ्रान्तात्तेपानाच्छ्रीरुदक्क्रामत्सा दीप्प्यमाना भ्भ्राजमाना लेलायन्त्यतिष्ठत्तान्दीप्प्यमानाम्भ्राजमानाँल्लेलायन्तीन्देवा ऽअभ्भ्यद्ध्यायन् ॥ १ ॥ ते प्प्रजापतिमब्ब्रुवन् । हनामेमामेदमस्या ददामहा ऽइति स होवाच स्त्री वा ऽएषा यच्छ्रीर्न्न वै स्त्रियङ्घ्नन्त्युत त्वा ऽअस्या जीवन्त्या ऽएवाददत ऽइति ॥ २ ॥ तस्या ऽअग्निरन्नाद्यमादत्त । सोमो राज्यं व्वरुणः साम्म्राज्यम्मित्रः क्षत्रमिन्द्रो बलम्बृहस्पति-

(१) 'ग' 'ज' पुस्तकयोः 'एतद्व०' इति पाठ उपलभ्यते ।

ज्ज्यमददात् ॥ १० ॥ मित्रः क्षत्रं क्षत्रपतिः । क्षत्रमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय मित्र ऽउदक्क्रामत्पुनरस्यै क्षत्रमददात् ॥ ११ ॥ इन्द्रो बलम्बलपतिः । बलमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादयेन्द्र ऽउदक्क्रामत्पुनरस्यै बलमददात् ॥ १२ ॥ बृहस्पतिर्ब्ब्रह्म ब्ब्रह्मपतिः । ब्रह्मवर्च्चसमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय बृहस्पतिरुदक्क्रामत्पुनरस्यै ब्ब्रह्मवर्च्चसमददात् ॥ १३ ॥ सविता राष्ट्रꣳ राष्ट्रपतिः । राष्ट्रमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सवितोदक्क्रामत्पुनरस्यै राष्ट्रमददात् ॥ १४ ॥ पूषा भगम्भगपतिः । भगमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय पूषोदक्क्रामत्पुनरस्यै भगमददात् ॥ १५ ॥ सरस्वती पुष्टिम्पुष्टिपतिः । पुष्टिमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सरस्वत्युदक्क्रामत्पुनरस्यै पुष्टिमददात् ॥ १६ ॥ त्वष्टा रूपाणाꣳ रूपकृद्रूपपतिः । रूपेण पशूनस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय त्वष्टोदक्क्रामत्पुनरस्यै रूपेण पशूनददात् ॥ १७ ॥ ता वा ऽएताः । दश देवता दश हवीꣳषि दशाहुतयो दश दक्षिणा दशान्दशिनी विराट् श्रीर्व्विराट् श्रियाꣳ हैतद्विराज्ज्यन्नाद्ये प्प्रतितिष्ठति ॥ १८ ॥ तस्यै पञ्चदश सामिधेन्न्यो भवन्ति । उपाꣳशु देवता यजति पञ्च प्प्रयाजा भवन्ति त्रयोऽनुयाजा ऽएकः समि-

(१) का० श्रौ० सू० ५. १२. १ । (२) का० श्रौ० सू० ५. १३. १ । (३) का० श्रौ० सू० ५. १३. ४ ।

ष्टयजुः * पुष्टिमन्तावाज्ज्यभागा'वग्ग्निना रयिमश्नवत्पोषमेव दिवे दिवे। यशसं वीरवत्तमम्' ॥ 'गयस्फानो ऽअमीवहा वसुवित्पुष्टिवर्द्धनः। सुमित्रः सोम नो भवे'ति सहस्रवत्यौ सँय्याज्ज्ये 'नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु द्युमदग्ग्ने सुवीर्य्यं वर्षिष्ठमनुपक्षितम्' ॥ 'उत नो ब्ब्रह्मन्नविष ऽउक्क्थेषु देवहूतमः। शन्नः शोचा मरुद्वृधोऽग्ग्ने सहस्रसातम' ऽइति ॥ १९ ॥ ताछं हैताङ्गोतमो राहूगणः। विदाञ्चकार सा ह जनकं व्वैदेहम्प्रत्युत्ससाद ताछं हाङ्गजिद्ब्राह्मणेष्वन्विवियेष तामु ह याज्ञवल्क्ये विवेद स होवाच सहस्रम्भो याज्ञवल्क्य दद्मो यस्मिन्नन्वयन्त्वयि मित्रविन्दामन्न्वविदामेति व्विन्दते मित्रछं राष्ट्रमस्य भवत्यप पुनर्म्मृत्युञ्जयति सर्व्वमायुरेति य ऽएवं व्विद्वानेतयेष्ट्या यजते यो वै तदेवं व्वेद ॥ २० ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ २ ॥

[ हविषः समृद्धिः ]

अथातो हविषः समृद्धिः। षड्ढ वै ब्ब्रह्मणो द्वारोऽग्निर्व्वायुरापश्चन्द्रमा विद्युदादित्यः ॥ १ ॥ स य ऽउपदग्धेन हविषा यजते। अग्निना ह स ब्ब्रह्मणो द्वारेण प्प्रतिपद्यते सोऽग्निना ब्ब्रह्मणो द्वारेण प्प्रतिपद्य ब्ब्रह्मणः सायुज्ज्यछं सलोकताञ्जयति ॥ २ ॥ अथ यो

* प्रधानयागादौ सम्यग् इष्टा देवता इज्यन्ते अनेन स होमः मन्त्रश्च समिष्टयजुः।

(१) ऋ० सं० १. १. ११ (२) ऋ० सं० १. ६. २१ (३) ऋ० सं० ३. १. १३। (४) ऋ० सं० ३. १. १३।

व्विपतितेन हविषा यजते । व्वायुना ह स ब्ब्रह्मणो द्वारेण प्प्रतिपद्यते स व्वायुना ब्रह्मणो द्वारेण प्प्रतिपद्य ब्ब्रह्मणः सायुज्ज्यꣳ सलोकताञ्जयति ॥ ३ ॥ अथ योऽश्रृतेन हविषा यजते । अद्भिर्ह स ब्ब्रह्मणो द्वारेण प्प्रतिपद्यते सोऽद्भिर्ब्ब्रह्मणो द्वारेण प्प्रतिपद्य ब्ब्रह्मणः सायुज्ज्यꣳ सलोकताञ्जयति ॥ ४ ॥ अथ य ऽउपरक्तेन हविषा यजते । चन्द्रमसा ह स ब्ब्रह्मणो द्वारेण प्प्रतिपद्यते स चन्द्रमसा ब्ब्रह्मणो द्वारेण प्प्रतिपद्य ब्ब्रह्मणः सायुज्ज्यꣳ सलोकता-ञ्जयति ॥ ५ ॥ अथ यो लोहितेन हविषा यजते । विद्युता ह स ब्ब्रह्मणो द्वारेण प्प्रतिपद्यते स विद्युता ब्ब्रह्मणो द्वारेण प्प्रतिपद्य ब्ब्रह्मणः सायुज्ज्यꣳ सलोकताञ्जयति ॥ ६ ॥ अथ यः सुश्रृतेन हविषा यजते । आदित्येन ह स ब्ब्रह्मणो द्वारेण प्प्रतिपद्यते स ऽआदित्येन ब्ब्रह्मणो द्वारेण प्प्रतिपद्य ब्ब्रह्मणः सायुज्ज्यꣳ सलोकताञ्जयति सैषा हविषः समृद्धिः स यो हैवमेताꣳ हविषः समृद्धिं व्वेद सर्व्वसमृद्धेन हैवास्य हविषेष्टम्भवति ॥ ७ ॥ अथातो यज्ञस्य समृद्धिः । यद्वै यज्ञस्य न्न्यूनम्प्रजननमस्य तदथ यदतिरिक्तम्पशव्व्यमस्य तदथ यत्सङ्कसुकꣳ श्श्रिया ऽअस्य तदथ यत्सम्पन्नꣳ स्वर्ग्यमस्य तत् ॥ ८ ॥ स यदि मन्न्येत । न्न्यूनम्मे यज्ञोऽभूदिति प्प्रजननम्म ऽएतत्प्रजनिष्ष्य ऽइत्त्येव तदुपासीत ॥ ९ ॥ अथ यदि मन्न्येत । अतिरि-क्तम्मे यज्ञोऽभूदिति पशव्व्यम्म ऽएतत्पशुमान्न्भविष्ष्यामी-त्त्येव तदुपासीत ॥१०॥ अथ यदि मन्न्येत। सङ्कसुकम्मे यज्ञेऽ-

भूदिति श्रिश्रयै म ऽएतद्वा मा श्श्रीस्तेजसा यशसा ब्रह्म-वर्च्चसेन परिवृता गमिष्ष्यतीत्त्येव तदुपासीत ॥ ११ ॥
अथ यदि मन्न्येत । सम्पन्नम्मे यज्ञेऽभूदिति स्वर्ग्यम्म ऽएतत्त्स्वर्ग्गलोको भविष्ष्यामीत्त्येव तदुपासीत सैषा यज्ञस्य समृद्धिः स यो हैवमेतां यज्ञस्य समृद्धिं वेद सर्व्वसमृद्धेन हैवास्य यज्ञेनेष्ट्टम्भवति ॥ १२ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

[ अरण्योरश्वत्त्थविकृतित्वविधानमाख्यायिकया ]

उर्व्वशी हाप्प्सराः । पुरूरवसमैडञ्चकमे तꣳ ह विन्द-मानोवाच त्रिः स्म्म माह्वो वैतसेन * दण्डेन हतादकामाꣳ स्म्म मा निपद्यासै मो स्म्म त्त्वा नग्न्नन्दर्शमेष वै न स्त्रीणामुपचार ऽइति ॥ १ ॥ सा हास्म्मिञ्ज्योगुवास । अपि हास्म्माद्गर्ब्भिण्यास तावज्ज्योग्घास्म्मिन्नुवास ततो ह गन्धर्व्वाः समूदिरे ज्योग्ग्वा ऽइयमुर्व्वशी मनुष्ष्येष्ष्व-वात्त्सीदुपजानीत यथेयम्पुनरागच्छेदिति तस्यै हावि-द्र्वयुरणा शयन ऽउपबद्धास ततो ह गन्धर्व्वा ऽअन्न्यतर-मुरणम्प्रमेथुः ॥ २ ॥ सा होवाच । अवीर ऽइव बत मेऽजन ऽइव पुत्रꣳ हरन्तीति द्वितीयम्प्रमेथुः सा ह तथैवोवाच ॥ ३ ॥ अथ हायमीक्षाञ्चक्रे । कथन्नु तद-

* वैतस इति पुंस्प्रजननस्य नाम। तथाहि "शेपो वैतस इति पुंस्प्रजननस्य" वैतसो वितस्तं भवति, ( निरु० अ० ३ पा० ४ ख० २१ )।

वीरङ्कथमजनꣳस्यायत्राहꣳस्यामिति स नग्न ऽएवानूत्पपात चिरन्तन्मेने यद्वासः पर्य्यधास्यत ततो ह गन्धर्वा विद्युतञ्जनयाञ्चक्रुस्तं यथा दिवैवन्नग्नन्ददर्श ततो हैवेयन्तिरोबभूव पुनरैमीत्त्येत्तिरोभूताꣳ स ऽआद्ध्या जल्पन्कुरुक्षेत्रꣳ समया चचारान्न्यतः प्प्लक्षेति बिसवती तस्यै हाद्ध्यन्तेन वव्राज तद्ध ता ऽअप्प्सरस ऽआतयो भूत्त्वा परिपुप्प्लुविरे ॥ ४ ॥ तꣳ हेयं ज्ञात्त्वोवाच । अयं वै स मनुष्ष्यो यस्मिन्नहमवात्त्समिति ता होचुस्तस्मै वा ऽआविरसामेति तथेति तस्मै हाविरासुः ॥ ५ ॥ ताꣳ हायं ज्ञात्त्वाभिपरोवाद । 'हये[1] जाये मनसा तिष्ठ घोरे वचाꣳसि मिश्रा कृणवावहै नु ॥ न नौ मन्त्रा ऽअनुदितास ऽएते मयस्करन्न्परतरे चनाहन्नि'त्युप नु रम सन्नु वदावहा ऽइति हैवैनान्तदुवाच ॥ ६ ॥ तꣳ हेतरा प्प्रत्युवाच । 'किमेता[2] वाचा कृणवा तवाहम्प्राक्क्रमिषमुषसामग्ग्रियेव ॥ पुरूरवः पुनरस्तम्परेहि दुरापना वात ऽइवाहमस्म्मी'ति न वै त्त्वन्तदकरोर्य्यदहमब्रवन्दुरापा वा ऽअहन्त्वयैतर्ह्यस्म्मि पुनर्ग्गृहानिहीति हैवैनन्तदुवाच ॥ ७ ॥ अथ हायम्परिद्यून ऽउवाच । 'सुदेवो[3] ऽअद्य प्प्रपतेदनावृत्परावतम्परमाङ्गन्तवा ऽउ ॥ अधा शयीत निर्ऋतेरुपस्त्थेऽधैनं व्वृका रभसासो ऽअद्यु'रिति सुदेवोऽद्योद्वा बद्ध्नीत प्प्रवा पतेत्तदेनं व्वृका वा श्श्वानो वाद्युरिति हैव तदुवाच ॥ ८ ॥ तꣳ हेतरा प्प्रत्युवाच । 'पुरूरवो[4]

(१) ऋ० सं० अष्ट० ८ अ० ५ व० १। (२) ऋ० सं० अष्ट० ८ अ० ५ व० १। (३) ऋ० सं० अष्ट० ८ अ० ५ वर्ग ३। (४) ऋ० सं० अष्ट० ८ अ० ५ वर्ग ३।

मा मृथा मा प्प्रपप्तो मा त्त्वा व्वृकासो ऽअशिवास ऽउक्षन् ॥ न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणाᳬं हृदयान्न्येते'ति मैतदादृथा न वै स्त्रैणᳬं सख्यमस्ति पुनर्ग्गृहानिहीति हैवैनन्तदुवाच ॥ ९ ॥ '(१)यद्विरूपाचरम् । मर्त्येष्ष्ववसᳬं रात्रीᳬं शरदश्चतस्त्रᳬं ॥ घृतस्य स्तोकᳬं सकृदह्न ऽआश्नान्तादेवेदन्तातृपाणा चरामी'ति तदेतदुक्तप्प्रत्युक्तम्पञ्चदशर्च्चं बह्वृचाᳬं प्प्राहुस्तस्यै ह हृदयमाव्व्ययाञ्चकार ॥ १० ॥ सा होवाच । सँव्वत्सरतमीᳬं रात्रिमागच्छतात्तन्न्म ऽएकाᳬं रात्रिमन्ते शयितासे जात ऽउ तेऽयन्तर्हि पुत्त्रो भवितेति स ह सँव्वत्सरतमीᳬं रात्रिमाजगामेद्धिरण्ण्यविमितानि ततो हैनमेकमूचुरेतत्प्रपद्यस्वेति तद्धास्म्मै तामुपप्प्रजिग्घ्युᳬं ॥ ११ ॥ सा होवाच । गन्धर्व्वा वै ते प्प्रातर्व्वरन्दातारस्तं व्वृणासा ऽइति तं व्वै मे त्त्वमेव व्वृणीष्ष्वेति युष्ष्माकमेवैकोऽसानीति ब्ब्रूतादिति तस्म्मै ह प्प्रातर्ग्गन्धर्व्वा व्वरन्ददुᳬं स होवाच युष्ष्माकमेवैकोऽसानीति ॥ १२ ॥ ते होचुᳬं । न वै सा मनुष्ष्येष्ष्वग्ग्नेर्यज्ञिया तनूरस्ति ययेष्ट्वास्म्माकमेकᳬं स्यादिति तस्म्मै ह स्त्थाल्ल्यामोप्प्याग्ग्निम्प्रददुरनेनेष्ट्वास्म्माकमेको भविष्ष्यसीति तञ्च ह कुमारञ्चादायावव्राज सोऽरण्ण्य ऽएवाग्ग्निन्निधाय कुमारेणैव ग्ग्राममेयाय पुनरैमीत्त्येत्तिरोभूतं य्योऽग्ग्निरश्वत्थन्तं य्या स्त्थाली शमीन्ताᳬं स ह पुनर्ग्गन्धर्व्वानेयाय ॥ १३ ॥ ते होचुᳬं । सँव्वत्सरञ्चातुष्प्राश्यं

(१) ऋ० सं० अष्ट० ८ अ० ५ वर्ग ४ ।

मोदनम्पच स एतस्यैवाश्वत्थस्य तिस्रस्तिस्रः समिधो घृतेनाक्त्वज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्याधत्तात्स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥ १४ ॥ ते होचुः । परोऽक्षमिव वा ऽएतदाश्वत्थीमेवोत्तरारणिङ्कुरुष्व शमीमयीमधरारणिं स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥ १५ ॥ ते होचुः । परोऽक्षमिव वा ऽएतदाश्वत्थीमेवोत्तरारणिङ्कुरुष्वाश्वत्थीमधरारणिं स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥१६॥ स ऽआश्वत्थीमेवोत्तरारणिञ्चक्रे । आश्वत्थीमधरारणिं स यस्ततोऽग्निर्जज्ञे स ऽएव स ऽआस तेनेष्ट्वा गन्धर्वाणामेक ऽआस तस्मादाश्वत्थीमेवोत्तरारणिङ्कुर्वीताश्वत्थीमधरारणिं स यस्ततोऽग्निर्जायते स ऽएव स भवति तेनेष्ट्वा गन्धर्वाणामेको भवति ॥ १७ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ चातुर्मास्ययाजिनो द्वैविध्यं दर्शयितुं तत्रत्यैर्यागैः शरीरावयवकल्पनम् ]

प्रजापतिर्ह चातुर्म्मास्यैरात्मानं विदधे । स ऽइममेव दक्षिणम्बाहुं वैश्वदेवं हविरकुरुत तस्यायमेवाङ्गुष्ठ ऽआग्नेयं हविरिदं सौम्यमिदं सावित्रम् ॥ १ ॥ स वै वर्षिष्ठः पुरोडाशो भवति । तस्मादियमासां वर्षिष्ठेदं सारस्वतमिदम्पौष्णमथ य ऽएष ऽउपरिष्टाद्धस्तस्य सन्धिस्तन्मारुतमिदं वैश्वदेवन्द्यावापृथिवीयन्तद्धा

"अश्वत्थशमीगर्भारणी प्रयच्छति" ( का० श्रौ० सू० ४. ७. २० )

ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ २ ॥ अयमेव दक्षिण ऽऊरुर्वरुणप्रघासाः । तस्य यानि पञ्च हवीᳬंषि समायीनि * ता ऽइमाः पञ्चाङ्गुलयः कुल्फावेवैन्द्राग्नᳬ हविस्तद्वै द्विदेवत्यम्भवति तस्मादिमौ द्वौ कुल्फाविदं वारुण-मिदम्मारुतमनूकङ्कायस्तद्वा ऽअनिरुक्तम्भवति तस्मात्त-दनिरुक्तम् ॥ ३ ॥ मुखमेवास्यानीकवतीष्टिः । मुखᳬ हि प्राणानामनीकमुरः सान्तपनीयोरसा हि समिव तप्यत ऽउदरङ्गृहमेधीया प्रतिष्ठा वा ऽउदरम्प्रतिष्ठित्या ऽएव शिश्नान्येवास्य क्रैडिनᳬ हविः शिश्नैर्हि क्रीडती-वायमेवावाङ् प्राण ऽआदित्येष्टिः ॥ ४ ॥ अयमेवोत्तर ऽऊरु-र्महाहविः तस्य यानि पञ्च हवीᳬंषि समायीनि ता ऽइमाः पञ्चाङ्गुलयः कुल्फावेवैन्द्राग्नᳬ हविस्तद्वै द्विदेवत्य-म्भवति तस्मादिमौ द्वौ कुल्फाविदम्माहेन्द्रमिदं वैश्व-कर्म्मणन्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तमथ यदिदमन्तरुदरे तत्पितृयज्ञस्तद्वा ऽअनिरुक्तम्भवति तस्मा-त्तदनिरुक्तम् ॥ ५ ॥ अयमेवोत्तरो बाहुः शुनासीरीयम् । तस्य यानि पञ्च हवीᳬंषि समायीनि ता ऽइमाः पञ्चाङ्गु-लयोऽथ य ऽएष ऽउपरिष्टाद्धस्तस्य सन्धिस्तच्छुनासीरी-यमिदं वायव्यन्दोः सौर्य्यन्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ ६ ॥ तानि वा ऽएतानि । चातु-र्म्मास्यानि † त्रिषन्धीनि ‡ द्विसमस्तानि तस्मादि-

* पर्वचतुष्टयसञ्चारीणि ।

† चतुर्षु चतुर्षु मासेषु क्रियमाणानि चातुर्मास्यानि वैश्वदेव-वरुणप्रघास-साकमेध-शुना-सीरीयाख्यानि चत्वारि पर्वाणि ।

‡ त्रयः सन्धयोऽन्तरालकालाश्चत्वारो मासा येषु तानि त्रिषन्धीनि ।

मानि पुरुषस्याङ्गानि त्रिषन्धीनि द्विसमस्तानि तेषां वै चतुर्णान्द्वयोस्त्रीणि त्रीणि हवीᳬंष्यनिरुक्तानि भवन्ति द्वे द्वे द्वयोः ॥७॥ [अर्धः प्रपाठकः ॥५६॥] तेषां वै चतुर्व्वग्निम्मन्थन्ति। तस्माच्चतुर्भिरङ्गैरायुते द्वयोः प्प्रणयन्ति तस्माद्द्वाभ्यामेत्येवमु ह प्प्रजापतिश्चातुर्म्मास्यैरात्मानं विदधे तथो ऽएवैवंविद्यजमानश्चातुर्म्मास्यैरात्मानं विधत्ते ॥८॥ तदाहुः सर्व्वं गायत्रं वैश्वदेवः हविः स्यात्सर्व्वं त्रैष्टुभं वरुणप्प्रघासाः सर्व्वं जागतम्महाहविः सर्व्वानुष्टुभः शुनासीरीयश्चतुष्टोमस्याप्त्या ऽइति तदु तथा न कुर्य्याद्यत्वा ऽएतान्यभिसम्पद्यन्ते तेनैवास्य स काम ऽउपाप्तो भवति ॥ ९ ॥ तानि वा ऽएतानि । चातुर्म्मास्यानि द्वाषष्टानि त्रीणि शतानि बृहत्यः सम्पद्यन्ते तदेभिः सँवत्सरञ्च महाव्रतञ्चाप्प्नोत्यथो द्विप्प्रतिष्ठो वा ऽअयं यजमानो यजमानमेवैतत्स्वर्ग्गे लोक ऽआयातयति प्प्रतिष्ठापयति ॥ १० ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ प्रश्नप्रतिवचनैरग्निहोत्रहोमस्य सर्वदेवतृप्तिकरत्वप्रतिपादनम् ]

शौचेयो ह प्प्राचीनयोग्ग्यः। उद्दालकमारुणिमाजगाम ब्रह्मोद्यमग्निहोत्रं विविदिषिष्यामीति[1] ॥ १ ॥ स होवाच । गौतम का तेऽग्निहोत्री को वत्सः किमुपसृष्टा किः संरुधोजनङ्किन्दुह्यमानङ्किन्दुग्धङ्किमाह्रियमाणङ्किमधिश्रितङ्किमवज्योत्यमानङ्किमद्भिः प्रत्यानीतङ्किमुद्वास्यमानङ्किमुद्वा-

(१) 'ग' 'ज' पुस्तकयोः "विविदिषामीति" इति पाठो दृश्यते ।

सितङ्किमुन्नीयमानङ्किमुन्नीतङ्किमुद्यतङ्किꣳ ह्रियमाणङ्किन्निगृहीतम् ॥ २ ॥ काꣳ समिधमादधासि का पूर्वाहुतिः किमुपासीषदः किमपैक्षिष्ठाः कोत्तराहुतिः ॥ ३ ॥ किꣳ हुत्वा प्प्रकम्पयसि । किꣳ स्रुचम्परिमृज्य कूर्चे न्न्यमार्ज्जीः किन्द्वितीयम्परिमृज्य दक्षिणतो हस्तमुपासीषदः किम्पूर्वम्प्राशीः किन्द्वितीयङ्किमुदस्रृप्प्यापाः किꣳ स्रुच्च्यप ऽआनीय निरौक्षीः किन्द्वितीयङ्किन्तृतीयमेतान्दिशमुदौक्षीः किञ्ज-घनेनाहवनीयमपो न्न्यनैषीः किꣳ समतिष्ठिपो यदि वा ऽएतद्विद्वानग्निहोत्रमहौषीरथ ते हुतं यद्यु वा ऽअविद्वानहुतमेव त ऽइति ॥ ४ ॥ स होवाच । इडैव मे मानव्व्यग्निहोत्री वायव्व्यो वत्सः सजूरुपसृष्टा विराट् संयोजनमाश्विनन्दुह्यमानं वैश्वदेवन्दुग्धं वायव्व्यमाह्रियमाणमाग्नेयमधिश्रितमैन्द्राग्ग्नमवज्ज्योत्त्यमानं व्वारुणमद्भिः प्प्रत्यानीतं व्वायव्व्यमुद्वास्यमानन्द्यावापृथिव्व्यमुद्वासितमाश्विनमुन्नीयमानं वैश्वदेवमुन्नीतम्महादेवायोद्यतं व्वायव्व्यꣳ ह्रियमाणं व्वैष्णवन्निगृहीतम् ॥ ५ ॥ अथ याꣳ समिधमादधामि । आहुतीनाꣳ सा प्प्रतिष्ठा या पूर्वाहुतिर्देवाँस्तयाप्प्रैषं यदुपासीषदम्बार्हस्पत्यन्तद्यदपैक्षिषीमञ्चामुञ्च लोकौ तेन समिधां योत्तराहुतिम्मीन्तया स्वर्ग्गं लोकेऽधाम् ॥६॥ अथ यद्धुत्वा प्प्रकम्पयामि । व्वायव्व्यन्तद्यत्स्रुचम्परिमृज्य कूर्चे न्न्यमार्ज्जिषमोषधिवनस्पतीँस्तेनाप्प्रैषं यद्द्वितीयम्परिमृज्य दक्षिणतो हस्तमुपासीषदम्पितॄँस्तेनाप्प्रैषं यत्पूर्वम्प्राशिषम्मान्तेनाप्प्रैषं यद्द्वि-

तीयम्प्रजान्तेनाथ यदुत्तरम्पर्य्यापाम्पशूँस्तेनाप्प्रैषं ऽयत्स्रुच्च्यप ऽआनीय निरौक्षिषन्दं सर्व्वदेवजनाँस्तेनाप्प्रैदं ऽयद्द्वितीय-ङ्गन्धर्व्वाप्सरसस्तेनाथ यत्तृतीयमेतान्दिशमुदौक्षिषन्थं स्व-र्गस्य लोकस्य तेन द्वारं व्यवारिषं ऽयज्जघनेनाहवनीय-मपो ह्यनैषमस्म्मै लोकाय तेन वृष्टिमदां ऽयत्समति-ष्टिपं ऽयत्पृथिव्या ऽऊनन्तत्तेनापूपुरमित्येतन्नौ भगवन्त्स-हेति होवाच ॥ ७ ॥ शौचेयो ज्ञप्तः । प्प्रक्ष्यामि त्त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यस्मिम-न्न्काल ऽउद्धृतास्तेऽग्नयः स्युरुपावहृतानि पात्राणि होष्ष्य-न्त्स्या ऽअथ त ऽआहवनीयोऽनुगच्छेद्द्वेत्थ तद्भयं ऽयदुत्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्य ज्ज्येष्ठः पुत्रो म्म्रियेत यस्यैतदविदितं स्याद्विद्याभिस्त्वेवाहमता-रिषमिति किं विदितङ्का प्प्रायश्चित्तिरिति प्प्राण ऽउदान-मप्प्यगादिति गार्हपत्य ऽआहुतिञ्जुहुयात्स सैव प्प्राय-श्चित्तिर्न्न तदागः कुर्व्वीयेत्येतन्नौ भगवन्त्सहेति होवाच ॥ ८ ॥ शौचेयो ज्ञप्तः । प्प्रक्ष्यामि त्त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले गार्हपत्योऽनुगच्छेद्द्वेत्थ तद्भयं ऽयदुत्र जुह्वतो भव-तीति वेदेति होवाच पुरा चिरादस्य गृहपतिर्म्म्रियेत यस्यैतदविदितं स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्प्रायश्चित्तिरित्युदानः प्प्राणमप्प्यगादित्याहव-नीय ऽआहुतिञ्जुहुयात्स सैव प्प्रायश्चित्तिर्न्न तदागः कुर्व्वी-येत्येतन्नौ भगवन्त्सहेति होवाच ॥ ९ ॥ शौचेयो ज्ञप्तः ।

प्प्रक्ष्यामि त्त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यत्र त ऽएतस्मिन्नेव कालेऽन्न्वाहार्य्यपचनोऽनुगच्छेद्देत्थ तद्ध्यं यदत्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्य सर्व्वे पशवो म्म्रियेरन्न्यस्यैतदविदितथ्ंस्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्प्रायश्चित्तिरिति व्व्यान ऽउदानमप्प्यगादिति गार्हपत्य ऽआहुतिञ्जुहुयाथ्ं सैव प्प्रायश्चित्तिर्न्न तदागः कुर्व्वीयेत्त्येतन्नौ भगवन्त्सहेति होवाच ॥ १० ॥ शौचेयो ज्ञप्प्तः । प्प्रक्ष्यामि त्त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले सर्व्वेऽग्ग्नयोऽनुगच्छेयुर्व्वेत्थ तद्ध्यं यदत्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्यादायादङ्कुलथ्ं स्याद्यस्यैतदविदितथ्ं स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्प्रायश्चित्तिरिति पुरा चिरादग्ग्निम्मथित्त्वा यान्दिशं व्वातो वायात्तान्दिशमाहवनीयमुद्धृत्य वायव्व्यामाहुतिञ्जुहुयाथ्ं स विद्याथ्ं समृद्धम्मेऽग्ग्निहोत्रꣳ सर्व्वदेवत्त्यं वायुथ्ं ह्येव सर्व्वाणि भूतान्न्यपियन्ति वायोः पुनर्व्विसृज्ज्यन्ते सैव प्प्रायश्चित्तिर्न्न तदागः कुर्व्वीयेत्त्येतन्नौ भगवन्त्सहेति होवाच ॥ ११ ॥ शौचेयो ज्ञप्प्तः । प्प्रक्ष्यामि त्त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले निवाते सर्व्वेऽग्ग्नयोऽनुगच्छेयुर्व्वेत्थ तद्ध्यं यदत्र जुह्वतो भवतीति वेदेति होवाचाप्प्रियमेवास्मिँल्लोके पश्श्येताप्प्रियममुष्म्मिन्न्यस्यैतदविदितथ्ं स्याद्विद्या-

भिस्त्वेवाहमतारिषमिति किं विदितङ्का प्प्रायश्चित्तिरिति पुरा चिरादग्निम्मथित्वा प्प्राञ्चमाहवनीयमुद्धृत्य जघनेनाहवनीयमुपविश्याहमेवैनदपिबेयꣳ स विद्याꣳ समृद्धम्मेऽग्निहोत्रꣳ सर्व्वदेवत्यम्ब्राह्मणꣳ ह्येव सर्व्वाणि भूतान्न्यपियन्ति ब्ब्राह्मणात्पुनर्व्विसृज्ज्यन्ते सैव प्प्रायश्चित्तिर्न्न तदागः कुर्व्वीयेरथ वा ऽअहमेतन्नावेदिषमिति होवाच ॥ १२ ॥ शौचेयो ज्ञप्तः । इमानि समित्काष्ठान्न्युपायानि भगवन्तमिति स होवाच यदेवन्नावक्ष्यो मूर्द्धा ते व्व्यपतिष्ष्यदेह्युपेहीति तथेति तꣳ होपनिन्न्ये तस्म्मै हैताꣳ शोकतरां व्व्याहृतिमुवाच यत्सत्यन्तस्म्मादु सत्यमेव व्वदेत् ॥ १३ ॥

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ उपनयनधर्मनिरूपणम् ]

ब्रह्मचर्य्यमागामित्याह । ब्ब्रह्मण ऽएवैतदात्मानन्निवेदयति ब्ब्रह्मचार्य्यसानीत्याह ब्ब्रह्मण ऽएवैतदात्मानम्परिददात्यथैनमाह को नामासीति प्प्रजापतिर्व्वै कः प्प्राजापत्यमेवैनन्तत्कृत्वोपनयते ॥ १ ॥ अथास्य हस्तङ्गृह्णाति । इन्द्रस्य ब्ब्रह्मचार्य्यस्यग्निराचार्य्यस्तवाहमाचार्य्यस्तवासाविति । एते वै श्रेष्ठे बलिष्ठे देवते ऽएताभ्यामेवैनꣳ श्रेष्ठाभ्याम्बलिष्ठाभ्यान्देवताभ्याम्परिददाति तथा हास्य ब्ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं व्वेद ॥ २ ॥ अथैनम्भूतेभ्यः परिददाति । प्प्रजापतये त्वा परिददामि

देवाय त्वा सवित्रे परिददामीत्येते वै श्रेष्ठे वर्षिष्ठे देवते ऽएताभ्यामेवैनꣳ श्रेष्ठाभ्यां वर्षिष्ठाभ्यान्देवताभ्याम्परिददाति तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥ ३ ॥ अद्भ्यस्त्वौषधीभ्यः परिददामीति । तदेनमद्भ्यश्चौषधिभ्यश्च परिददाति द्यावापृथिवीभ्यान्त्वा परिददामीति तदेनमाभ्यान्द्यावापृथिवीभ्याम्परिददाति ययोरिदꣳ सर्वमधि विश्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्या ऽइति तदेनꣳ सर्वेभ्यो भूतेभ्यः परिददात्यरिष्ट्यै तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥४॥ * ब्रह्मचार्य्यसीत्याह । ब्रह्मण ऽएवैनन्तत्परिददात्यपोऽशानेत्यमृतं वा ऽआपोऽमृतमशानेत्येवैनन्तदाह कर्म्म कुर्विति वीर्य्यं वै कर्म्म वीर्य्यं कुर्वित्येवैनन्तदाह समिधमाधेहीति समित्स्वात्मानन्तेजसा ब्रह्मवर्चसेनेत्येवैनन्तदाह मा सुषुप्था ऽइति मा मृथा ऽइत्येवैनन्तदाहापोऽशानेत्यमृतं वा ऽआपोऽमृतमशानेत्येवैनन्तदाह तदेनमुभयतोऽमृतेन परिगृह्णाति तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥ ५ ॥ अथास्मै सावित्रीमन्वाह[†] । ताꣳ ह स्मैताम्पुरा सँवत्सरेऽन्वाहुः सँवत्सरसम्मिता वै गर्भाः प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दध्म ऽइति ॥ ६ ॥ अथ षट्सु मासेषु । षड्वा ऽऋतवः सँवत्सरस्य सँवत्सरसम्मिता वै गर्भाः प्रजायन्ते जात ऽएवास्मिँस्तद्वा-

* अत्रशतम् ५८०० ।
† पा० गृ० सू० २. ३. ३ ।

चन्दद्रृध्म ऽइति ॥ ७ ॥ अथ चतुर्विंꣳशत्यहे । चतुर्विंꣳशतिर्वै सँव्वत्सरस्यार्द्धमासाः सँव्वत्सरसम्मिता वै गर्ब्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्रृध्म ऽइति ॥ ८ ॥ अथ द्वादशाहे । द्वादश वै मासा सँव्वत्सरस्य सँव्वत्सरसम्मिता वै गर्ब्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्रृध्म ऽइति ॥ ९ ॥ अथ षडहे । षड्वा ऽऋतवः सँव्वत्सरस्य सँव्वत्सरसम्मिता वै गर्ब्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्रृध्म ऽइति ॥ १० ॥ अथ त्र्यहे । त्रयो वा ऽऋतवः सँव्वत्सरस्य सँव्वत्सरसम्मिता वै गर्ब्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्रृध्म ऽइति ॥११॥ तदुपि श्श्लोकङ्गायन्ति । आचार्य्यो गर्ब्भी भवति हस्तमाधाय दक्षिणन्तृतीयस्याꣳ स जायते सावित्र्या सह ब्ब्राह्मण ऽइति सद्यो ह त्वाव ब्ब्राह्मणायानुब्ब्रूयादाग्नेयो वै ब्ब्राह्मणः सद्यो वा ऽअग्निर्ज्जायते तस्मात्सद्य ऽएव ब्ब्राह्मणायानुब्ब्रूयात् ॥ १२ ॥ ताꣳ हैतामेके । सावित्रीमनुष्टुभमन्न्वाहुर्व्वाग्ग्वा ऽअनुष्टुप्तदस्मिन्नन्न्वाचन्दद्रृध्म ऽइति न तथा कुर्य्याद्यो हैनन्तत्र ब्ब्रूयादा न्न्वा ऽअयमस्य व्वाचमादित मूको भविष्यतीतीश्श्वरो ह तथैव स्यात्तस्मादेताङ्गायत्रीमेव सावित्रीमनुब्ब्रूयात् ॥ १३ ॥ अथ हैके दक्षिणतः । तिष्ठते वासीनाय वान्न्वाहुर्न्न तथा कुर्य्याद्यो हैनन्तत्र ब्ब्रूयाद्बुल्बन्न्वा ऽअयमिममजीजनत बुल्बो भविष्यतीतीश्श्वरो ह तथैव स्यात्तस्मात्पुरस्तादेव प्प्रतीचे समीक्षमाणायानुब्ब्रूयात् ॥ १४ ॥ तां व्वै पच्छोऽन्न्वाह । त्रयो वै

प्प्राणाः प्प्राण ऽउदानो व्व्यानस्तानेवास्मिँस्तद्दधात्यथा-र्द्धशो द्वौ वा ऽइमौ प्प्राणौ प्प्राणोदानावेव प्प्राणोदानावे-वास्मिँस्तद्दधात्यथ कृत्स्नामेको वा ऽअयम्प्राणः कृत्स्न ऽएव प्प्राणमेवास्मिँस्तत्कृत्स्नन्दधाति ॥ १५ ॥ तदाहुः । न ब्ब्राह्मणम्ब्रह्मचर्य्यमुपनीय मिथुनञ्चरेद्गर्भो वा ऽएष भवति यो ब्ब्रह्मचर्य्यमुपैति नेदिमम्ब्राह्मणं व्विषिक्ताद्रेतसो जनया-नीति ॥ १६ ॥ तदु वा ऽआहुः । काममेव चरेद्द्वय्यो वा ऽइमाः प्प्रजा दैव्व्यश्चैव मानुष्ष्यश्च ता वा ऽइमा मानुष्ष्यः प्प्रजाः प्प्रजननात्प्रजायन्ते च्छन्दाँसि वै दैव्व्यः प्प्रजास्तानि मुखतो जनयते तत ऽएतज्जनयते तस्म्मादु काममेव चरेत् ॥ १७ ॥ तदाहुः । न ब्ब्रह्मचारी सन्मद्ध्वश्नीयादोषधीनां व्वा ऽएष परमो रसो यन्मधु नेदन्नाद्यस्यान्तङ्गच्छानीत्यथ ह स्म्माह श्वेतकेतुरारुणेयो ब्ब्रह्मचारी सन्मद्ध्वश्नँस्त्रय्यै वा ऽएतद्विद्यायै शिष्टं यन्मधु स तु रसो यस्येदृक्शिष्टमिति यथा ह वा ऽऋचं वा यजुर्वा साम वाभिव्व्याहरेत्तादृक्तद्य ऽएवं विद्वान्ब्रह्मचारी सन्मद्ध्वश्नाति तस्म्मादु काममेवाश्नीयात् ॥ १८ ॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ शतातिरात्राख्यसत्रविधानमाख्यायिकया ]

देवाश्वा ऽऊर्द्ध्वान्स्वर्ग्गँल्लोकं य्यतः । असुरास्तमसा-न्तरदधुस्ते होचुर्न्न वा ऽअस्यान्न्येन सत्रादपघातोऽस्ति हन्त सत्रमासामहा ऽइति ॥ १ ॥ ते शताग्निष्टोमाः

सत्रमुपेयुः । ते यावदासीनः परापश्श्येत्तावतस्तमोऽपाघ्नन्-
तैवमेव शतोक्थ्येन यावत्तिष्ठन्परापश्श्येत्तावतस्तमोऽपा-
घ्नत ॥ २ ॥ ते होचुः । अप वाव तमो हन्महे न त्वेव
सर्वमिव हन्त प्रजापतिम्पितरम्प्रत्ययामेति ते प्रजापति-
म्पितरम्प्रतीत्योचुरसुरा वै नो भगव ऊर्ध्वान्त्स्वर्गँल्लोकं
य्यतस्तमसान्तरदधुः ॥ ३ ॥ ते शताग्निष्टोमः सत्रमुपैम ।
ते यावदासीनः परापश्श्येत्तावतस्तमोऽपाहन्महोवमेव शतो-
क्थ्येन यावत्तिष्ठन्परापश्श्येत्तावतस्तमोऽपाहन्महि प्र
नो भगवञ्छाधि यथासुराँस्तमोऽपहत्य सर्वम्पाप्मानमप-
हत्य स्वर्गँल्लोकम्प्रज्ञास्याम ऽइति ॥ ४ ॥ स होवाच ।
असर्वक्रतुभ्यां वै यज्ञाभ्यामगन्त यदग्निष्टोमेन चो-
क्थ्येन च शतातिरात्रः सत्रमुपेत तेनासुराँस्तमोऽपहत्य
सर्वम्पाप्मानमपहत्य स्वर्गँल्लोकम्प्रज्ञास्यथेति ॥ ५ ॥ ते
शतातिरात्रः सत्रमुपेयुः । तेनासुराँस्तमोऽपहत्य सर्वम्पा-
प्मानमपहत्य स्वर्गँल्लोकम्प्रजज्ञुस्तेषामर्वाक्पश्चाशोष्वेवाहः-
स्वहरभि रात्रिसामानि परीयू रात्रिमभ्यहःसामानि
॥ ६ ॥ ते होचुः । अमुहाम वै न प्रजानीमो हन्त
प्रजापतिमेव पितरम्प्रत्ययामेति ते प्रजापतिमेव पितर-
म्प्रतीत्योचुरहन्नो रात्रिसामानि रात्र्यामह्नो भवन्ति नः ॥
विपश्चिद्यज्ञान्मुग्धान्विद्वान्धीरोऽनुशाधि न ऽइति ॥ ७ ॥
तान्हैतदुपजगौ । महाहिमिव वै ह्रदाद्वलीयानन्वेत्य ॥
अनुत्त स्वादास्थानात्ततः सत्रन्न तायत ऽइति ॥ ८ ॥
आश्विनं वै वः शस्यमानम् । प्रातरनुवाकमास्थानादनुत्त

यमास्स्थानादनुद्धन्धीराः सन्तो ऽअधीरवत् ॥ प्रशास्त्रा तमुपेत शनैरप्प्रतिशङ्सतेति ॥ ९ ॥ ते होचुः । कथन्नु भगवः शस्तङ्कथमप्प्रतिशस्तमिति स होवाच यत्र होताश्विनः शङ्सन्नाग्नेयस्य क्रतोर्ग्गायत्रस्य च्छन्दसः पारङ्गच्छात्त-त्प्रातिप्प्रस्स्थाता व्वसतीवरीः परिहृत्य मैत्रावरुणस्य हवि-र्द्धानयोः प्प्रातरनुवाकमुपाकुरुतादुच्चैर्होता शङ्सति शनै-रितरो जञ्जप्प्यमान ऽइवान्न्वाह तन्न व्वाचा व्वाचम्प्रत्येति न च्छन्दसा च्छन्दः ॥ १० ॥ परिहिते प्प्रातरनुवाके । यथा-यतनमेवोपाꣳश्वन्तर्य्यामौ हुत्त्वा द्रोणकलशे पवित्रम्प्र-पीड्य निदधाति तिरोह्वयैश्चरित्त्वा प्प्रत्यञ्चः प्प्रातिपरेत्त्य तिरोह्वयानेव भक्षयाद्ध्वा ऽअथानुपूर्व्वं य्यज्ञपुच्छꣳ सꣳ-स्थाप्प्य य ऽऊर्द्ध्वा ऽअन्तर्य्यामाद्ग्रहास्तान्न्गृहीत्त्वा वि-प्प्रुषाꣳ होमꣳ[2] हुत्त्वा सन्तनिञ्च बहिष्प्पवमानेन स्तुत्त्वा-हरेव प्प्रातिपद्याद्ध्वा ऽइति ॥ ११ ॥ तदेतेऽभि श्श्लोकाः । चतुर्ब्भिः सैन्धवैर्य्युक्तैर्द्धीरा व्व्यजहुस्तमः ॥ विद्वाꣳसो ये शतक्रतुदेवाः सत्रमतन्न्वतेति ॥ १२ ॥ चत्त्वारो ह्यत्र युक्ता भवन्ति । द्वौ होतारौ द्वावद्ध्वर्य्यू पर्वेन्नु शक्केव हनूनि कल्प्पयन्नहन्नोरन्तौ व्व्यतिषजन्त धीराः ॥ न दानवा यज्जि-यन्तन्तुमेषां व्विजानीमो व्विततम्मोहयन्ति नः ॥ पूर्व्वस्याह्नः परिशिङ्षन्ति कर्म्म तदुत्तरेणाभिवितन्न्वतेऽह्ना ॥ दुर्व्विज्ञान-

(१) "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" ॥ (कर्मप्र०)
"कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ" ( का० श्रौ० सू० २. ३. ३० )

(२) अभिषवे ग्रहणे च पतितानां सोमबिन्दूनां ग्रहणाशक्यत्वात् तत्प्रत्यवायपरिहाराय घृतहोमस्य विप्रुड्ढोम इति संज्ञा ।

ङ्क्षाव्व्यन्देवतानाथंऽ सोमाः सोमैव्व्यर्तिषक्ताः प्प्लवन्ते ॥ समानान्त्सदमुक्षन्ति ह्रयान्काष्ठभृतो यथा ॥ पूर्ण्णान्न्परिस्नुतः कुम्भाञ्जनमेजयसादन ऽइत्त्यसुररक्षसान्न्यपेयुः ॥१३॥

पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

[ पञ्चमहायज्ञानां महासत्रत्वप्रतिपादनम् ]

पञ्चैव महायज्ञाः * । तान्न्येव महासत्राणि भूतयज्ञो मनुष्ष्ययज्ञः पितृयज्ञो देवयज्ञो ब्ब्रह्मयज्ञ ऽइति ॥ १ ॥ अहरहर्ब्भूतेब्भ्यो बलिंऽ हरेत् । तथैतम्भूतयज्ञंऽ समाप्नोत्त्यहरहर्द्दद्यादोदपात्रात्तथैतम्मनुष्ष्ययज्ञंऽ समाप्नोत्त्यहरहः स्वधाकुर्ग्यादोदपात्रात्तथैतम्पितृयज्ञंऽ समाप्नोत्त्यहरहः † स्वाहाकुर्ग्यादाकाष्ठात्तथैतन्देवयज्ञंऽ समाप्नोति ॥२॥ अथ ब्ब्रह्मयज्ञः । स्वाद्ध्यायो वै ब्ब्रह्मयज्ञस्तस्य वा ऽएतस्य ब्ब्रह्मयज्ञस्य व्वागेव जुहूर्म्मन ऽउपभृच्चक्षुर्द्ध्रुवा मेधा स्स्रुवः सत्त्यमवभृथः स्वर्ग्गो लोक ऽउदयनं य्यावन्तंऽ ह वा ऽइमाम्पृथिवीं व्वित्तेन पूर्ण्णान्ददँल्लोकञ्जयति त्रिस्तावन्तञ्जयति भूयाथंऽसञ्चाक्षय्यं य्य ऽएवं व्विद्वानहरहः स्वाद्ध्यायमधीते तस्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ ३ ॥ पय ऽआहुतयो ह वा ऽएता देवानाम् । यदृचः स य ऽएवं व्विद्वानृचोऽहरहः स्वाद्ध्यायमधीते पय ऽआहुतिभिरेव तद्देवाँस्तर्प्पयति त

* "अथातः पञ्च महायज्ञाः" पा० गृ० सू० का० २ क० ९ सू० १ ।
† "अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठाद्देवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात्" पा० गृ० सू० २. ९. १६ ।

ऽएनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वा-त्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधु-कुल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ४ ॥ आज्याहुतयो ह वा ऽएता देवानाम्। यद्यजूꣳषि स य ऽएवं विद्वा-न्यजूꣳष्यहरहः स्वाध्यायमधीत ऽआज्याहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भि-र्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ५ ॥ सोमाहुतयो ह वा ऽएता देवानाम्। यत्सामानि स य ऽएवं विद्वान्त्सामान्यहरहः स्वाध्यायमधीते सोमाहुति-भिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्तास्तर्प्पयन्ति योग-क्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ६ ॥ मेद ऽआहुतयो ह वा ऽएता देवानाम्। यदथर्वा-ङ्गिरसः स य ऽएवं विद्वानथर्वाङ्गिरसोऽहरहः स्वाध्याय-मधीते मेद ऽआहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्ता-स्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥७॥ मध्वाहुतयो ह वा ऽएता देवानाम्। यद-नुशासनानि * विद्या † वाकोवाक्यमितिहासपुराणङ्गाथा

* अनुशिष्यन्ते—व्युत्पाद्यन्ते एभिरित्यनुशासनानि-व्याकरणनिरुक्तादीनि षडङ्गानि।

† न्यायमीमांसादयः।

(१) उक्तिप्रत्युक्तिरूपं प्रकरणं वाकोवाक्यम्।

नाराशꣳस्यः स य ऽएवं विद्वाननुशासनानि विद्या वाकोवाक्क्यमितिहासपुराणङ्गाथा नाराशꣳसीरित्त्यहरहः स्वाद्ध्यायमधीते मद्ध्वाहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्प्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्ण्याभिः सम्पद्भिर्ग्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ८ ॥ तस्य वा ऽएतस्य ब्ब्रह्मयज्ञस्य । चत्त्वारो व्वषट्कारा यद्वातो व्वाति यद्विद्द्योतते यत्स्तनयति यदवस्फूर्ज्जति तस्म्मादेवंविद्वाते व्वाति विद्द्योतमाने स्तनयत्त्यवस्फूर्ज्जत्त्यधीयीतैव व्वषट्काराणामच्छम्बट्कारायाति ह वै पुनर्म्मृत्त्युम्मुच्च्यते गच्छति ब्ब्रह्मणः सात्त्मताꣳ स चेदपि प्प्रबलमिव न शक्क्नुयादप्प्येकन्देवपदमधीयीतैव तथा भूतेब्भ्यो न हीयते ॥ ९ ॥

पञ्चमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या ॥ ११२ ॥



[ स्वाध्यायप्रशंसा ]

अथातः स्वाद्ध्यायप्प्रशꣳसा । प्प्रिये स्वाद्ध्यायप्प्रवचने भवतो युक्तमना भवत्त्यपराधीनोऽहरहरर्त्थान्त्साधयते सुखꣳ स्वपिति परमचिकित्त्सक ऽआत्मनो भवतीन्द्रियसंय्यमश्चैकारामता च प्प्रज्ञावृद्धिर्य्यशो लोकपक्तिः प्प्रज्ञा वर्द्धमाना चतुरो धर्म्मान्ब्राह्मणमभिनिष्प्पादयति ब्ब्राह्मण्ण्यम्प्रतिरूपचर्य्यां यशो लोकपक्तिँल्लोकः पच्च्यमान-

श्चतुर्ब्भिर्द्धर्म्मैर्ब्राह्मणम्भुनक्त्यर्च्चया च दानेन चाज्येयतया चावद्ध्यतया च ॥ १ ॥ ये ह वै के च श्रमाः। इमे द्यावापृथिवी ऽअन्तरेण स्वाद्ध्यायो हैव तेषाम्परमता काष्ठा य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्म्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ २ ॥ यद्यद्ध वा ऽअयञ्छन्दसः। स्वाद्ध्यायमधीते तेन तेन हैवास्य यज्ञक्रतुनेष्ट्रम्भवति य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्म्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ ३ ॥ यदि ह वा अप्प्यभ्भ्यक्तः। अलङ्कृतः सुहितः सुखे शयने शयानः स्वाद्ध्यायमधीत ऽआ हैव स नखाग्ग्रेभ्भ्यस्तप्प्यते य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्म्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ ४ ॥ मधु ह वा ऽऋचः। घृतꣳ ह सामान्य-मृतं यजूꣳषि यद्ध वा ऽअयं वाकोवाक्क्यमधीते क्षीरौदनमाꣳसौदनौ हैव तौ ॥ ५ ॥ मधुना ह वा ऽएष देवाँ-स्तर्प्पयति। य ऽएवं विद्वानृचोऽहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्व्वैः कामैः सर्व्वैर्भ्भोगैः ॥ ६ ॥ घृतेन ह वा ऽएष देवाँस्तर्प्पयति। य ऽएवं विद्वान्त्सामान्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्व्वैः कामैः सर्व्वैर्भ्भोगैः ॥ ७ ॥ अमृतेन ह वा ऽएष देवाँस्तर्प्पयति। य ऽएवं विद्वान्यजूꣳष्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्व्वैः कामैः सर्व्वैर्भ्भोगैः ॥८॥ क्षीरौदनमाꣳसौदनाभ्भ्याꣳ ह वा ऽएष देवाँस्तर्प्पयति। य ऽएवं विद्वान्वाकोवाक्क्यमितिहासपुराणमित्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्व्वैः कामैः सर्व्वै-

भोगैः ॥ ९ ॥ यन्ति वा ऽआपः । एत्यादित्य ऽएति चन्द्रमा यन्ति नक्षत्राणि यथा ह वा ऽएता देवता नेयुर्न्न कुर्य्युरेवꣳ हैव तदहर्ब्राह्मणो भवति यदहः स्वाध्यायन्नाधीते तस्मात्स्वाध्यायोऽध्येतव्यस्तस्मादप्यृचं वा यजुर्वा साम वा गाथां वा कुंव्यां वाभिव्याहरेद्व्रतस्याव्यवच्छेदाय ॥ १० ॥

पञ्चमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



[ आख्यायिकया व्याहृत्युत्पत्तिकथनम् ]

प्रजापतिर्वा ऽइदमग्र ऽआसीत् । एक ऽएव सोऽकामयत स्याम्प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्माच्छ्रान्तात्तेपानात्त्रयो लोका ऽअसृज्यन्त पृथिव्यन्तरिक्षन्द्यौः ॥ १ ॥ स ऽइमाँस्त्रीँल्लोकानभितताप । तेभ्यस्तप्तेभ्यस्त्रीणि ज्योतीꣳष्यजायन्ताग्निर्य्योऽयम्पवते सूर्यः ॥ २ ॥ स ऽइमानि त्रीणि ज्योतीꣳष्यभितताप । तेभ्यस्तप्तेभ्यस्त्रयो वेदा ऽअजायन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेदः सूर्य्यात्सामवेदः ॥ ३ ॥ स इमाँस्त्रीन्वेदानभितताप । तेभ्यस्तप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूरित्यृग्वेदाद्भुव ऽइति यजुर्वेदात्स्वरिति सामवेदात्तदृग्वेदेनैव होत्रमकुर्वत यजुर्वेदेनाध्वर्यवꣳ सामवेदेनोद्गीथं यदेव त्रय्यै विद्यायै शुक्रन्तेन ब्रह्मत्वमथोच्चक्राम ॥ ४ ॥ ते देवाः प्रजापतिमब्रुवन् । यदि न ऋक्तो वा यजुष्टो वा सामतो वा यज्ञो ह्वलेत्केनैनम्भिषज्येमेति ॥ ५ ॥ स होवाच ।

यद्यृक्तो भूरिति चतुर्ग्गृहीतमाज्यङ्गृहीत्वा गार्हपत्ये जुहवथ यदि यजुष्टो भुव ऽइति चतुर्ग्गृहीतमाज्यङ्गृहीत्वाग्नीध्रीये जुहवथान्न्वाहार्य्यपचने†वा हविर्य्यज्ञे यदि सामतः स्वरिति चतुर्ग्गृहीतमाज्यङ्गृहीत्वाहवनीये जुहवथ यद्यु ऽअविज्ञातमसत्त्सर्वाण्यनुद्रुत्याहवनीये जुहवथ तदृग्वेदेनैवऽर्ग्वेदम्भिषज्यति यजुर्वेदेन यजुर्वेदꣳ सामवेदेन सामवेदꣳ स यथा पर्व्वणा पर्व्व सन्दद्ध्यादेवꣳ हैव स सन्दधाति य ऽएताभिर्भिषज्यत्यथ यो ह्यतोऽन्न्येन भिषज्यति यथा शीर्ण्णेन शीर्ण्णꣳ सन्धित्सेद्यथा वा शीर्ण्णे गरमभिनिदध्यादेवन्तत्तस्मादेवंविदमेव ब्ब्रह्माणङ्कुर्वीत नानेवंविदम् ॥ ६ ॥ तदाहुः । यदृचा होत्रङ्क्रियते यजुषाध्वर्य्यवꣳ साम्म्नोद्गीथोऽथ केन ब्ब्रह्मत्वमित्यनया त्रय्या विद्ययेति ह ब्ब्रूयात् ॥ ७ ॥

पञ्चमाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥



[ अंश्वदाभ्ययोर्ग्रहयोरात्मवागादिरूपतया समुच्चित्यानुष्ठानम् ]

प्रजापतिर्ह वा ऽएष यदꣳशुः । सोऽस्यैष ऽआत्मैवात्मा ह्ययम्प्रजापतिर्व्वागेवादाभ्यः स यदꣳशुङ्गृहीत्वादाभ्यङ्गृह्णात्यात्मानमेवास्यैतत्संस्कृत्य तस्म्मिन्नेतां व्वाचम्प्रतिष्ठापयति ॥ १ ॥ अथ मनो ह वा ऽअꣳशुः । वागदाभ्यः प्प्राण ऽएवाꣳशुरुदानोऽदाभ्यश्चक्षुरेवाꣳशुः श्रोत्रमदा-

† अन्वाहार्यपचने—दक्षिणाग्नौ ।

ऽभ्यस्तद्यदेतौ ग्रहौ गृह्णन्ति सर्व्वत्वायैव कृत्स्नतायै ॥ २ ॥ अथ देवाश्च ह वा ऽअसुराश्च । उभये प्प्राजापत्त्या ऽअस्प्पर्द्धन्त त ऽएतस्म्मिन्नेव यज्ञे प्प्रजापतावस्प्पर्द्धन्ता-स्म्माकमयर्ठ्ठं स्यादस्म्माकमयर्ठ्ठं स्यादिति ॥ ३ ॥ ततो देवाः । अर्च्चन्तः श्राम्म्यन्तश्चेरुस्त ऽएतङ्ग्रहन्ददृशुरेत-मदाभ्यन्तमगृह्णत ते सवनानि प्प्रावृहन्त ते सर्व्वं य्यज्ञः समवृञ्जतान्तरायन्नसुरान्न्यज्ञात् ॥ ४ ॥ ते होचुः । अदभाम वा ऽएनानिति तस्म्मादुदाभ्यो न वै नोऽदभन्निति तस्म्मा-ददाभ्यो व्वाग्वा ऽअदाभ्यः सेयमदब्धा व्वाक्तस्म्मा-द्वेवादाभ्य ऽएवः ह वै द्विषतो भ्भ्रातृव्व्यस्य सर्व्वं य्यज्ञः संव्वृङ्क्त ऽएवन्द्विषन्तम्भ्रातृव्व्यः सर्व्वस्म्माद्यज्ञा-न्निर्भजति बहिर्द्धा करोति य ऽउ ऽएवमेतद्वेद ॥ ५ ॥ स येनैव पात्रेणार्ठ्ठशुङ्गृह्णाति । तस्म्मिन्नेव पात्रे निग्ग्राभ्भ्या[1]-भ्योऽप ऽआनीय तस्म्मिन्नेतानर्ठ्ठशून्न्गृह्णाति A ॥६॥ 'उपया[2]-मगृहीतोऽसि । अग्नये त्वा गायत्रच्छन्दसङ्गृह्णामी'ति गायत्र-म्प्रातःसवनन्तत्प्रातःसवनम्प्रवृहन्ती'न्द्राय[3] त्वा त्रिष्टुप्प्छन्द-सङ्गृह्णामी'ति त्रैष्टुभम्माध्यन्दिनः सवनन्तन्माध्यन्दिनः सवनम्प्रवृहति 'व्विश्वेभ्यस्त्वा[4] देवेभ्यो जगच्छन्दसङ्गृ-ह्णामी'ति जागतन्तृतीयसवनन्तत्तृतीयसवनम्प्रवृहत्य'नुष्टु[5]-प्तेऽभिगर' ऽइति यद्वा ऽऊर्द्ध्वः सवनेभ्यस्तदानुष्टुभन्त-

(१) अभिषोतव्यस्य सोमस्य सेवनीया आपो निग्राभ्या उच्यन्ते ।

(A) का० श्रौ० सू० अ० १२ क० ५ सू० १६ ।

(२) शु० य० वे० सं० अ० ८ क० ४७ । (३) शु० य० वे० सं० अ० ८ क० ४७ । (४) शु० य० वे० सं० अ० ८ क० ४७ । (५) शु० य० वे० सं० अ० ८ क० ४७ ।

दुवैतत्प्रवृहति तन्नाभिषुणोति वृज्रो वै ग्ग्रावा व्वागदाभ्यो नेद्वज्रेण व्वाचᳬ हिनसानीति ॥ ७ ॥ अᳬशूनेव्वाधूनोतिB । '[1]व्वेशीनान्त्वा पत्मन्नाधूनोमि कुकूननानान्त्वा पत्मन्नाधूनोमि भन्दुनानान्त्वा पत्मन्नाधूनोमि मदिन्तमानान्त्वा पत्मन्नाधूनोमि मधुन्तमानान्त्वा पत्मन्नाधूनोमी'त्त्येता वै दुवीरापस्तद्याश्चैव दुवीरापो याश्चेमा मानुष्ष्यस्ताभिरेवास्मिन्नेतदुभयीभी रसन्दधाति ॥ ८ ॥ '[2]शुक्रन्त्वा शुक्र ऽआधूनोमी'ति । शुक्रᳬ ह्येतच्छुक्र ऽआधूनो'त्त्यह्नो रूपे [3]सूर्य्यस्य रश्मिष्ष्वि'ति तदुह्नश्चैवैनमेतद्रूपे सूर्य्यस्य च रश्मिष्ष्वाधूनोति ॥ ९ ॥ '[4]ककुभᳬ रूपं व्वृषभस्य रोचते बृहदि'ति । एतद्वै ककुभᳬ रूपं व्वृषभस्य रोचते बृहद्य ऽएष तपति '[5]शुक्रᳬ शुक्रस्य पुरोगाᳬ सोमᳬ सोमस्य पुरोगा' ऽइति तच्छुक्रमेवैतच्छुक्रस्य पुरोगाङ्करोति सोमᳬ सोमस्य पुरोगां '[6]यत्ते सोमादाभ्यन्नाम जागृवि तस्मै त्वा गृह्णामी'त्त्येतद्ध वा ऽअस्यादाभ्यन्नाम जागृवि यद्वाक्तद्वाचमेवैतद्वाचे गृह्णाति ॥ १० ॥ अथोपनिष्क्रम्म्य जुहोति* । '[7]तस्मै ते सोम सोमाय स्वाहे'ति तत्सोममेवैतत्सोमाय जुहोति तथो व्वाचमग्नौ न प्प्रवृणक्त्यथ हिरण्यमभिव्व्यनित्य-

(B) का० श्रौ० सू० १२. ५. १९ ।

( १ ) शु० य० वे० सं० अ० ८ क० ४८ । ( २ ) शु० य० वे० सं० अ० ८ क० ४८ । ( ३ ) शु० य० वे० सं० अ० ८ क० ४८ । ( ४ ) शु य० वे० सं० अ० ८ क० ४९ । ( ५ ) शु० य० वे० सं० अ० ८ क० ४९ । ( ६ ) शु० य० वे० सं० अ० ८ क० ४९ ।

* "तस्मै त इति जुहोति" का० श्रौ० सू० १२. ५. २ ।

(७) शु० य० वे० सं० अ० ८ क० ४९ ।

सावेव बन्धुस्तस्य तावतीरेव दक्षिणा यावतीरहःशोः * ॥ ११ ॥ अथाᳬशून्पुनरप्यर्जति † । 'उशिक्त्वन्देव सोमाग्नेः प्रियम्पाथोऽपीहि वशी त्वन्देव सोमेन्द्रस्य प्रियम्पाथोऽपीह्यस्मत्सखा त्वन्देव सोम विश्वेषान्देवानाम्प्रियम्पाथोऽपीही'ति सवनानि वा ऽअदः प्रवृहति तान्येवैतत्पुनराप्यायत्ययातयामानि करोति तैरयातयामैर्यज्ञन्तन्वते ॥ १२ ॥

पञ्चमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥



[ आख्यायिकया समिदाधानादीनां वनस्पत्यादिरूपफलप्राप्तिसाधनताकथनम् ]

भृगुर्ह वै वारुणिः । वरुणम्पितरं विद्ययातिमेने तद्ध वरुणो विद्वाञ्चकारारति वै मा विद्यया मन्यत ऽइति ॥ १ ॥ स होवाच । प्राङ् पुत्रक व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वा दक्षिणा व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वा प्रत्यग्व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वोदग्व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वैतयोः पूर्वयोरुत्तरमन्ववान्तरदेशं व्रजतात्तत्र यत्पश्येस्तन्मे ऽआचक्षीथा ऽइति ॥ २ ॥ स ह तत ऽएव प्राङ् प्रवव्राज । इदु पुरुषैः पुरुषान्पर्वाण्येषाम्पर्वशः संव्रश्च्य पर्वशो विभजमानानिदन्तवेदम्म-

* "अद्रुशुवद्दक्षिणा" का० श्रौ० सू० १२. ५. २२ ।

† का० श्रौ० सू० १२. ५. २१ ।

(१) शु० य० वे० सं० अ० ८ क० ५० ।

मेति स होवाच भीष्ममम्बत भोः पुरुषान्न्वा ऽएतत्पुरुषाः पर्वाण्येषाम्पर्वशः संव्रश्चम्पर्वशो ऽव्यभक्षतेति ते होचुरित्थं व्वा ऽइमेऽस्म्मानमुष्मिँल्लोकेऽसचन्त तान्न्वयमिदमिह प्प्रातिसचामहा ऽइति स होवाचास्तीह प्प्रायश्चित्ती३रित्त्यस्तीति कांति पिता ते वेदेति ॥ ३ ॥ स ह तत ऽएव दक्षिणा प्प्रवव्राज । इदु पुरुषैः पुरुषान्पर्वाण्येषाम्पर्वशः सङ्कर्त्तम्पर्वशो विभजमानानिदन्तवेदम्ममेति स होवाच भीष्ममम्बत भोः पुरुषान्न्वा ऽएतत्पुरुषाः पर्वाण्येषाम्पर्वशः सङ्कर्त्तम्पर्वशो ऽव्यभक्षतेति ते होचुरित्थं व्वा ऽइमेऽस्म्मानमुष्मिँल्लोकेऽसचन्त तान्न्वयमिदमिह प्प्रातिसचामहा ऽइति स होवाचास्तीह प्प्रायश्चित्ती३रित्त्यस्तीति कांति पितैव ते वेदेति ॥ ४ ॥ स ह तत ऽएव प्प्रत्यङ् प्रवव्राज । इदु पुरुषैः पुरुषाँस्तूष्णणीमासीनाँस्तूष्णणीमासीनैरद्यमानान्त्स होवाच भीष्ममम्बत भोः पुरुषान्न्वा ऽएतत्पुरुषास्तूष्णणीमासीनाँस्तूष्णणीमासीना ऽअदन्तीति ते होचुरित्थं व्वा ऽइमेऽस्म्मानमुष्मिँल्लोकेऽसचन्त तान्न्वयमिदमिह प्प्रातिसचामहा ऽइति स होवाचास्तीह प्प्रायश्चित्ती३रित्त्यस्तीति कांति पितैव ते वेदेति ॥ ५ ॥ स ह तत ऽएवोदङ् प्रवव्राज । इदु पुरुषैः पुरुषानाक्क्रन्दयत ऽआक्क्रन्दयद्भिरद्यमानान्त्स होवाच भीष्ममम्बत भोः पुरुषान्न्वा ऽएतत्पुरुषा ऽआक्क्रन्दयत ऽआक्क्रन्दयन्तोऽदन्तीति ते होचुरित्थं व्वा ऽइमेऽस्म्मानमु-

( १ ) 'ग' 'ज' पुस्तकयोः 'एदु' इति पाठ उपलभ्यते ।

ष्मिन्ँल्लोकेऽसचन्त तान्न्वयमिदमिह प्रतिसचामहा ऽइति स होवाचास्तीह प्रायश्चित्तीश्रित्यस्तीति कातिं पितैव ते वेदेति ॥ ६ ॥ स ह तत ऽएवैतयोः पूर्व्वयोः । उत्तर-मन्ववान्तरदेशम्प्रवव्राजेदु स्त्रियौ कल्ल्याणीश्चातिकल्ल्या-णीश्च ते ऽअन्तरेण पुरुषः कृष्णः पिङ्गाक्षो दण्डपाणि-स्तस्थौ तद्ध हैनन्दृष्ट्वा भीर्व्विवेद स हेत्य संविवेश तद्ध ह पितोवाचाधीष्व स्वाध्यायङ्कस्मान्नु स्वाध्यायन्नाधीष ऽइति स होवाच किमध्येष्ये न किञ्चनास्तीति तद्ध व्वरुणो व्विदाञ्चकाराद्रर्येग्वा ऽइति ॥ ७ ॥ स होवाच । यान्वै-तत्प्राच्च्यान्दिश्श्यद्राक्षीः पुरुषैः पुरुषान्पर्व्वाण्ण्येषाम्पर्व्वशः संव्रश्चम्पर्व्वशो व्विभजमानानिदन्तवेदम्ममेति व्वनस्पतयो वै ते ऽअभूवन्त्स यद्वनस्पतीनाᳬं समिधमादधाति तेन व्वनस्पतीनवरुन्द्धे तेन व्वनस्पतीनाँल्लोकञ्जयति ॥ ८ ॥ अथ यानेतद्दक्षिणायान्दिश्श्यद्राक्षीः । पुरुषैः पुरुषान्पर्व्वा-ण्ण्येषाम्पर्व्वशः सङ्कर्त्तम्पर्व्वशो व्विभजमानानिदन्तवेदम्म-मेति पशवो वै ते ऽअभूवन्त्स यत्पयसा जुहोति तेन पशूनवरुन्द्धे तेन पशूनाँल्लोकञ्जयति ॥ ९ ॥ अथ यानेतत्प्रती-च्च्यान्दिश्श्यद्राक्षीः । पुरुषैः पुरुषाँस्तूष्णीमासीनाँस्तूष्णी-मासीनैरद्यमानानोषधयो वै ता ऽअभूवन्त्स यत्तृणेनाव-ज्योतयति तेनौषधीरवरुन्द्धे तेनौषधीनाँल्लोकञ्जयति ॥ १० ॥ अथ यानेतदुदीच्च्यान्दिश्श्यद्राक्षीः । पुरुषैः पुरुषानाक्क-न्दयत ऽआक्कन्दयद्भिरद्यमानानापो वै ता ऽअभूवन्त्स

(१) 'ग्र' इत्यस्य स्थाने 'द्रा' इति 'ग' 'ज' पुस्तकयोः ।

यदपः प्रत्यानयति तेनापोऽवरुन्द्धे तेनापाँल्लोकञ्जयति ॥ ११ ॥ अथ ये ऽएते । स्त्रियावद्राक्षीः कल्ल्याणीञ्चाति-कल्ल्याणीञ्च सा या कल्ल्याणी सा श्रद्धा स यत्पूर्वा-माहुतिञ्जुहोति तेन श्रद्धामवरुन्द्धे तेन श्रद्धाञ्जयत्यथ यातिकल्ल्याणी साऽश्रद्धा स यदुत्तरामाहुतिञ्जुहोति तेनाऽश्रद्धामवरुन्द्धे तेनाऽश्रद्धाञ्जयति ॥१२॥ अथ य ऽएने । सोऽन्तरेण पुरुषः कृष्णः पिङ्गाक्षो दण्डपाणिरस्त्था-क्क्रोधो वै सोऽभूत्स यत्स्रुच्यप ऽआनीय निनयति तेन क्क्रोधमवरुन्द्धे तेन क्क्रोधञ्जयति स य ऽएवं विद्वान-ग्निहोत्रञ्जुहोति तेन सर्वञ्जयति सर्वमवरुन्द्धे ॥ १३ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ आख्यायिकयाग्निहोत्राहुतिप्राशस्त्यप्रतिपादनम् ]

जनको ह वै वैदेहः । ब्राह्मणैर्द्धावयद्भिः समाजगाम श्वेतकेतुनारुणेयेन सोमशुष्मेण सात्ययज्ञिना याज्ञ-वल्क्येन तान्होवाच कथङ्कथमग्निहोत्रञ्जुहुथेति ॥ १ ॥ स होवाच । श्वेतकेतुरारुणेयो घर्म्मावेव सम्म्राडहमजस्त्रौ यशसा विष्यन्दमानावन्न्योऽन्न्यस्मिञ्जुहोमीति कथन्त-दित्यादित्यो वै घर्म्मस्तं सायमग्नौ जुहोम्म्यग्निर्वै घर्म्म-स्तम्प्रातरादित्ये जुहोमीति किं स भवति य ऽएवञ्जुहोत्त्य-जस्त्र ऽएव श्रिया यशसा भवत्त्येतयोश्च देवतयोः सायुज्यं सलोकताञ्जयतीति ॥ २ ॥ अथ होवाच सोमशुष्मः सात्य-यज्ञिः । तेज ऽएव सम्म्राडहन्तेजसि जुहोमीति कथन्त-

(१) 'विष्यन्द' इति 'ग' 'ज' पुस्तकयोः ।

दित्यादित्यो वै तेजस्तꣳ सायमग्नौ जुहोम्म्यग्निर्वै तेजस्तत्प्रातरादित्ये जुहोमीति किꣳ स भवति य ऽएवञ्जुहोतीति तेजस्वी यशस्व्यन्नादो भवत्येतयोश्चैव देवतयोः सायुज्यꣳ सलोकताञ्जयतीति ॥ ३ ॥ अथ होवाच याज्ञवल्क्यः । यदहमग्निमुद्धराम्म्यग्निहोत्रमेव तदुद्यच्छाम्म्यादित्यं व्वा ऽअस्तं य्यन्तꣳ सर्वे देवा ऽअनुयन्ति ते म ऽएतमग्निमुद्धृतन्दृष्ट्वोपावर्त्तन्तेऽथाहम्पात्राणि निर्णिज्ज्योपवाप्प्याग्निहोत्रीन्दोहयित्वा पश्श्यन्न्पश्श्यतस्तर्प्पयामीति त्वन्नेदिष्टं य्याज्ञवल्क्याग्निहोत्रस्यामीमाꣳसिष्ठा धेनुशतन्ददामीति होवाच न त्वेवैनयोस्त्वमुत्क्रान्तिन्न गतिन्न प्प्रतिष्ठान्न तृप्तिन्न पुनरावृत्तिन्न लोकम्प्रत्युत्थायिनमित्त्युक्त्वा रथमास्थाय प्प्रधावयाञ्चकार ॥ ४ ॥ ते होचुः । अति वै नोऽयꣳ राजन्न्यबन्धुरवादीद्धन्तैनम्ब्रह्मोद्यमाह्वयामहा ऽइति स होवाच याज्ञवल्क्यो ब्ब्राह्मणा वै वयꣳ स्म्मो राजन्न्यबन्धुरसौ यद्यमुं वयञ्जयेम कमजैष्म्मेति ब्ब्रूयामाथ यद्यसावस्म्माञ्जयेद्ब्राह्मणान्न्राजन्न्यबन्धुरजैषीदिति नो ब्ब्रूयुर्म्मेदमाद्दृध्वमिति तद्धास्य जज्ञुरथ ह याज्ञवल्क्यो रथमास्थायानुप्प्रधावयाञ्चकार तꣳ हान्वाजगाम स होवाचाग्निहोत्रं य्याज्ञवल्क्य व्वेदितूꣳमित्त्यग्निहोत्रꣳ सम्म्राडिति ॥ ५ ॥ ते वा ऽएते ऽआहुती हुते ऽउत्क्रामतः । ते ऽअन्तरिक्षमाविशतस्ते ऽअन्तरिक्षमेवाहवनीयङ्कुर्व्वाते वायुꣳ समिधम्मरीचीरेव शुक्क्रामाहुतिन्ते ऽअन्तरिक्षन्तर्प्पयतस्ते तत ऽउत्क्रामतः ॥ ६ ॥ ते दिवमाविशतः । ते दिवमेवा-

हवनीयङ्कुर्वाते ऽआदित्यः समिधश्चन्द्रमसमेव शुक्का-माहुतिन्ते दिवन्तर्प्पयतस्ते तत ऽआवर्त्तेते ॥ ७ ॥ ते ऽइमामाविशतः । ते ऽइमामेवाहवनीयङ्कुर्वाते ऽअग्निः समिधमोषधीरेव शुक्रामाहुतिन्ते ऽइमान्तर्प्पयतस्ते तत ऽउत्क्रामतः ॥ ८ ॥ ते पुरुषमाविशतः । तस्य मुखमेवाह-वनीयङ्कुर्वाते जिह्वाᳬं समिधमन्नमेव शुक्रामाहुतिन्ते पुरुषन्तर्प्पयतः स य ऽएवं विद्वानश्नात्यग्निहोत्रमेवास्य हुतम्भवति ते तत ऽउत्क्रामतः ॥९॥ [अर्धः प्रपाठकः ॥५१॥] ते स्त्रियमाविशतः । तस्या ऽउपस्थमेवाहनीयङ्कुर्वाते धार-काᳬं समिधन्धारका ह वै नामैषैतया ह वै प्प्रजापतिः प्प्रजा धारयाञ्चकार रेत ऽएव शुक्रामाहुतिन्ते स्त्रियन्तर्प्पयतः स य ऽएवं विद्वान्मिथुनमुपैत्यग्निहोत्रमेवास्य हुतम्भवति यस्ततः पुत्रो जायते स लोकः प्प्रत्युत्थाय्येतदग्निहोत्रं य्याज्ञवल्क्य नातः परमस्तीति होवाच तस्मै ह याज्ञवल्क्यो व्वरन्ददौ स होवाच कामप्प्रश्न ऽएव मे त्वयि याज्ञवल्क्यास दिति ततो ब्ब्रह्मा जनक ऽआस ॥ १० ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ आख्यायिकयाऽग्निहोत्रदर्शपूर्णमासादियागदेवतानां तत्त्वतः प्राण-शब्दाभिधेयपरमात्मरूपताप्रतिपादनम् ]

जनको ह वैदेहः । बहुदक्षिणेन यज्ञेनेजे स ह गवाᳬं सहस्रमवरुन्धन्नुवाचैता वो ब्ब्राह्मणा यो ब्ब्रह्मिष्ठः स ऽउदजतामिति ॥ १ ॥ स होवाच याज्ञवल्क्यः ।

( १ ) ब्रह्मिष्ठः ।

अर्वाचीरेता ऽइति ते होचुस्त्वꣳ स्विन्नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ ऽइति स होवाच नमोऽस्तु ब्रह्मिष्ठाय गोकामा ऽएव वयꣳ स्म ऽइति ॥ २ ॥ ते होचुः । को न ऽइमम्प्रक्ष्यतीति स होवाच विदग्धः शाकल्ल्योऽहमिति तꣳ ह प्प्रतिख्यायोवाच त्वाꣳ स्विच्छाकल्ल्य ब्राह्मणा ऽउल्म्मुकावक्षयणमक्रूता३ ऽइति ॥ ३ ॥ स होवाच । कति देवा याज्ञवल्क्येति त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिꣳशदित्त्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय ऽइत्त्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्त्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यद्ध्यर्द्ध ऽइत्त्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक ऽइत्त्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ ४ ॥ स होवाच । महिमान ऽएवैषामेते त्रयस्त्रिꣳशत्त्वेव देवा ऽइति कतमे ते त्रयस्त्रिꣳशदित्त्यष्टौ वसव ऽएकादश रुद्रा द्वादशादित्यास्त ऽएकत्रिꣳशदिन्द्रश्चैव प्प्रजापतिश्च त्रयस्त्रिꣳशाविति ॥ ५ ॥ कतमे वसव ऽइति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षञ्चादित्त्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव ऽएते हीदꣳ सर्वं वासयन्ते ते यदिदꣳ सर्वं वासयन्ते तस्म्माद्वसव ऽइति ॥ ६ ॥ कतमे रुद्रा ऽइति । दशेमे पुरुषे प्प्राणा ऽआत्मैकादशस्ते यदास्म्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोद-

(१) अर्धदग्धकाष्ठमुल्मुकम्—तस्य वहिर्निरसनमवक्षयणम् ।

यन्ति तद्यद्रोदयन्ति तस्मादुद्रा ऽइति ॥ ७ ॥ कतम ऽआदित्त्या ऽइति । द्वादश मासाः सँव्वत्सरस्यैत ऽआदित्त्या ऽएते हीदꣳ सर्व्वमाददाना यन्ति ते यदिदꣳ सर्व्वमाददाना यन्ति तस्मादादित्त्या ऽइति ॥ ८ ॥ कतम ऽइन्द्रः कतमः प्प्रजापतिरिति । स्तनयित्त्नुरेवेन्द्रो यज्ञः प्प्रजापतिरिति कतम स्तनयित्त्नुरित्त्यशनिरिति कतमो यज्ञ ऽइति पशव ऽइति ॥ ९ ॥ कतमे ते त्रयो देवा ऽइति । इम ऽएव त्रयो लोका ऽएषु हीमे सर्व्वे देवा ऽइति कतमौ तौ द्वौ देवावित्त्यन्नञ्चैव प्प्राणश्चेति कतमोऽद्ध्यर्द्ध ऽइति योऽयम्पवत ऽइति यदस्मिन्निदꣳ सर्व्वमद्ध्याद्ध्र्नोत्तेनाद्ध्यर्द्ध ऽइति कतम ऽएको देव ऽइति प्प्राण ऽइति ॥ १० ॥ स होवाच । अनतिप्प्रश्न्यां म्मा देवतामत्त्यप्राक्षीः पुरेतित्त्थ्यै मरिष्ष्यसि न तेऽस्त्थीनि चन गृहान्प्प्राप्प्स्यन्तीति स ह तथैव ममार तस्य हाप्प्यन्न्यन्न्मन्न्यमानाः परिमोषिणोऽस्त्थीन्न्युपजह्रुस्तस्मान्नोपवादी स्यादुत ह्येवंविप्परो भवति ॥ ११ ॥

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥



[ पशुबन्धप्रशंसा ]

पशुबन्धेन*यजते । पशवो वै पशुबन्धः स यत्पशुबन्धेन यजते पशुमानसानीति तेन गृहेषु † यजेत

( १ ) 'यदस्मिन्निदꣳ सर्व्वमद्ध्याध्नोंत्तेनाद्ध्यर्द्ध ऽइति' इति पाठः 'ग' 'ज' पुस्तकयोर्नास्ति ।

* पशुर्बध्यते यज्ञार्थं यस्मिन्कर्मणि स पशुबन्धाख्यो यागः ।
उद्भिदा यजेतेतिवद्यजिसमानाधिकृतत्वाद्यागनामधेयम् ॥

† का० श्रौ० सू० ६. १. ३. ।

गृहेषु पशून्बद्ध्ना ऽइति तेन सुयवसे A यजेत सुयवसे पशून्बद्ध्ना इति जीर्य्यन्ति ह वै जुह्वतो यजमानस्याग्नयोऽग्नीञ्जीर्य्यतोऽनु यजमानो यजमानमनु गृहाश्च पशवश्च ॥ १ ॥ * स यत्पशुबन्धेन यजते। अग्नीनेवैतत्पुनर्णवान्कुरुतेऽग्नीनाम्पुनर्णवतामनु यजमानो यजमानमनु गृहाश्च पशवश्चायुष्य्यो ह वा ऽअस्यैष ऽआत्मनिष्क्रयणो भवति माᳬसीयन्ति B ह वै जुह्वतो यजमानस्याग्नयस्ते यजमानमेव ध्यायन्ति यजमानᳪ सङ्कल्पयन्ति पचन्ति वा ऽअन्न्येष्वग्निषु व्वृथा माᳪसमथैतेषान्नातोऽन्न्या माᳪसाशा विद्यते यस्यो चैते भवन्ति ॥ २ ॥ स यत्पशुबन्धेन यजते। आत्मानमेवैतन्निष्क्रीणीते व्वीरेण व्वीरं व्वीरो हि पशुर्व्वीरो यजमान ऽएतदु ह वै परममन्नाद्यं यन्माᳪसᳪ स परमस्यैवान्नाद्यस्यात्ता भवति तं व्वै सँव्वत्सरो नानीजानमतीयाद्दायुर्व्वै सँव्वत्सर आयुरेवैतदमृतमात्मन्धत्ते ॥ ३ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ पशुबन्धस्येष्टिविधत्वम्, सोमविधत्वञ्च ]

हविर्य्यज्ञविधो ह वा ऽअन्न्यः पशुबन्धः। सवविधोऽन्न्यः स हैष हविर्य्यज्ञविधो[1] यस्मिन्न्व्रतमुपनयति

( A ) शोभनानि यवसानि तृणानि यस्मिन्नृतौ स कालः सुयवसः।

* शतम् ५९००।

( B ) मांसीयन्ति = मांसं खादितुमिच्छन्ति।

( १ ) "व्रतोपायन-प्रणीताज्यभाग-भागावदान-पूर्णपात्र-विष्णुक्रमान् कुर्याद्धविर्यज्ञविधे" ( का० श्रौ० सू० ६. २. ४)

यस्मिन्नप्रः प्रणयति यस्मिन्न्पूर्णपात्रन्निनयति यस्मिन्न्विष्णुक्रमान्क्रमयत्यथ हैष सर्वविधो यस्मिन्नेतानि न क्रियन्ते ॥ १ ॥ तदाहुः । इष्टिः पशुबन्धा३ महायज्ञा३ ऽइति महायज्ञ ऽइति ह ब्रूयादिष्टिं वै तर्हि पशुबन्धमकर्ष्यैनमकृक्षथा ऽइत्येनम्ब्रूयात् ॥ २ ॥ तस्य प्रयाजा ऽएव प्रातःसवनम् । अनुयाजास्तृतीयसवनम्पुरोडाश ऽएव माध्यन्दिनः सवनम् ॥ ३ ॥ तद्धैके । वपायाᳬ हुतायान्दक्षिणा नयन्ति तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयाद्बर्हिर्द्धा त्वा ऽअयम्प्राणेभ्यो दक्षिणा ऽअनैषीन्न प्राणानदक्षदन्धो वा स्रामो वा बधिरो वा पक्षहतो वा भविष्यतीतीश्वरो ह तथैव स्यात् ॥ ४ ॥ इत्थमेव कुर्य्यात् । पुरोडाशेडायामेवोपहूतायान्दक्षिणा नयेदैन्द्रो वा ऽअयम्मध्यतः प्राण ऽइममेवैतदैन्द्रम्मध्यतः प्राणन्दक्षिणाभिर्दक्षयत्यैन्द्रं वै माध्यन्दिनः सवनम्माध्यन्दिने वै सवने दक्षिणा नीयन्ते तस्मात्पुरोडाशेडायामेवोपहूतायान्दक्षिणा नयेत् ॥ ५ ॥ तदाहुः । अद्ध्वर्य्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते क्वैनमदिदीक्ष ऽइत्यावभृथादनूहः हेयुरद्ध्वर्य्युश्च प्रतिप्रस्थाता च होता च मैत्रावरुणश्च ब्रह्मा चाग्नीध्रश्चैतैर्वा ऽएष षड्ढोता * तमनुद्रुत्य षड्ढोतारञ्जुहोत्येकामाहुतिङ्कृत्वा पञ्च वाज्या 'द्यौष्पृष्ठमन्तरिक्षमात्माङ्गैर्यज्ञम्पृथिवीᳬ शरीरैः । वाचस्पतेऽच्छिद्रया वाचा-

* षट् होतारो होमनिष्पादका यस्मिन् स षड्ढोता ।

( १ ) "षड्ढोतारं पञ्चगृहीतं मनसानुद्रुत्य जुहोत्येकामाहुतिं पञ्च वा" ( का० श्रौ० सू० ६. १. ३३ )

च्छिद्रया जुह्वा दिवि देवावृधꣳ होत्रामैरयत्स्वाहे॑ति सैव दीक्षा ॥ ६ ॥ तदाहुः । अद्धुर्ब्यो यदीक्षितस्य नानवभृथोऽवकल्पते क्वैनमवभृथमवनेष्ष्यसीति स यद्धृदयशूलेन चरन्ति स हैवैतस्यावभृथः ॥ ७ ॥ मधुको ह स्माह पैङ्ग्यः । विसोमेन वा ऽएके पशुबन्धेन यजन्ते ससोमेनैके दिवि वै सोम ऽआसीत्तङ्गायत्री वयो भूत्वाहरत्तस्य यत्पर्ण्णमच्छिद्यत तत्पर्ण्णस्य पर्ण्णत्वमिति न्वा ऽएतद्ब्राह्मणमुच्यते विसोमेन वा ऽएके पशुबन्धेन यजन्ते ससोमेनैके स हैष विसोमेन पशुबन्धेन यजते योऽन्न्यम्पालाशाद्यूपङ्कुरुतेऽथ हैष ससोमेन पशुबन्धेन यजते यः पालाशं ऽयूपङ्कुरुते तस्म्मात्पालाशमेव[1] यूपङ्कुर्वीत ॥ ८ ॥

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ बहुसारस्य यूपस्य पशुविरोधित्वम्, अल्पसारस्य पशुसमृद्धिकरत्वञ्च ]

स य ऽएष बहुसारः । स हापशव्व्यस्तस्म्मात्तादृशम्पशुकामो यूपन्न कुर्वीताथ य ऽएष फल्गुप्प्रासहः स ह पशव्व्यस्तस्म्मात्तादृशम्पशुकामो यूपङ्कुर्वीत ॥ १ ॥ अथ यस्यैतद्वक्क्रस्य सतः । शूल ऽइवाग्ग्रम्भवति स ह कपोती नाम स यो ह तादृशं ऽयूपङ्कुरुते पुरा ह्रायुषोऽमुँल्लोकमेति तस्म्मात्तादृशमायुष्क्कामो यूपन्न कुर्वीत ॥ २ ॥ अथ य ऽएष ऽआनतः । उपरिष्ष्टादुपनतो मद्ध्ये सोऽशनायै रूपꣳ स यो ह तादृशं ऽयूपङ्कुरुतेऽशनायुका हास्य भार्य्या

(१) का० श्रौ० सू० अ० ६ क० १ सू० ८ ।

ङ्करोति व्वपामवदधाति तदन्तरिक्षस्य रूपङ्करोति हिरण्य-शकलमवदधाति तदादित्यस्य रूपङ्करोत्यथ य्यदुपरिष्टा-दभिघारयति तद्दिवो रूपङ्करोति सा व्वा ऽएषा पञ्चावत्ता व्वपा भवति पाङ्क्तो यज्ञः[A] पाङ्क्तः पशुः[B] पञ्च ऽर्त्तवः सँव्व-त्सरस्य तस्मात्पञ्चावत्ता व्वपा भवति ॥ ४ ॥

सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥



[ अग्निहोत्रे मह इत्युपस्थानं कर्तव्यनिमित्तं विधातुमाख्यायिका ]

तद्यथा ह वै । इदꣳ रथचक्रं व्वा कौलालचक्रं व्वा प्प्रतिष्ठितङ्क्रन्देदेवꣳ हैवेमे लोका ऽअद्ध्रुवा ऽअप्प्रति-ष्ठिता ऽआसुः ॥ १ ॥ स ह प्प्रजापतिरीक्षाञ्चक्रे । कथ-न्न्विमे लोका द्ध्रुवाः प्प्रतिष्ठिताः स्युरिति स ऽएभि-श्चैव पर्व्वतैर्न्नदीभिश्चेमामदृꣳहद्वयोभिश्च मरीचि-भिश्चान्तरिक्षञ्जीमूतैश्च नक्षत्रैश्च दिवम् ॥ २ ॥ स मह ऽइति व्व्याहरत् । पशवो वै महस्तस्माद्यस्यैते बहवो भवन्ति भूयिष्ठमस्य कुले महीयन्ते बहवो ह व्वा ऽअस्यैते भवन्ति भूयिष्ठꣳ हास्य कुले महीयन्ते तस्मा-द्यद्येनमायतनाद्बाधेरन्न्वा प्र वा यापयेयुरग्निहोत्रꣳ हुत्वा मह ऽइत्युपतिष्ठेत प्प्राति प्प्रजया पशुभिस्तिष्ठति नाय-तनाच्च्यवते ॥ ३ ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(A) धानाकरम्भादिपञ्चद्रव्यसाध्यत्वाद्यज्ञः पाङ्क्तः ।
(B) लोमत्वङ्मांसास्थिमज्जाख्यपञ्चधातुमयत्वात्पशुः पाङ्क्तः ।

[ आहितादिभेदेनाग्नेश्चातुर्विध्यम् ]

चत्त्वारो ह वा ऽअग्नयः । आहित ऽउद्धृतः प्प्रहृतो विहृतोऽयमेव लोक ऽआहितोऽन्तरिक्षलोक ऽउद्धृतो द्यौष्प्रहृतो दिशो विहृतोऽग्निरेवाहितो वायुरुद्धृत ऽआदित्यः प्प्रहृतश्चन्द्रमा विहृतो गार्हपत्त्य ऽएवाहित ऽआहवनीय ऽउद्धृतोऽथ यमेतमाहवनीयात्प्राञ्चम्प्रणयन्ति स प्प्रहृतोऽथ यमेतमुदञ्चम्पशुश्श्रपणायाहरन्ति यञ्चोपयड्भ्यः स विहृतस्तस्मात्प्रहार्य्येऽग्नौ पशुबन्धेन यजेत ॥ १ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ पशोः प्रजापतिः सूर्य इन्द्राग्नीति देवतात्रयप्रतिपादनम् ]

तदाहुः । किन्देवत्त्य ऽएष पशुः स्यादिति प्प्राजापत्त्यः स्यादित्त्याहुः प्प्रजापतिर्व्वा ऽएतमग्ग्रेऽभ्यपश्श्यत्तस्म्मात्प्राजापत्त्य ऽएवैष पशुः स्यादिति ॥ १ ॥ अथो ऽअप्प्याहुः । सौर्य्य ऽएवैष पशुः स्यादिति तस्म्मादेतस्म्मिन्नस्तमिते पशवो बद्ध्यन्ते बद्ध्नन्त्येकान्यथागोष्ठमेक ऽउपसमायन्ति तस्म्मात्सौर्य्य ऽएवैष पशुः स्यादिति ॥ २ ॥ अथो ऽअप्प्याहुः । ऐन्द्राग्न ऽएवैष पशुः स्यादित्त्येते वै देवते ऽअन्त्वन्न्ये देवा यद्यार्त्तो यजते पारयत ऽएव यदि महसा यजते पारयत ऽएव तस्म्मादैन्द्राग्न * ऽएवैष पशुः स्यादिति ॥ ३ ॥ प्राण ऽएव पशुबन्धः । तस्म्माद्यावज्जी-

* "ऐन्द्राग्नः सौर्यः प्राजापत्यो वा यमिच्छेत्" ( का० श्रौ० सू० ६. ३. २६ )

वति [illegible] पशूनामीष्टे बद्धा ह्यस्मिन्नेते भवन्ति ॥४॥ स ह प्रजापतिरग्निमुवाच । यजै त्वया त्वा लभा ऽइति नेति होवाच वायुम्ब्रूहीति स ह वायुमुवाच यजै त्वया त्वा लभा ऽइति नेति होवाच पुरुषम्ब्रूहीति स ह पुरुषमुवाच यजै त्वया त्वा लभा ऽइति नेति होवाच पशून्ब्रूहीति स ह पशूनुवाच यजै युष्माभिरा वो लभा ऽइति नेति होचुश्चन्द्रमसम्ब्रूहीति स ह चन्द्रमसमुवाच यजै त्वया त्वा लभा ऽइति नेति होवाचादित्यम्ब्रूहीति स हादित्यमुवाच यजै त्वया त्वा लभा ऽइति तथेति होवाच य ऽउ त ऽएते नाचीकमन्त किमु म ऽएतेषु स्यादिति यद्यत्कामयेथा ऽइति तथेति तमालभत सोऽस्यायम्पशुरालब्धः संज्ञप्तोऽश्वयत्तमेताभिराप्रीभिराप्रीणात्तद्यदेनमेताभिराप्रीभिराप्रीणात्तस्मादाप्रियो नाम तस्मादु पशुः संज्ञप्तम्ब्रूयाच्छेताम्मुहूर्त्तमिति स यावन्तमश्वमेधेनेष्ट्वा लोकञ्जयति तावन्तमेनेन[1] जयति ॥ ५ ॥ तम्प्राची दिक् । प्राणेत्यनुप्प्राणत्प्राणमेवास्मिँस्तदधात्तन्दक्षिणा दिग्व्यानेत्यनुप्प्राणद्व्यानमेवास्मिँस्तदधात्तम्प्रतीची दिगपानेत्यनुप्प्राणदपानमेवास्मिँस्तदधात्तमुदीची दिगुदानेत्यनुप्प्राणदुदानमेवास्मिँस्तदधात्तमूर्द्ध्वा दिक्समानेत्यनुप्प्राणत्समानमेवास्मिँस्तदधात्तस्मादु पुत्रञ्जातमकृत्तनाभिम्पञ्च ब्राह्मणान्ब्रूयादित्येनमनुप्प्राणितेति * यद्यु तान्न विन्देदपि

(१) 'ते' इति 'ग' 'ज' पुस्तकयोः ।

* पा० गृ० सू० १. १६. १० ।

स्वयमेवानुपरिक्क्रामममनुप्प्राणण्यात्स सर्व्वमायुरेत्या हैव जरायै जीवति ॥ ६ ॥ स प्प्राणमेवाग्नेरादत्त । तस्म्मादेष नानुपद्ध्मातो नानुपज्ज्वलितो ज्ज्वलत्याप्तो ह्यस्य प्प्राण ऽआ ह वै द्विषतो ब्भ्रातृव्व्यस्य प्प्राणन्दत्ते य ऽएवं व्वेद ॥ ७ ॥ रूपमेव व्वायोरादत्त । तस्म्मादेतस्य लेलयत ऽइवैवो-पश्शृण्ण्वन्ति न त्त्वेनम्पश्श्यन्त्याप्तछं ह्यस्य रूपमा ह वै द्विषतो ब्भ्रातृव्व्यस्य रूपन्दत्ते य ऽएवं व्वेद ॥ ८ ॥ चित्त-मेव पुरुषस्यादत्त । तस्म्मादाहुर्द्देवचित्तन्त्वावतु मा मनुष्ष्य-चित्तमित्त्याप्तछं ह्यस्य चित्तमा ह वै द्विषतोब्भ्रातृव्व्यस्य चित्तन्दत्ते य ऽएवं व्वेद ॥ ९ ॥ चक्षुरेव पशूनामादत्त । तस्म्मादेते चाकश्श्यमाना ऽइवैव न जानन्त्यथ यदैवो-पजिग्घ्रन्त्यथ जानन्त्याप्तछं ह्येषाञ्चक्षुरा ह वै द्विषतो ब्भ्रातृव्व्यस्य चक्षुर्द्दत्ते य ऽएवं व्वेद ॥ १० ॥ भामेव चन्द्रमस ऽआदत्त । तस्म्मादेतयोः सदृशयोः सतोर्न्नत-राश्चन्द्रमा भात्याप्ता ह्यस्य भा ऽआ ह वै द्विषतो ब्भ्रातृव्व्यस्य भान्दत्ते य ऽएवं व्वेद तद्यदादत्त तस्म्मा-दादित्यः ॥ ११ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ पशुप्रायश्चित्ततया स्पृत्याख्यहोमविधानम् ]

केशिगृहपतीनामु ह । सम्म्राड्दुघाछं शार्द्दूलो जघान स ह ससत्त्रिण आमन्त्र्याञ्चक्क्रे केह प्प्रायश्चित्तिरिति ते होचुर्न्नेह प्प्रायश्चित्तिरस्ति खण्डिक ऽएवौद्भारिरस्य

प्रायश्चित्तिं वेद स उ त एतादृक्कञ्चैव कामयते ऽतश्च पापीय ऽइति ॥ १ ॥ स होवाच । सङ्गृहीतरर्युङ्क्ष्वधि मे स्यन्त्स्यामि स यद्यह मे वक्ष्यति समाप्स्यामि यद्यु मा मारयिष्यति यज्ञं विकृष्टमनु विकृक्ष्य ऽइति ॥ २ ॥ स ह युक्त्वा ययावाजगाम । तद्ध ह प्रतिख्यायोवाच यन्न्वेतान्न्येवाजिनानि मृगेषु भवन्त्यथैषाम्पृष्टीरपिशीर्य पचामहे कृष्णाजिनम्मे ग्रीवास्वाबद्धमित्येव मेदुमधृषोऽभ्यवस्यन्तूः मिति ॥ ३ ॥ नेति होवाच । सम्राड्दुघां* वै मे भगवः शार्दूलोऽवधीत्स यद्यह मे वक्ष्यसि समाप्स्यामि यद्यु मा मारयिष्यसि यज्ञं विकृष्टमनु विकृक्ष्य ऽइति ॥ ४ ॥ स होवाच । आमन्त्रणीयान्न्वामन्त्रया ऽइति तान्न्हामन्त्र्योवाच यद्यस्मै वक्ष्याम्म्यमुष्यैवेदम्प्रजा भविष्यति न मम लोकी त्वहम्भविष्यामि यद्यु वा ऽअस्मै न वक्ष्यामि ममैवेदम्प्रजा भविष्यति नामुष्य लोकी त्वसौ भविष्यतीति ते होचुर्म्मा भगवो वोचोऽयं वाव क्षत्रियस्य लोक ऽइति स होवाच वक्ष्याम्म्येवामूर्वै रात्रयो भूयस्य ऽइति ॥ ५ ॥ तस्म्मा ऽउ हैतदुवाच । स्पृतीर्हुत्वान्न्यामाजतेति ब्रूतात्सा ते सम्राड्दुघा स्यादिति चन्द्रात्ते मन स्पृणोमि स्वाहा सूर्य्यात्ते चक्षु स्पृणोमि स्वाहा वातात्ते प्राणान्त्स्पृणोमि स्वाहा दिग्भ्यस्ते श्रोत्रꣳ स्पृणोमि स्वाहाद्भ्यस्ते लोहितꣳ स्पृणोमि स्वाहा पृथिव्यै ते शरीरꣳ स्पृणोमि स्वाहेत्यथान्न्यामाजतेति

---

* प्रवर्ग्यदोहनार्थां गामित्यर्थः ।

ब्ब्रूतात्त्सा ते सम्म्राड्दुघा स्यादिति ततो हैव स ऽउत्त्स-
साद कैशिनीरेवेमा ऽअप्प्येतर्हि प्प्रजा जायन्ते ॥ ६ ॥

अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या॥१०२॥

इत्यष्टमोऽध्यायः ॥ ८ ॥

अष्टाध्यायीनामैकादशं काण्डं समाप्तम्* ॥ ११ ॥



* अस्मिन्काण्डे कण्डिकासंख्या ॥ ४३७ ॥

# अथ मध्यमनाम द्वादशं काण्डम्

[ अस्मिन्काण्डे प्रतिपाद्या विषयाः—दीक्षाक्रमः, सत्राणि, पृष्ठ्याऽभिप्लु-स्वरसाम—विषुवन्महाव्रतादिनिरूपणम्' गवामयनम्, अग्निहोत्र-प्रायश्चित्तम्, मृतकाग्निहोत्रम्, मृतस्यदाहः ]

## [ द्वादशाहे* दीक्षाक्रमः ]

॥ ॐ ॥ अयं वै यज्ञो योऽयम्पवते। तमेत ऽईप्सन्ति ये सँवत्सराय दीक्षन्ते तेषाङ्गृहपतिः प्प्रथमो दीक्षतेऽयं वै लोको गृहपतिरस्म्मिन्न्वै लोक ऽइदᳬ सर्व्वम्प्रतिष्ठितङ्गृहपता ऽउ वै ससत्रिणः प्प्रतिष्ठिताः प्प्रतिष्ठायामेवैतत्प्रतिष्ठाय दीक्षन्ते ॥ १ ॥ अथ ब्ब्रह्माणन्दीक्षयति। चन्द्रमा वै ब्ब्रह्मा सोमो वै चन्द्रमाः सौम्म्या ऽओषधय ऽओषधीस्तदनेन लोकेन सन्दधाति तस्म्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेतौषधीस्तदनेन लोकेन नानाकुर्य्यादुच्छोषुका ह स्युस्तस्म्मादेता-

---

* द्वादशाहो द्विविधः सत्रात्मकोऽहीनात्मकश्चेति। तयोर्लक्षणं यथा—'आसत उपयन्तीति सत्रलिङ्गं यजत इत्यहीनस्य' ( का० श्रौ० सू० १२. १. ५. ) इति। यस्य उत्पत्तिवाक्ये आस् धातुः, उपोपसृष्ट इण् धातुर्वा श्रूयते तत् सत्रम्। यथा—'द्वादशाहमृद्धिकामा उपेयुः' 'देवा ह वै सत्रमासत' इति। यजधातुघटितवाक्यविहितत्वमहीनत्वम्। यथा—'द्वादशाहेन प्रजाकामं याजयेत्' इति।

लक्षणान्तरञ्च—'उभयतोऽतिरात्रं सत्रमुपरिष्टादहीनस्य' ( का० सू० १२. १. ६ ) इति।

अत्र सत्रे अहीने वा योऽहःशब्दो रात्रिशब्दो वा श्रूयते स सर्वोऽप्यहोरात्रसमुदायवाचकः। तेन द्वादशरात्रो द्वादशाह इति समानार्थक एव।

( १ ) का० श्रौ० सू० १२. २. १५।

वन्तरेणान्न्यो न दीक्षेत ॥ २ ॥ अथोद्गातारन्दीक्षयति । पर्ज्जन्न्यो वा ऽउद्गाता पर्ज्जन्न्यादु वै व्वृष्टिर्ज्जायते व्वृष्टि-न्तदोषधिभिः सन्दधाति तस्म्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेत व्वृष्टिन्तदोषधि भिर्न्नानाकुर्र्यादवर्षुको ह स्यात्तस्म्मादेतावन्तरेणान्न्यो न दीक्षेत ॥ ३ ॥ अथ होतारन्दीक्षयति । अग्निर्वै होताधि-देवतं व्वागद्ध्यात्ममन्नं व्वृष्टिरग्निश्च तद्वाचश्चान्नेन सन्दधाति तस्म्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेताग्निश्च तद्वाचश्चान्नेन नानाकुर्र्यादशनायुका ह स्युस्तस्म्मादेतावन्तरेणान्न्यो न दीक्षेतैताँश्चतुरोऽद्ध्वर्र्यु-र्द्दीक्षयति ॥ ४ ॥ अथाद्ध्वर्र्युम्प्रतिप्प्रस्थाता दीक्षयति[2]। मनो वा ऽअद्ध्वर्र्युर्व्वाग्घोता मनश्च तद्वाचश्च सन्दधाति तस्म्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेत मनश्च तद्वाचश्च नानाकुर्र्यात्प्रमायुका ह स्युस्त-स्म्मादेतावन्तरेणान्न्यो न दीक्षेत ॥ ५ ॥ अथ ब्ब्रह्मणे ब्ब्राह्म-णाच्छंसिनन्दीक्षयति । तं हि सोऽन्न्वथोद्गात्रे प्प्रस्तोतार-न्दीक्षयति तं हि सोऽन्न्वथ होत्रे मैत्रावरुणन्दीक्षयति तं हि सोऽन्न्वेताँश्चतुरः प्प्रतिप्प्रस्थाता दीक्षयति ॥६॥ अथाद्ध्व-र्र्यवे प्प्रतिप्प्रस्थातारेन्नष्ट्वा[3] दीक्षयति । तं हि सोऽन्न्वेतेषां व्वै नवानाङ्क्लृप्तिमन्न्वितरे कल्प्पन्ते नव वै प्प्राणाः प्प्राणा-नेवैष्वेतद्दधाति तथा सर्व्वमायुर्र्यन्ति तथो ह न पुरायुषोऽ-

(१) 'ग' 'ज' पुस्तकयोः 'तदोषधिभ्यः' इति पाठ उपलभ्यते।

(२) का० श्रौ० सू० १२. २. १६। (३) का० श्रौ० सू० १२, २. १७।

स्म्माल्लोकात्प्रयन्ति ॥ ७ ॥ अथ ब्ब्रह्मणे पोतारन्दीक्षयति । तᳬ हि सोऽन्न्वथोद्गात्रे प्प्रतिहर्त्तारन्दीक्षयति तᳬ हि सोऽन्न्वथ होत्रेऽच्छावाकन्दीक्षयति तᳬ हि सोऽन्न्वेताँश्चतुरो नेष्टा दीक्षयति ॥ ८ ॥ अथाद्ध्वर्युर्य्येव नेष्टारमुन्नेता दीक्षयति । तᳬ हि सोऽन्न्वथ ब्ब्रह्मण ऽआग्नीध्रन्दीक्षयति तᳬ हि सोऽन्न्वथोद्गात्रे सुब्ब्रह्मण्यान्दीक्षयति तᳬ हि सोऽन्न्वथ होत्रे ग्ग्रावस्तुतन्दीक्षयति तᳬ हि सोऽन्न्वेताँश्चतुर ऽउन्नेता दीक्षयति ॥ ९ ॥ अथोन्नेतारम्[2] । स्नातको वा ब्ब्रह्मचारी वान्न्यो वा दीक्षितो दीक्षयति न पूतᳬ पावयेदिति ह्याहुᳬ सैषानुपूर्व्वदीक्षा स यत्र हैवं विद्वाᳩसो दीक्षन्ते दीक्षमाणा हैव ते यज्ञङ्कल्प्पयन्ति यज्ञस्य क्लृप्तिमनु सत्रिणां य्योगक्षेमᳬ कल्प्पते सत्रिणां य्योगक्षेमस्य क्लृप्तिमन्न्वपि तस्यार्द्धस्य योगक्षेमᳬ कल्प्पते यस्म्मिन्नर्द्धे यजन्ते ॥ १० ॥ तेषां व्वा ऽउन्नेतोत्तमो दीक्षते । प्प्रथमोऽवभृथादुदायतामुदैति प्प्राणो वा ऽउन्नेता प्प्राणमेवैष्ष्वेतदुभयतो दधाति तथा सर्व्वमायुर्य्यन्ति तथो ह न पुरायुषोऽस्म्माल्लोकात्प्रयन्ति सैषानुपूर्व्वदीक्षा स यत्र हैवं विद्वाᳩसो दीक्षेरँस्तदेव दीक्षेत ॥ ११ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(१) का० श्रौ० सू० १२. २. १८ । (२) का० श्रौ० सू० १२. २. १९ ।

[ द्वादशाहस्याहःक्लृप्तिः ]

श्रद्धाया वै देवाः । दीक्षान्निरमिमतादित्यै प्राय- णीयꣳ * सोमात्क्रयं विष्णोरातिथ्यमादित्यात्प्रवर्ग्यꣳ स्वधाया ऽउपसदोऽग्नीषोमाभ्यामुपवसथमस्माल्लोकात्प्रा- यणीयमतिरात्रम् ॥ १ ॥ सँवत्सराच्चतुर्विंꣳशमहः । ब्रह्म- णोऽभिप्लवङ्क्षत्रात्पृष्ठ्यमग्नेरभिजितमद्भ्यः स्वरसाम्न ऽआदित्याद्विषुवन्तमुक्ताः स्वरसामान † ऽइन्द्राद्विश्वजि- तमुक्तौ पृष्ठ्याभिप्लवौ ‡ मित्रावरुणाभ्याङ्गोऽआयुषी वि- श्वेभ्यो देवेभ्यो दशरात्रन्दिग्भ्यो दाशरात्रिकम्पृष्ठ्यꣳ षडहमेभ्यो लोकेभ्यश्छन्दोमान् ॥ २ ॥ सँवत्सराद्दशम- महः । प्रजापतेर्म्महाव्रतꣳ § स्वर्ग्गाल्लोकादुदयनीयमति- रात्रन्तदेतत्सँवत्सरस्य जन्म स यो हैवमेतत्सँवत्सरस्य जन्म वेद हास्माच्छ्रेयाञ्जायते सात्मा भवति सँवत्सरो भवति सँवत्सरो भूत्वा देवानप्येति ॥ ३ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ उक्ताहःक्लृप्त्यर्थवादः ]

यद्वै दीक्षन्ते । अग्नाविष्णू ऽएव देवते यजन्तेऽ- ग्नाविष्णू देवते भवन्त्यग्नाविष्णवोः सायुज्यꣳ सलोक-

---

* प्रकृष्टमयनमारम्भो यत्रेति व्युत्पत्या प्रायणीयशब्दो द्वादशाहस्य प्रथमदिनवाचकः ।

† "यज्ञा यज्ञा" ( ४. ८. १ ) इत्यस्यां योनावुत्पन्नानि चत्वारि स्वरसंज्ञकानि सामानि येषु ते स्वरसामानः । ‡ प्रथमोऽग्निष्टोमः, ततश्चत्वार उक्थ्याः, पुनः षष्ठोऽग्निष्टोमः, एवं विधस्याह्नां षट्कस्य अभिप्लव इति संज्ञा ( तै० सं० सा० ७. ४. ११. १७, ऐ० ब्रा० ४. ३१ ।

§ महाव्रतं यज्ञस्यान्तिममहः । महानवर्तिष्ट अनेन कर्मणा इति महाव्रतम् ( तै० ब्रा० सा० भा० १. २. ६ ) ।

ताञ्जयन्ति ॥ १ ॥ अथ यत्प्रायणीयेन यजन्ते । अदितिमेव देवतां यजन्तेऽदितिर्द्देवता भवन्त्यदितेः सायुज्यꣳ सलोकताञ्जयन्ति ॥ २ ॥ अथ यत्क्रयेण चरन्ति । सोममेव देवतां यजन्ते सोमो देवता भवन्ति सोमस्य सायुज्यꣳ सलोकताञ्जयन्ति ॥ ३ ॥ अथ यदातिथ्येन यजन्ते । विष्णुमेव देवतां यजन्ते विष्णुर्द्देवता भवन्ति विष्णोः सायुज्यꣳ सलोकताञ्जयन्ति ॥ ४ ॥ अथ यत्प्रवर्ग्येण यजन्ते । आदित्यमेव देवतां यजन्त ऽआदित्यो देवता भवन्त्यादित्यस्य सायुज्यꣳ सलोकताञ्जयन्ति ॥ ५ ॥ अथ यदुपसद ऽउपयन्ति । एता ऽएव देवता यजन्ते या ऽएता ऽउपसत्स्वेता देवता भवन्त्येतासान्देवतानाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ ६ ॥ अथ यदग्नीषोमीयेण पशुना यजन्ते । अग्नीषोमावेव देवते यजन्तेऽग्नीषोमौ देवते भवन्त्यग्नीषोमयोः सायुज्यꣳ सलोकताञ्जयन्ति ॥ ७ ॥ अथ यत्प्रायणीयमतिरात्रमुपयन्ति । अहोरात्रे ऽएव देवते यजन्तेऽहोरात्रे देवते भवन्त्यहोरात्रयोः सायुज्यꣳ सलोकताञ्जयन्ति ॥ ८ ॥ अथ यच्चतुर्विꣳशमहरुपयन्ति । सँवत्सरमेव देवतां यजन्ते सँवत्सरो देवता भवन्ति सँवत्सरस्य सायुज्यꣳ सलोकताञ्जयन्ति ॥ ९ ॥ अथ यदभिप्लवꣳ षडहमुपयन्ति । अर्द्धमासाँश्च मासाँश्च देवता यजन्तेऽर्द्धमासाश्च मासाश्च देवता भवन्त्यर्द्धमासानाञ्च मासानाञ्च सायुज्यꣳ सलोकताञ्जयन्ति ॥ १० ॥ अथ यत्पृष्ठ्यꣳ षडहमुपयन्ति ।

ऋतूनेव देवता यजन्त ऽऋतवो देवता भवन्त्यृतूनाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ ११ ॥ अथ यदभिजितमुपयन्ति । अग्निमेव देवताꣳ यजन्तेऽग्निर्देवता भवन्त्यग्नेः सायुज्यꣳ सलोकताञ्जयन्ति ॥ १२ ॥ अथ यत्स्वरसाम्न ऽउपयन्ति । अप ऽएव देवता यजन्त ऽआपो देवता भवन्त्यपाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ १३ ॥ अथ यद्विषुवन्तमुपयन्ति । आदित्यमेव देवताꣳ यजन्त ऽआदित्यो देवता भवन्त्यादित्यस्य सायुज्यꣳ सलोकताञ्जयन्त्युक्ताः स्वरसामानः ॥ १४ ॥ अथ यद्विश्वजितमुपयन्ति । इन्द्रमेव देवताꣳ यजन्त ऽइन्द्रो देवता भवन्तीन्द्रस्य सायुज्यꣳ सलोकताञ्जयन्त्युक्तौ पृष्ठ्याभिप्लवौ ॥ १५ ॥ अथ यद्गोऽआयुषी ऽउपयन्ति । मित्रावरुणावेव देवते यजन्ते मित्रावरुणौ देवते भवन्ति मित्रावरुणयोः सायुज्यꣳ सलोकताञ्जयन्ति ॥ १६ ॥ अथ यद्दशरात्रमुपयन्ति । विश्वानेव देवान्देवता * यजन्ते विश्वे देवा देवता भवन्ति विश्वेषान्देवानाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ १७ ॥ अथ यद्दाशरात्रिकम्पृष्ठ्यꣳ षडहमुपयन्ति । दिश ऽएव देवता यजन्ते दिशो देवता भवन्ति दिशाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ १८ ॥ अथ यच्छन्दोमानुपयन्ति । इमानेव लोकान्देवता यजन्त ऽइमे लोका देवता भवन्त्येषाँल्लोकानाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ १९ ॥ अथ यद्दशममहरुपयन्ति । सँवत्सरमेव देवताꣳ यजन्ते

* 'ग' 'ज' पुस्तकयोः 'देवतां' इति पाठ उपलभ्यते ।

सँवत्सरो देवता भवन्ति सँवत्सरस्य सायुज्यꣳ सलोकता-ञ्जयन्ति ॥ २० ॥ अथ यद्द्महाव्रतमुपयन्ति । प्प्रजापतिमेव देवताꣳ स्सृजन्ते प्प्रजापतिर्देवता भवन्ति प्प्रजापतेꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ २१ ॥ अथ यदुदयनीयमतिरा-त्रमुपयन्ति । सँवत्सरमेव तदाप्प्त्वा स्वर्ग्गे लोके प्प्रति-तिष्ठन्ति तान्न्यदि पृच्छेयुः कामद्य देवताꣳ स्सृजद्ध्वे का देवता स्स्थ कस्यान्देवतायां वसथेत्त्यत ऽएवैकतमाम्ब्रूयु-र्य्यस्यै तु नेदिष्ठꣳ स्युरेते ह वै सति सद ऽएते हि सतीषु देवतासु सीदन्तो यन्ति सत्रसदो हैवेतरे स यो हैवं विदुषान्दीक्षितानाम्पापकꣳ सत्रे कीर्त्तयेदेतां-भ्यस्त्वा देवताभ्य ऽआवृश्चाम ऽइत्त्येनम्ब्रूयुः स पापी-यान्न्भवति श्श्रेयाꣳस ऽआत्मना ॥ २२ ॥ स ऽएष सँव-त्सरस्त्रिमहाव्रतः । चतुर्विꣳशे महाव्रतं विषुवति महाव्रत-म्महाव्रत ऽएव महाव्रतन्तꣳ ह स्स्मैतम्पूर्व्व ऽउपयन्ति त्रिम-हाव्रतन्ते तेजस्विन ऽआसुः सत्त्यवादिनः सꣳशितव्रता ऽअथ य ऽउ हैनमप्प्येतर्हि तथोपेयुर्य्यथामपात्रमुदक ऽआसिक्ते विम्म्रियेदेवꣳ हैव ते विम्म्रियेयुरुपर्य्युपयन्ति तदेषाꣳ सत्त्येन श्श्रमेण तपसा श्श्रद्धया यज्ञेनाहुतिभि-रवरुद्धम्भवति ॥ २३ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



१ 'ग' 'ज' पुस्तकयोः 'ते' इति ।

[ द्वादशाहस्य संवत्सरात्मना स्तुतिः ]

पुरुषो वै सँव्वत्सरः । तस्य पादावेव प्प्रायणीयोऽतिरात्रः पादाब्भ्याᳬं हि प्प्रयन्ति तयोर्यच्छुक्क्लन्तदह्नो रूपं यत्कृष्णन्तद्रात्रेर्न्नखान्यथैवौषधिवनस्प्पतीनाᳯं रूपमूरू चतुर्विंᳬशमहरुरोऽभिप्प्लवः पृष्ठम्पृष्ठ्यः ॥ १ ॥ अयमेव दक्षिणो बाहुरभिजित् । इम ऽएव दक्षिणे त्त्रयः प्प्राणाः स्वरसामानो मूर्द्धा विषुवानिम ऽएवोत्तरे त्त्रयः प्प्राणाः स्वरसामानः ॥ २ ॥ अयमेवोत्तरो बाहुर्विश्श्वजित् । उक्तौ पृष्ठ्याभिप्प्लवौ यावेवाश्वौ प्प्राणौ ते गोऽआयुषी ऽअङ्गानि दशरात्रो मुखम्महाव्रतᳬ हस्तावेवोदयनीयोऽतिरात्रो हस्ताब्भ्याᳯं ह्युद्यन्ति तयोर्यच्छुक्क्लन्तदह्नो रूपं यत्कृष्णन्तद्रात्रेर्न्नखान्यथैव नक्षत्त्राणाᳬं रूपᳬ स ऽएष सँव्वत्सरोऽद्ध्यात्मम्प्रतिष्ठितः स यो हैवमेतᳬ सँव्वत्सरमद्ध्यात्मम्प्रतिष्ठितं व्वेद प्प्रतितिष्ठति प्प्रजया पशुभिरस्मिँल्लोकेऽमृतत्त्वेनामुष्मिन् ॥ ३ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



[ संवत्सरसत्रस्याहःक्लृप्तिर्ब्राह्मणद्वयेन ]

समुद्रं व्वा ऽएते प्प्रतरन्ति । ये सँव्वत्सराय दीक्षन्ते तस्य तीर्त्थमेव प्प्रायणीयोऽतिरात्रस्तीर्त्थेन हि प्प्रस्नान्ति तद्यत्प्रायणीयमतिरात्रमुपयन्ति यथा तीर्त्थेन समुद्रम्प्रस्नायुस्तादृक्तत् ॥ १ ॥ गाधमेव प्प्रतिष्ठा चतुर्विंᳬशमहः ।

यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नान्ति प्रस्नेयोऽभिप्लवः प्रस्नेयः पृष्ठ्यः ॥ २ ॥ गाधमेव प्रतिष्ठाभिजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्योत्क्रामन्त्यूरुदघ्न एव प्रथमः स्वरसामा जानुदघ्नो द्वितीयः कुल्फदघ्नस्तृतीयो द्वीपः प्रतिष्ठा विषुवान्कुल्फदघ्न एव प्रथमोऽर्वाक्सामा जानुदघ्नो द्वितीय ऊरुदघ्नस्तृतीयः ॥ ३ ॥ गाधमेव प्रतिष्ठा विश्वजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नान्ति प्रस्नेयः पृष्ठ्यः प्रस्नेयोऽभिप्लवः प्रस्नेये गोऽआयुषी प्रस्नेयो दशरात्रः ॥ ४ ॥ गाधमेव प्रतिष्ठामहाव्रतम् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्योत्स्नान्ति तीर्थमेवोदयनीयोऽतिरात्रस्तीर्थेन ह्युत्स्नान्ति तद्यदुदयनीयमतिरात्रमुपयन्ति यथा तीर्थेन समुद्रम्प्रस्नाय तीर्थेनोत्स्नायुस्तादृक्तत् ॥ ५ ॥

तदाहुः । कति सँवत्सरस्यातिरात्राः कत्यग्निष्टोमाः कत्युक्थ्याः कति षोडशिनः कति षडहा इति द्वावतिरात्रौ षट्शतमग्निष्टोमा द्वे चत्वारिंशे शते उक्थ्यानामिति नु य उक्थ्यान्त्स्वरसाम्न उपयन्ति ॥ ६ ॥ अथ येऽग्निष्टोमान् । द्वादशशतमग्निष्टोमा द्वे चतुस्त्रिंशे शते उक्थ्यानान्द्वादश षोडशिनः षष्टिः षडहा इति नु सँवत्सरस्याप्तिः ॥ ७ ॥ द्वादश वै मासाः सँवत्सरस्य । तेषामेतत्तेज इन्द्रियं यत्पृष्ठानि तद्यन्मासि मासि पृष्ठान्युपयन्ति मासश एव तत्सँवत्सरस्य तेज आप्नु-

वन्त्यथ कथन्त्रयोदशस्य मासस्य तेज ऽआप्नुवन्तीत्युपरिष्टाद्विषुवतो विश्वजितꣳ सर्वपृष्ठमग्निष्टोममुपयन्त्येवमु त्रयोदशस्य मासस्य तेज ऽआप्नुवन्ति ॥ ८ ॥ एतद्ध स्म वै तद्विद्वानाह । श्वेतकेतुरारुणेयꣳ सँवत्सराय न्वा ऽअहन्दीक्षिष्य ऽइति तꣳ ह पितोपेक्ष्योवाच वेत्थ न्वायुष्मन्त्सँवत्सरस्य गाधप्रतिष्ठा ऽइति वेदेति होवाचैतद्ध तद्विद्वानुवाच ॥ ९ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



तदाहुः । कस्मादुभयतोज्योतिषोऽभिप्लवा भवन्त्यन्यतोज्योतिः पृष्ठ्य ऽइतीमे वै लोका ऽअभिप्लवा ऽउभयतोज्योतिषो वा ऽइमे लोका ऽअग्निनेत ऽआदित्येनामुत ऽऋतवः पृष्ठ्योऽन्यतोज्ज्योतिषो वा ऽऋतव ऽएष ऽएषाञ्ज्योतिर्य ऽएष तपति ॥ १ ॥ देवचक्रे वा ऽएते पृष्ठ्यप्रतिष्ठिते । यजमानस्य पाप्मानन्तृꣳहती परिप्लवेते स यो हैवं विदुषान्दीक्षितानाम्पापकꣳ सत्रे कीर्त्तयत्येते हास्य देवचक्रे शिरश्छिन्तो दशरात्र ऽउद्धिः पृष्ठ्याभिप्लवौ चक्रे ॥ २ ॥ तदाहुः । यत्समे ऽएव चक्रे भवतोऽथैते विषमा स्तोमाः कथमस्यैते समा स्तोमा ऽउपेता भवन्तीति यदेव षडन्यान्यहानि षडन्यानि तेनेति ब्रूयात् ॥ ३ ॥ पृष्ठ्याभिप्लवौ तन्त्रे कुर्वीतेति ह स्माह पैङ्ग्यः । तयो स्तोत्राणि च शस्त्राणि च सञ्चारयेदिति स यत्सञ्चारयति तस्मादिमे प्राणा

नाना सन्त ऽएकोतयः समानमूतिमनुसञ्चरन्त्यथ यन्न सञ्चारयेत्प्रमायुको यजमानः स्यादेष ह वै प्रमायुको योऽन्धो वा बधिरो वा ॥ ४ ॥ नवाग्निष्टोमा मासि सम्पद्यन्ते । नव वै प्राणाः प्राणानेवैष्ष्वेतद्दधाति तथा सर्वमायुरुर्यन्ति तथो ह न पुरायुषोऽस्माल्लोकात्प्रयन्ति ॥५॥ एकविꣳशतिरुक्थ्याः । द्वादश वै मासाः सँवत्सरस्य पञ्चर्त्तवस्त्रयो लोकास्तद्विꣳशतिरेष ऽएवैकविꣳशो य ऽएष तपत्येतामभिसम्पदꣳ स ऽएतया सम्पदा मासि मासि स्वर्गँल्लोकꣳ रोहति मासशः स्वर्गँल्लोकꣳ समश्नुत ऽएकविꣳशञ्च स्तोमम्बृहतीञ्च च्छन्दः ॥ ६ ॥ चतुस्त्रिꣳ-शदग्निष्टोमा मासि सम्पद्यन्ते । त्रयस्त्रिꣳशद्वै देवाः प्रजापतिश्चतुस्त्रिꣳशः सर्वासान्देवतानामाप्त्या ऽएक ऽउक्थ्यः षोडशिमानन्नं वा ऽउक्थ्यो वीर्यꣳ षोडशी ॥ ७ ॥ एतेन वै देवाः । वीर्येणान्नेन सर्वान्कामानाप्नु-वन्त्सर्वान्कामानाश्नुवत तथो ऽएवैष ऽएतेन वीर्येणान्नेन सर्वान्कामानाप्नोति सर्वान्कामानश्नुते तस्मात्पृष्ठ्याभि-प्लवा ऽउपैवेयात्सँवत्सराय दीक्षित ऽएतस्मै कामाय ॥ ८ ॥ अथादित्याश्च ह वा ऽअङ्गिरसश्च । उभये प्राजापत्या ऽअस्पर्द्धन्त वयम्पूर्वे स्वर्गँल्लोकमेष्यामो वयम्पूर्व ऽइति ॥ ९ ॥ त ऽआदित्याः । चतुर्भि स्तोमैश्च-तुर्भिः पृष्ठैर्लघुभिः सामभिः स्वर्गँल्लोकमभ्यप्लवन्त यदभ्यप्लवन्त तस्मादभिप्लवाः ॥ १० ॥ अन्वञ्च ऽइवाङ्गिरसः । सर्वैः स्तोमैः सर्वैः पृष्ठैर्गुरुभिः सामभिः

स्वर्ग्गँल्लोकमस्पृशन्न्यदस्पृशँस्तस्म्मात्पृष्ठ्यः ॥ ११ ॥ अभिप्प्लवः षडहः । षड्ढ्यहानि भवन्त्यभिप्प्लवः पञ्चाहः पञ्च ह्यहानि भवन्ति षळ्वेव प्प्रथममहस्तदुत्तममभिप्प्लवश्चतुरहश्चत्त्वारो हि स्तोमा भवन्ति त्रिवृत्पञ्चदशः सप्तदश ऽएकविꣳश ऽइत्त्यभिप्प्लवस्त्र्यहस्त्र्यावृद्धि ज्योतिर्ग्गौरायुरभिप्प्लवो द्व्यहो द्वे ह्येव सामनी भवतो बृहद्रथन्तरे ऽएवाभिप्प्लव ऽएकाह ऽएकाहस्यो हि स्तोमैस्तायते चतुर्ण्णामुक्क्थ्यानान्द्वादश स्तोत्राणि द्वादश शस्त्राण्ण्यतियन्ति स सप्तमोऽग्निष्टोम ऽएवमु सप्ताग्निष्टोमाः सम्पद्यन्ते ॥ १२ ॥ प्रोतिर्ह कौशाम्बेयः । कौसुरुबिन्दिरुद्दालक ऽआरुणौ ब्रह्मचर्य्यमुवास तꣳ हाचार्य्यः पप्प्रच्छ कुमार कति ते पिता सँव्वत्सरस्याहान्न्यमन्न्यतेति ॥ १३ ॥* दशेति होवाच । दश वा ऽइति होवाच दशाक्षरा विराड्वैराजो यज्ञः ॥ १४ ॥ कति त्त्वेवेति । नवेति होवाच नव वा ऽइति होवाच नव वै प्प्राणाः प्प्राणैरु यज्ञस्तायते ॥ १५ ॥ कति त्त्वेवेति । अष्टेति होवाचाष्टौ वा ऽइति होवाचाष्टाक्षरा गायत्री गायत्रो यज्ञः ॥ १६ ॥ कति त्त्वेवेति । सप्तेति होवाच सप्त वा ऽइति होवाच सप्त च्छन्दाꣳसि चतुरुत्तराणि च्छन्दोभिरु यज्ञस्तायते ॥ १७ ॥ [ अर्धः प्रपाठकः ६६ ] कति त्त्वेवेति । षडिति होवाच षड्वा ऽइति होवाच षडृतवः सँव्वत्सरः सँव्वत्सरो यज्ञः समानमेतदहर्य्यत्प्रायणीयोदयनीयौ ॥ १८ ॥ कति त्त्वेवेति ।

* अत्र शतम ६००० ।

पञ्चेति होवाच पञ्च वा ऽइति होवाच पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः सँव्वत्सरस्य सँव्वत्सरो यज्ञः समानमेतदहर्र्यच्चतुर्व्विंशमहाव्रते ॥ १९ ॥ कति त्वेवेति । चत्वारीति होवाच चत्वारि वा ऽइति होवाच चतुष्पादाः पशवः पशवो यज्ञः समानमेतदहर्र्यत्पृष्ठ्याभिप्लवौ ॥ २० ॥ कति त्वेवेति । त्रीणीति होवाच त्रीणि वा ऽइति होवाच त्रीणि च्छन्दाᳪंसि त्रयो लोकास्त्रिसवनो यज्ञः समानमेतदहर्र्यदभिजिद्विश्वजितौ ॥ २१ ॥ कति त्वेवेति । द्वे ऽइति होवाच द्वे वा ऽइति होवाच द्विपाद्वै पुरुषः पुरुषो यज्ञः समानमेतदहर्र्यत्स्वरसामानः ॥ २२ ॥ कति त्वेवेति । एकमिति होवाचाहरेवेति तदेतदहरहरिति सर्व्वᳪ सँव्वत्सरᳪ सैषा सँव्वत्सरस्योपनिषत्स यो हैवमेताᳪ सँव्वत्सरस्योपनिषदं वेद हास्मात्छ्रेयाञ्जायते सात्मा भवति सँव्वत्सरो भवति सँव्वत्सरो भूत्वा देवानप्येति ॥ २३ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ दशरात्रनिरूपणम् ]

स वा ऽएष सँव्वत्सरो बृहतीमभिसम्पन्नः । द्वावाक्ष्यंतामह्नाᳪ षडहौ द्वौ पृष्ठ्याभिप्लवौ गोऽआयुषी दशरात्रस्तत्षट्त्रिᳪशत्षट्त्रिᳪशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गे लोकेऽयतन्त बृहत्या स्वर्गँल्लोकमाप्नुवँस्तथो ऽएवैष ऽएतद्बृहत्यैव स्वर्गे लोके यतते बृहत्या स्वर्गँल्लोकमाप्नोत्यथ यो बृहत्याङ्कामस्तमेवैतेनैवंविदवरुन्द्धे ॥ १ ॥

षष्ठे चतुर्विंशमहः । दशरात्रस्य वै तत्सप्तमं वा नवमं वाभिप्लवात्पृष्ठ्यो निर्मितः पृष्ठ्यादभिजिदभिजितः स्वरसामानः स्वरसामभ्यो विषुवान्विषुवतः स्वरसामानः स्वरसामभ्यो विश्वजिद्विश्वजितः पृष्ठ्यः पृष्ठ्यादभिप्लवोऽभिप्लवाद्गोऽआयुषी गोऽआयुर्भ्यान्दशरात्रः ॥२॥ अथैतदहराक्ष्यंत् । यन्महाव्रतम्पञ्चविंशो ह्येतस्य स्तोमो भवति नाक्षराच्छन्दो ऽध्येत्येकस्मान्न द्वाभ्यान्न स्तोत्रियया स्तोमः ॥ ३ ॥ अभिप्लवम्पूर्वम्पुरस्ताद्विषुवत ऽउपयन्ति । पृष्ठ्यमुत्तरम्पुत्रा वा ऽअभिप्लवः पिता पृष्ठ्यस्तस्मात्पूर्ववयसे पुत्राः पितरमुपजीवन्ति पृष्ठ्यमुपरिष्टाद्विषुवतः पूर्वमुपयन्त्यभिप्लवमुत्तरन्तस्मादुत्तरवयसे पुत्रान्पितोपजीवत्युप ह वा ऽएनम्पूर्ववयसे पुत्रा जीवन्त्युपोत्तरवयसे पुत्राञ्जीवति य ऽएवमेतद्वेद ॥ ४ ॥ तदाहुः । यच्चतुर्विंशमहरुपेत्य प्रेयात्कथमनागूर्त्ती भवतीति यद्देवादः प्रायणीयमतिरात्रमुपयन्ति तेनेति ब्रूयात् ॥ ५ ॥ तदाहुः । यद्द्वादश मासाः सँवत्सरस्याथैतदहरत्येति यद्वैषुवतमवरेषामेतांऽपरेषामित्यवरेषाञ्चैव परेषाञ्चेति ह ब्रूयादात्मा वै सँवत्सरस्य विषुवानङ्गानि मासा यत्र वा ऽआत्मा तदङ्गानि यत्रो ऽअङ्गानि तदात्मा न वा ऽआत्माङ्गान्यतिरिच्यते नात्मानमङ्गान्यतिरिच्यन्त ऽएवमु हैतदवरेषाञ्चैव परेषाञ्च भवति ॥ ६ ॥ अथ ह वा ऽएष महासुपर्णं ऽएव यत्सँवत्सरः । तस्य यान्पुरस्ताद्विषुवतः षण्मासानुपयन्ति सोऽन्यतरः पक्षोऽथ यान्षडु-

परिष्टात्सोऽन्यतर ऽआत्मा विषुवान्यत्र वा ऽआत्मा तत्पक्षौ यत्र वा पक्षौ तदात्मा न वा ऽआत्मा पक्षावतिरिच्यते नात्मानम्पक्षावतिरिच्येते ऽएवमु हैतदवरेषाञ्चैव परेषाञ्च भवति ॥ ७ ॥ तदाहुः । यत्पुरस्ताद्विषुवत ऽऊर्द्ध्वान्त्स्तोमान्षण्मासानुपयन्ति यदुपरिष्टादावृत्तान्कथमस्यैत ऽऊर्द्ध्वा स्तोमा ऽउपेता भवन्तीति यमेवामुमूर्द्ध्वस्तोमन्दशरात्रमुपयन्ति तेनेति ब्रूयाद्देवेभ्यो ह वै महाव्रतन्न तस्थे कथमूर्द्ध्वैं स्तोमैर्विषुवन्तमुपागातावृत्तैर्म्मामिति ॥ ८ ॥ ते ह देवा ऽऊचुः । उप तं यज्ञक्रतुञ्जानीत य ऽऊर्द्ध्वस्तोमो येनेदमाप्नवामेति त ऽएतमूर्द्ध्वस्तोमन्दशरात्रमपश्यन्त्सँवत्सरविधन्तस्य यः पृष्ठ्यः षडहऽऋतवः स ऽइमे लोकाश्छन्दोमाः सँवत्सरो दशममहस्तेनैनदाप्नुवँस्तदेभ्योऽतिष्ठत तिष्ठते ह वा ऽअस्मै महाव्रतं य ऽएवमेतद्वेद ॥ ९ ॥ अथ वा ऽअतोऽह्नामभ्यारोहः । प्रायणीयेनातिरात्रेणोदयनीयमतिरात्रमभ्यारोहन्ति चतुर्विंशेन महाव्रतमभिप्लवेन परमभिप्लवम्पृष्ठ्येन परम्पृष्ठ्यमभिजिता विश्वजितथं स्वरसामभिः परान्त्स्वरसाम्नोऽथैतदहरनभ्यारूढं यद्वैषुवतमभि ह वै श्रेयाथंसः रोहति नैनम्पापीयानभ्यारोहति य ऽएवमेतद्वेद ॥१०॥ अथ वा ऽअतोऽह्नान्निवाहः । प्रायणीयोऽतिरात्रश्चतुर्विंशायाह्ने निवहति चतुर्विंशमहरभिप्लवायाभिप्लवः पृष्ठ्याय पृष्ठ्योऽभिजितेऽभिजित्स्वरसामभ्यः स्वरसामानो विषुवते विषुवान्त्स्वरसामभ्यः स्वरसामानो विश्वजिते विश्वजित्पृष्ठ्याय

पृष्ठ्योऽभिप्प्लवायाभिप्प्लवो गोऽआयुभ्र्याङ्गोऽआयुषी दशरात्राय दशरात्रो महाव्रताय महाव्रतमुदयनीयायातिरात्रायोदयनीयोऽतिरात्रः स्वर्ग्गाय लोकाय प्प्रतिष्ठायाऽअन्नाद्याय ॥ ११ ॥ तानि वा ऽएतानि । यज्ञारण्ण्यानि यज्ञकृन्तत्राणि[1] तानि शतꣳ शतꣳ रथाह्न्न्यान्न्यन्तरेण तानि येऽविद्वाꣳसꣳस ऽउपयन्ति यथारण्ण्यान्न्याम्मुग्धाꣳश्चरतोऽशनाया वा पिपासा वा पाप्प्मानो रक्षाꣳसि सचेरन्नेवꣳ[2] हैवैनानशनाया वा पिपासा वा पाप्प्मानो रक्षाꣳसि सचन्तेऽथ ये विद्वाꣳसो यथा प्प्रवाहात्प्रवाहमभयादुभयमेवꣳ हैव ते देवतायै देवतामुपसंक्रमन्ति ते स्वस्ति स्वर्ग्गँल्लोकꣳ समश्नुवते ॥ १२ ॥ तदाहुः । कति सँवत्सरस्याहानि पराञ्चि कत्यर्वाञ्चीति स यानि सकृत्सकृदुपयन्ति तानि पराञ्च्यथ यानि पुनः पुनस्तान्न्यर्व्वाञ्च्यर्वाञ्चीति ह त्वेवैनान्युपासीत षडहयोर्ह्यावृत्तिमन्न्वावर्त्तन्ते[3] ॥ १३ ॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ संवत्सरस्याभिप्लवाद्यात्मना स्तुतिर्ब्राह्मणद्वयेन ]

पुरुषो वै सँवत्सरः । तस्य प्प्राण ऽएव प्प्रायणीयोऽतिरात्रः प्प्राणेन हि प्प्रयन्ति वागेवारम्भणीयमहर्वाचा

(१) 'ग' 'ज' पुस्तकयोः 'यज्ञकृन्तत्राणि' इत्यस्य स्थाने 'यज्ञक्षत्राणि' इति पाठ उपलभ्यते ।

(२) 'सचेरन्नेवꣳ हैवैनानशनाया वा पिपासा वा पाप्मानो रक्षाꣳसि' एतावान् पाठः 'ग' 'ज' पुस्तकयोर्नास्ति ।

(३) 'ग' 'ज' पुस्तकयोः 'न्वर्तते' इति पाठोः दृश्यते ।

ह्यारभन्ते यद्यदारभन्ते ॥ १ ॥ अयमेव दक्षिणो हस्तोऽ-
भिप्लवः षडहः । तस्येदमेव प्रथममहस्तस्येदमेव प्रातः-
सवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनङ्गायत्र्या
ऽआयतने तस्मादियमासाꣳ ह्रसिष्ठा ॥ २ ॥ इदमेव
द्वितीयमहः । तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ
सवनमिदन्तृतीयसवनन्त्रिष्टुभ ऽआयतने तस्मादियमस्यै
वर्षीयसी ॥३॥ इदमेव तृतीयमहः । तस्येदमेव प्रातःसव-
नमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनञ्जगत्या ऽआय-
तने तस्मादियमासां वर्षिष्ठा ॥ ४ ॥ इदमेव चतुर्थमहः ।
तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीय-
सवनं विराज ऽआयतनेऽन्नं वै विराट् तस्मादियमासाम-
न्नादितमा ॥ ५ ॥ इदमेव पञ्चममहः । तस्येदमेव प्रातः-
सवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनम्पङ्क्तेराय-
तने पृथुरिव वै पङ्क्तिस्तस्मादयमासाम्प्रथिष्ठः ॥ ६ ॥
इदमेव षष्ठमहः । तस्येदमेव प्रातःसवनमिदम्माध्य-
न्दिनꣳ सवनमिदन्तृतीयसवनमतिच्छन्दस ऽआयतने
तस्मादयमासां वर्षिष्ठो गायत्रमेतदहर्भवति तस्मादि-
दम्फलकꣳ ह्रसिष्ठꣳ स ऽइतोऽभिप्लवः षडहः स
ऽइतः स ऽइतः स ऽइत ऽआत्मा पृष्ठ्यः ॥ ७ ॥ एतद्ध
स्म वै तद्विद्वानाह पैङ्ग्यः । प्लवन्त ऽइव वा ऽअभि-
प्लवास्तिष्ठतीव पृष्ठ्य ऽइति प्लवत ऽइव ह्ययमङ्गैस्ति-
ष्ठतीवात्मनेति ॥ ८ ॥ शिर ऽएवास्य त्रिवृत् । तस्मा-
त्त्रिविधम्भवति त्वगस्थि मस्तिष्कः ॥ ९ ॥ ग्रीवाः

पञ्चदशꣳ । चतुर्दश वा ऽएतासाङ्करूकराणि वीर्य्यम्पञ्च-
दशन्तस्म्मादेताभिरण्वीभिꣳ सतीभिर्ग्गुरुम्भारꣳ हरति
तस्म्माद्ग्रीवाꣳ पञ्चदशꣳ ॥ १० ॥ उरꣳ सप्तदशꣳ । अष्टा-
वन्न्ये जत्रवोऽष्टावन्न्य ऽउरꣳ सप्तदशन्तस्म्मादुरꣳ सप्त-
दशꣳ ॥ ११ ॥ उदरमेकविꣳशꣳ । विꣳशतिर्व्वा ऽअन्तरुदरे
कुन्तापान्न्युदरमेकविꣳशन्तस्म्मादुदरमेकविꣳशꣳ ॥ १२ ॥
पार्श्वे त्रिणवꣳ । त्रयोदशान्न्याꣳ पर्शवस्त्रयोदशान्न्याꣳ
पार्श्वे त्रिणवे तस्म्मात्पार्श्वे त्रिणवꣳ ॥ १३ ॥ अनूकन्त्रय-
स्त्रिꣳशꣳ । द्वात्रिꣳशद्वा ऽएतस्य करूकराण्ण्यनूकन्त्रयस्त्रिꣳ-
शन्तस्म्मादनूकन्त्रयस्त्रिꣳशꣳ ॥ १४ ॥ अयमेव दक्षिणꣳ
कर्ण्णोऽभिजित् । यदिदमक्ष्णꣳ शुक्लꣳ स प्प्रथमꣳ
स्वरसामा यत्कृष्णꣳ स द्वितीयो यन्न्मण्डलꣳ स तृतीयो
नासिके विषुवान्न्यदिदमक्ष्णो मण्डलꣳ स प्प्रथमोऽर्व्वा-
क्कसामा यत्कृष्णꣳ स द्वितीयो यच्छुक्लꣳ स तृतीयꣳ
॥ १५ ॥ अयमेवोत्तरꣳ कर्ण्णो विश्वजित् । उक्तौ पृष्ठ्या-
भिप्प्लवौ यावर्व्वाञ्चौ प्प्राणौ ते गोऽआयुषी ऽअङ्गानि दश-
रात्रो मखम्महाव्व्रतमुदान ऽएवोदयनीयोऽतिरात्र ऽउदानेन
ह्युद्यन्ति स ऽएष सँव्वत्सरोऽध्यात्मम्प्रतिष्ठितꣳ स यो
हैवमेतꣳ सँव्वत्सरमध्यात्मम्प्रतिष्ठितं व्वेद प्प्रतितिष्ठति
प्प्रजया पशुभिरस्म्मिँल्लोकेऽमृतत्त्वेनामुष्म्मिन् ॥ १६ ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



यद्दालाके । इदन्त्रिवृदेति सर्वमन्न्योऽन्न्यमभिसम्पद्यमानम् ॥ कथꣳस्विद्यज्ञꣳ पुरुषꣳ प्प्रजापतिरन्न्योऽन्न्यन्ना तिरिच्च्यन्त ऽएते ॥ १ ॥ यदूर्द्ध्वा स्तोमा ऽअनुयन्ति । यज्ञमब्भ्यावर्त्तꣳ सामभिꣳ कल्प्पमानाꣳ ॥ कथꣳस्वित्ते पुरुषमाविशन्ति कथम्प्राणैꣳ सयुजो भवन्ति ॥ २ ॥ प्रायणीयोऽतिरात्रꣳ । चतुर्विꣳशमहश्चत्त्वारोऽभिप्प्लवाꣳ पृष्ठ्यऽइत्त्येते ॥ कथꣳस्वित्ते पुरुषमाविशन्ति कथम्प्राणैꣳ सयुजो भवन्ति ॥ ३ ॥ अभिजिता स्वरसामानꣳ । अभिक्लृप्ता ऽउभयतो व्विषुवन्तमुपयन्ति ॥ कथꣳस्वित्ते पुरुषमाविशन्ति कथम्प्राणैꣳ सयुजो भवन्ति ॥ ४ ॥ त्रिवृत्प्रायाꣳ । सप्तदशाभिक्लृप्प्तास्त्रयस्त्रिꣳशान्ताश्चतुरुत्तरेण ॥ कथꣳस्वित्ते पुरुषमाविशन्ति कथम्प्राणैꣳ सयुजो भवन्तीति ॥ ५ ॥ शिरस्त्रिवृत् । पञ्चदशोऽस्य ग्ग्रीवा ऽउर ऽआहुꣳ सप्तदशाभिक्क्लृप्तम् ॥ एकविꣳशमुदरङ्कल्प्पयन्ति पार्श्वे पर्शूस्त्रिणवेनाभिक्क्लृप्ते ॥ ६ ॥ अभिप्प्लवा ऽउभयतोऽस्य बाहू । पृष्ठम्पृष्ठ्य ऽइति धीरा व्वदन्ति ॥ अनूकमस्य चतुरुत्तरेण सँव्वत्सरे ब्ब्राह्मणाꣳ कल्प्पयन्ति ॥ ७ ॥ कर्ण्णावस्याभिजिद्विश्वजिच्च । अक्ष्याबाहुꣳ स्वरसामाभिक्लृप्ते ॥ नस्यम्प्राणं व्विषुवन्तमाहुर्ग्गोऽआयुषी प्प्राणावेतावपाञ्चौ ॥ ८ ॥ अङ्गान्न्यस्य दशरात्रमाहुꣳ । मुखम्महाव्रतꣳ सँव्वत्सरे ब्ब्राह्मणाꣳ कल्प्पयन्ति ॥ सर्वस्तोमꣳ सर्वसामानमेतꣳ सँव्वत्सरमद्ध्यात्ममप्रविष्टम् ॥ समन्धीर

ऽआत्मना कल्पयित्वा ब्रध्नस्यास्ते विष्टपेऽजातशोकः ॥ ९ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



पुरुषो वै सँवत्सरः । पुरुष ऽइत्येकः सँवत्सर ऽइत्येकमत्र तत्समन्द्वे वै सँवत्सरस्याहोरात्रे द्वाविमौ पुरुषे प्राणावत्र तत्समन्त्रय ऽऋतवः सँवत्सरस्य त्रय ऽइमे पुरुषे प्राणा ऽअत्र तत्समश्चतुरक्षरो वै सँवत्सरश्चतुरक्षरोऽयं यजमानोऽत्र तत्समम्पञ्चऽर्त्तवः सँवत्सरस्य पञ्चेमे पुरुषे प्राणा ऽअत्र तत्समः षडृतवः सँवत्सरस्य षडिमे पुरुषे प्राणा ऽअत्र तत्समः सप्तऽर्त्तवः सँवत्सरस्य सप्तेमे पुरुषे प्राणा ऽअत्र तत्समम् ॥ १ ॥ द्वादश वै मासाः सँवत्सरस्य । द्वादशेमे पुरुषे प्राणा ऽअत्र तत्समन्त्रयोदश वै मासाः सँवत्सरस्य त्रयोदशेमे पुरुषे प्राणा नाभिस्त्रयोदश्यत्र तत्समश्चतुर्विंशतिर्वै सँवत्सरस्यार्द्धमासाश्चतुर्विंशोऽयम्पुरुषो विंशत्यङ्गुलिश्चतुरङ्गोऽत्र तत्समः षड्विंशतिर्वै सँवत्सरस्यार्द्धमासाः षड्विंशोऽयम्पुरुषः प्रतिष्ठे षड्विंश्यावत्र तत्समम् ॥ २ ॥ त्रीणि च वै शतानि षष्टिश्च । सँवत्सरस्य रात्रयस्त्रीणि च शतानि षष्टिश्च पुरुषस्यास्थीन्यत्र तत्समन्त्रीणि च वै शतानि षष्टिश्च सँवत्सरस्याहानि त्रीणि च शतानि षष्टिश्च पुरुषस्य मज्जानोऽत्र तत्समम् ॥ ३ ॥ सप्त च

वै शतानि विᳫंशतिश्च । सँवत्सरस्याहोरात्राणि सप्त च शतानि विᳫंशतिश्च पुरुषस्यास्थीनि च मज्जानश्चात्र तत्समम् ॥ ४ ॥ दश च वै सहस्राण्यष्टौ च शतानि । सँवत्सरस्य मुहूर्त्ता यावन्तो मुहूर्त्तास्तावन्ति पञ्चदश कृत्वः क्षिप्राणि यावन्ति क्षिप्राणि तावन्ति पञ्चदश कृत्व ऽएतर्हीणि यावन्त्येतर्हीणि तावन्ति पञ्चदश कृत्व ऽइदानीनि यावन्तीदानीनि तावन्तः पञ्चदश कृत्वः प्राणा यावन्तः प्राणास्तावन्तोऽना यावन्तोऽनास्तावन्तो निमेषा यावन्तो निमेषास्तावन्तो लोमगर्त्ता यावन्तो लोमगर्त्तास्तावन्ति स्वेदायनानि यावन्ति स्वेदायनानि तावन्त ऽएते स्तोका वर्षन्ति ॥ ५ ॥ एतद्ध स्म वै तद्विद्वानाह वार्क्कलिः । सार्वभौमम्मेघं वर्षन्तं वेदाहमस्य वर्षस्य स्तोकानिति ॥ ६ ॥ तदेष श्लोकोऽभ्युक्तः । प्रमादन्यत्र परिवर्त्तमानस्तिष्ठन्नासीनो यदि वा स्वपन्नपि ॥ अहोरात्राभ्याम्पुरुषः समेन कति कृत्वः प्राणिति चाप चानितीति ॥ ७ ॥ तदेष श्लोकः प्रत्युक्तः । शतᳫं शतानि पुरुषः समेनाष्टौ शता यन्मितन्तद्वदन्ति ॥ अहोरात्राभ्याम्पुरुषः समेन तावत्कृत्वः प्राणिति चाप चानितीति ॥ ८ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ संवत्सरादि दीक्षापक्षः ]

देवा ह वै सहस्रसँवत्सराय दिदीक्षिरे । तेषाम्पञ्च शतानि सँवत्सराणाम्पर्य्युपेतान्यासुरथेदᳫं सर्व्वमेव शश्राम

ये स्तोमा यानि पृष्ठानि यानि च्छन्दाᳬसि ॥ १ ॥ ततो देवाः । एतद्यज्ञस्यायातयामापश्यँस्तेनायातयाम्ना या व्वेदे व्व्युष्टिरासीत्तां व्व्याश्नुवतायातयामा वा ऽअस्य व्वेदा ऽअयातयाम्न्या हास्य ऋग्या व्विद्ययार्त्विज्यङ्कृतम्भवति य ऽएवमेतद्वेद ॥ २ ॥ तदेतद्यज्ञस्यायातयाम । ओ श्राव-यास्तु श्रौषड्यज ये यजामहे व्वौषडिति तासां व्वा ऽएता-साम्पञ्चानां व्व्याहृतीनाᳬ सप्तदशाक्षराण्यो श्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं य्यजेति द्व्यक्षरं य्ये यजामह ऽइति पञ्चाक्षरम् ॥ ३ ॥ द्व्यक्षरो व्वषट्कारः । स ऽएष सप्तदशः प्प्रजापतिरधिदेवतञ्चाध्यात्मञ्च प्प्रति-ष्ठितः स यो हैवमेतᳬ सप्तदशम्प्रजापतिमधिदेवतञ्चा-ध्यात्मञ्च प्प्रतिष्ठितं व्वेद प्प्रतितिष्ठति प्प्रजया पशु-भिरस्मिँल्लोकेऽमृतत्वेनामुष्मिन् ॥ ४ ॥ ते ह देवा ऽऊचुः । उप तं य्यज्ञक्रतुञ्जानीत यः सहस्रसँव्वत्सरस्य प्प्रतिमा को हि तस्मै मनुष्यो यः सहस्रसँव्वत्सरेण समाप्नुयादिति ॥ ५ ॥ ते व्विश्वजितमेव सर्व्वपृष्ठम् । पृष्ठ्यस्य षडहस्याञ्जःसवमपश्यँस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳬसि ॥ ६ ॥ पृष्ठ्यमेव षडहम् । द्वादशाहस्याञ्जःसवमपश्यँस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳬसि ॥ ७ ॥ द्वाद-शाहमेव । सँव्वत्सरस्याञ्जःसवमपश्यँस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳬसि ॥ ८ ॥ सँव्वत्सरमेव । तापश्चितस्याञ्जःसवमपश्यँस्ते हि स्तोमा भवन्ति तानि

पृष्ठानि तानि च्छन्दाᳬंसि ॥ ९ ॥ तापश्चितमेव । सहस्रसँवत्सरस्याञ्जसवमपश्यँस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳬंसि ॥ १० ॥ स वै सँवत्सरन्दीक्षाभिरेति । सँवत्सरमुपसद्भिः सँवत्सरᳬ सुत्याभिः ॥ ११ ॥ स यत्सँवत्सरन्दीक्षाभिरेति । पूर्वार्द्धमेव तेन सहस्रसँवत्सरस्यावरुन्द्धेऽथ यत्सँवत्सरमुपसद्भिर्म्मद्ध्यमेव तेन सहस्रसँवत्सरस्यावरुन्द्धेऽथ यत्सँवत्सरᳬ सुत्याभिरुत्तमार्द्धमेव तेन सहस्रसँवत्सरस्यावरुन्द्धे ॥ १२ ॥ स वै द्वादश मासान्दीक्षाभिरेति । द्वादशोपसद्भिर्द्वादश सुत्याभिस्तत्षट्त्रिᳬशत्षट्त्रिᳬशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्ग्गे लोकेऽयतन्त बृहत्या स्वर्ग्गँल्लोकमाप्नुवँस्तथो ऽएवैष ऽएतद्बृहत्यैव स्वर्ग्गे लोके यतते बृहत्या स्वर्ग्गँल्लोकमाप्नोत्यथ यो बृहत्याङ्कामस्तमेवैतेनैवंविदवरुन्द्धे ॥ १३ ॥ तद्वा ऽएतत् । त्रयᳬ सह क्रियतेऽग्निरर्क्कर्यम्महदुक्थᳬ स यत्सँवत्सरन्दीक्षाभिरेति सँवत्सरमुपसद्भिस्तेनास्याग्न्यर्क्कावाप्तौ भवतोऽथ यत्सँवत्सरᳬ सुत्याभिरेति तेनो ऽएवास्य महदुक्थमाप्तम्भवति स वा ऽएष ऽएव सहस्रसँवत्सरस्य प्प्रतिमा यत्तापश्चित ऽएष प्प्रजानाम्प्रजात्यै यत्तापश्चितः ॥ १४ ॥

## तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या १३२ ॥



[ ज्योतिष्टोमे उद्गात्राद्यन्वारम्भः ]

पुरुषꣳ ह नारायणम्प्रजापतिरुवाच । यजस्व यजस्वेति स होवाच यजस्व यजस्वेति वाव त्वम्मामात्थ त्रिरयक्षि वसवः प्प्रातःसवनेनागू रुद्रा माद्ध्यन्दिनेन सवनेनादित्यास्तृतीयसवनेनाथ मम यज्ञवास्त्वेव यज्ञवास्तावेवाहमास ऽइति ॥ १ ॥ स होवाच । यजस्वैवाहं वै ते तद्वक्ष्यामि यथा त ऽउक्कथानि मणिरिव सूत्र ऽओतानि भविष्ष्यन्ति सूत्रमिव वा मणाविति ॥ २ ॥ तस्म्मा ऽउ हैतदुवाच । प्प्रातःसवने बहिष्प्पवमान ऽउद्गातारमन्वारभासै श्श्येनोऽसि गायत्रच्छन्दा ऽअनु त्वारभे स्वस्ति मा सम्पारयेति ॥ ३ ॥ अथ माद्ध्यन्दिने पवमाने । उद्गातारमन्न्वारभासै सुपर्ण्णोऽसि त्रिष्टुप्प्छन्दा ऽअनु त्वारभे स्वस्ति मा सम्पारयेति ॥ ४ ॥ अथ तृतीयसवन ऽआर्भवे पवमाने । उद्गातारमन्न्वारभासा ऽऋभुरसि जगच्छन्दा ऽअनु त्वारभे स्वस्ति मा सम्पारयेति ॥ ५ ॥ अथ सꣳस्थितेषु सꣳस्थितेषु सवनेषु जपेः । मयि भर्ग्गो मयि महो मयि यशो मयि सर्व्वमिति ॥ ६ ॥ अयं वै लोको भर्ग्गः । अन्तरिक्षलोको महो द्यौर्य्यशो येऽन्न्ये लोकास्तत्त्सर्व्वम् ॥७॥ अग्निर्वै भर्ग्गः । वायुर्म्महं ऽआदित्यो यशो येऽन्न्ये देवास्तत्त्सर्व्वम् ॥ ८ ॥ ऋग्ग्वेदो वै भर्ग्गः । यजुर्वेदो महः सामवेदो यशो येऽन्न्ये वेदास्तत्त्सर्व्वम् ॥ ९ ॥ वाग्वै भर्ग्गः । प्प्राणो महश्चक्षुर्य्यशो येऽन्न्ये प्प्राणास्तत्त्सर्व्वम् ॥ १० ॥ तद्विद्यात् । सर्व्वाँल्लोकानात्मन्नधिषि सर्व्वेषु

लोकेष्वात्मानमधाꣳ सर्व्वान्देवानात्मन्नधिषि सर्व्वेषु देवेष्वात्मानमधाꣳ सर्व्वान्वेदानात्मन्नधिषि सर्व्वेषु वेदेष्वात्मानमधाꣳ सर्व्वान्प्राणानात्मन्नधिषि सर्व्वेषु प्प्राणेष्वात्मानमधामित्यक्षिता वै लोका ऽअक्षिता देवा ऽअक्षिता वेदा ऽअक्षिताः प्प्राणा ऽअक्षितꣳ सर्व्वमक्षिताद्ध वा ऽअक्षितमुपसङ्क्रामत्यप पुनर्म्मृत्युञ्जयति सर्व्वमायुरेति य ऽएवमेतद्वेद ॥ ११ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ सोमादीनां नित्यत्वम् ]

सावित्रꣳ ह स्म्मैतम्पूर्व्वं पशुमालभन्ते । अथैतर्हि प्प्राजापत्यं ऽएषो ह्येव सविता स प्प्रजापतिरिति वदन्तस्तस्म्मात्सन्न्युप्प्याग्नीँस्तेन यजेरन्गृहपतेरेवाग्निषु यथेदन्नाघन्न्या पत्नीः संरुयाजयन्ति तस्यान्नोऽप्प्यसदिति ते ततो यदानिकामन्दीक्षन्ते ॥ १ ॥ तदु वा ऽआहुः । नानाधिष्ण्या ऽएव स्युर्य्यदि दीक्षितस्योपतपेत्पार्श्वतोऽग्निहोत्रञ्जुहुयात्स यद्यगदो भवति सꣳसृज्यैनम्पुनरुपह्वयन्ते यद्यु म्म्रियते स्वैरेव तमग्निभिर्द्दहन्त्यशवाग्निभिरितरे यजमाना ऽआसत ऽइति तदु हैवाहिताग्नेः कर्म्म समानधिष्ण्यास्त्वेव भवन्ति तस्य तदेव ब्राह्मणं यत्पुरश्चरणे ॥ २ ॥ तदाहुः । यत्संवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषामग्निहोत्रमनन्तरितम्भवतीति व्रतेनेति ब्रूयात् ॥ ३ ॥

तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषा-
म्पौर्णमासः हविरनन्तरितम्भवतीत्याज्येन च पुरोडाशेन
चेति ब्रूयात् ॥ ४ ॥ तदाहुः यत्सँवत्सराय सँवत्सरसदो
दीक्षन्ते कथमेषाम्पितृयज्ञोऽनन्तरितो भवतीत्यौपासनै-
रिति ब्रूयात् ॥५॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो
दीक्षन्ते कथमेषामामावास्यः हविरनन्तरितम्भवतीति
दध्ना च पुरोडाशेन चेति ब्रूयात् ॥ ६ ॥ तदाहुः ।
यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषामाग्रयणेष्टि-
रनन्तरिता भवतीति सौम्येन चरुणेति ब्रूयात् ॥ ७ ॥
तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषा-
ञ्चातुर्म्मास्यान्यनन्तरितानि भवन्तीति पयस्ययेति ब्रूयात्
॥ ८ ॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते
कथमेषाम्पशुबन्धोऽनन्तरितो भवतीति पशुना च पुरो-
डाशेन चेति ब्रूयात् ॥ ९ ॥ तदाहुः । यत्सँवत्सराय सँव-
त्सरसदो दीक्षन्ते कथमेषाꣳ सोमोऽनन्तरितो भवतीति
सवनैरिति ब्रूयात् ॥ १० ॥ ते वा ऽएवमेते यज्ञक्रतवः ।
सँवत्सरमपियन्ति स यो हैवमेतां स्यज्ञक्रतूनाꣳ सँवत्सरेऽ-
पीतिं वेदाप्यस्य स्वर्ग्गे लोके भवति ॥ ११ ॥ सँवत्सरस्य
समता वेदितव्या । एकम्पुरस्ताद्विषुवतोऽतिरात्रमुपयन्त्ये-
कमुपरिष्टात्त्रयः पञ्चाशतम्पुरस्ताद्विषुवतोऽग्निष्टोमानुप-
यन्ति त्रयः पञ्चाशतमुपरिष्टाद्विꣳशतिशतम्पुरस्ताद्विषुवत
ऽउक्क्थ्यान्यहान्युपयन्ति विꣳशतिशतमुपरिष्टादिति नु
य ऽउक्क्थ्यान्त्स्वरसाम्न ऽउपयन्ति ॥ १२ ॥ अथ

येऽग्निष्टोमान् । षट्पञ्चाशतम्पुरस्ताद्विषुवतोऽग्निष्टोमानुपयन्ति षट्पञ्चाशतमुपरिष्टात्सप्तदशꣳ शतम्पुरस्ताद्विषुवत ऽउक्थ्यान्न्यहान्न्युपयन्ति सप्तदशमुपरिष्टात्षट् पुरस्ताद्विषुवतः षोडशिन ऽउपयन्ति षडुपरिष्टात्त्रिꣳशतम्पुरस्ताद्विषुवतः षडहानुपयन्ति त्रिꣳशतमुपरिष्टादेषा हास्य समता समेन ह वा ऽअस्याꣳवृद्धेनान्न्यूनेनानतिरिक्तेनायनेनेतम्भवति य ऽएवमेतद्वेद ॥ १३ ॥

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ अग्निहोत्रप्रायश्चित्तं ब्राह्मणद्वयेन ]

दीर्घसत्त्रꣳ ह वा ऽएत ऽउपयन्ति । येऽग्निहोत्रञ्जुह्वत्येतद्वै जरामर्य्यꣳ सत्रं यदग्निहोत्रञ्जरया वा ह्येवास्म्मान्मुच्च्यन्ते मृत्युना वा ॥ १ ॥ तदाहुः । यदेतस्य दीर्घसत्त्रिणोऽग्निहोत्रञ्जुह्वतोऽन्तरेणाग्नी युक्तं वा वियायात्सं वा चरेयुः किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति कुर्वीत हैव निष्कृतिमपीष्ट्या यजेत तदु तन्नाद्रियेतेमान्वा ऽएष लोकाननुवितनुते योऽग्नी ऽआधत्ते ॥ २ ॥ तस्यायमेव लोको गार्हपत्यः । अन्तरिक्षलोकोऽन्न्वाहार्य्यपचनोऽसौ लोक ऽआहवनीयः कामन्न्वा ऽएषु लोकेषु वयाꣳसि युक्तञ्चायुक्तञ्च सञ्चरन्ति स यदि हास्याप्प्यन्तरेण ग्ग्रामोऽग्नीन्न्वियायान्नैव मे का चनार्त्तिरस्ति न रिष्टिरिति

हैव विद्यात् ॥ ३ ॥ त्रयो ह त्वाव पशवोऽमेध्याः । दुर्वराह ऽएडकः श्वा तेषां य्यद्यधिश्रितेऽग्निहोत्रेऽन्तरेण कश्चित् सञ्चरेत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति तद्धैके गार्हपत्याद्भस्म्मोपहृत्याहवनीयान्निवपन्तो यन्ती'दं विष्णुर्विचक्रम, ऽइत्येतयऽर्चा यज्ञो वै विष्णुस्तद्यज्ञेनैव यज्ञमनुसन्तन्मो भस्म्मनास्य पदमपिवपाम ऽइति वदन्तस्तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयादुासान्न्वा ऽअयं य्यजमानस्यावाप्प्सीत्क्षिप्प्रे परमासानावप्प्स्यते ज्येष्ठगृह्यह रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ ४ ॥ इत्थमेव कुर्य्यात् । उदस्थालीं वैवोदकमण्डलुं वादाय गार्हपत्यादुग्र ऽआहवनीयान्निनयन्नियादिदं विष्णुर्विचक्रम ऽइत्येतयैवऽर्चा यज्ञो वै विष्णुस्तद्यज्ञेनैव यज्ञमनुसन्तनोति यद्वै यज्ञस्य रिष्टं य्यदशान्तमापो वै तस्य सर्व्वस्य शान्तिरद्भिरेवैनत्तच्छान्त्या शमयत्येतदेव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याग्निहोत्रन्दोह्यमानꣳ स्कन्देत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति स्कन्नप्प्रायश्चित्तेनाभिमृश्याद्भिरुपनिनीय परिशिष्टेन जुहुयाद्यद्यु नीची स्थाली स्याद्यदि वा भिद्येत स्कन्नप्प्रायश्चितेनैवाभिमृश्याद्भिरुपनिनीय यदन्न्यद्विन्देत्तेन जुहुयात् ॥ ६ ॥* अथ यत्र स्कन्नꣳ स्यात् । तदभिमृशेदस्कन्नधित प्प्राजनीति यदा वै स्कन्दत्यथ धीयते यदा धीयतेऽथ प्प्रजायते योनिर्व्वा ऽइयꣳ रेतः पयस्तदस्यां य्योनौ रेतो दधात्यनुष्ठ्या ह्यस्य रेतः सिक्तम्प्रजायते

(१) शु० य० सं० ५. १५ । ऋ० सं० १. २. ७ । का० श्रौ० सू० २५. ४. १८ ।
* अत्र शतम् ६१०० ।

स ऽएवमेतद्वेदामुतो वै दिवो वर्षतीहौषधयो वनस्पतयः प्रजायन्ते पुरुषाद्रेत स्कन्दति पशुभ्यस्तत ऽइदꣳ सर्वं म्प्रजायते तद्विद्याद्भूयसी मे प्रजातिरभूद्बहुः प्रजया पशुभिर्भविष्यामि श्रेयान्भविष्यामीति ॥ ७ ॥ अथ यत्रावभिन्नꣳ स्यात् । तदुदस्थालीं वैवोदकमण्डलुं वा निनयेद्यद्वै यज्ञस्य रिष्टं यदशान्तमापो वै तस्य सर्वस्य शान्तिरद्भिरेवैनत्तच्छान्त्या शमयति भूर्भुवः स्वरित्येताभि-र्व्याहृतिभिरेता वै व्याहृतयः सर्वप्रायश्चित्तीस्तदनेन सर्वेण प्रायश्चित्तिङ्कुरुते तानि कपालानि सञ्चित्य यत्र भस्मोद्धृतꣳ स्यात्तन्निवपेदेतदेव तत्र कर्म्म ॥ ८ ॥ तदाहुः । यस्याग्निहोत्री दोह्यमानोपविशेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति ताꣳ हैके यजुषोत्थापयन्त्युदस्थौ-द्व्यदितिरितीयं वा ऽअदितिरिमामेवास्मा ऽएतदुत्थाप-याम ऽइति वदन्त ऽआयुर्यज्ञपतावधादित्यायुरेवास्मिꣳस्त-द्दध्म ऽइति वदन्त ऽइन्द्राय कृण्वती भागमितीन्द्रियमे-वास्मिꣳस्तद्दध्म ऽइति वदन्तो मित्राय वरुणाय चेति प्राणोदानौ वै मित्रावरुणौ प्राणोदानावेवास्मिꣳस्तद्दध्म ऽइति वदन्तस्तान्तस्यामाहुत्याम्ब्राह्मणाय दद्याद्यमनभ्याग-मिष्यन्मन्येतार्त्तिं वा ऽएषा पाप्मानं यजमानस्य प्रतिदृश्योपाविक्षदार्त्तिमेवास्मिꣳस्तत्पाप्मानम्प्रतिमुञ्चाम ऽइति वदन्तः ॥ ९ ॥ तदुहोवाच याज्ञवल्क्यः । अश्र-द्दधानेभ्यो हैभ्यो गौरपक्रामत्यार्त्यां वा ऽआहुतिं

(१) का० श्रौ० सू० २५. १. १३ ।

विद्ध्यन्तीत्थमेव कुर्य्याद्दण्डेनैवैनां विपिष्योत्थापयेदिति तद्यथैवादो धावयतोऽश्वो वाऽश्वतरो वा गदायेत बलीवर्दो वा युक्तस्तेन दण्डप्प्रजितेन तोत्त्रप्प्रजितेन यमद्ध्वानꣳ समीप्प्सति तꣳ समश्नुत ऽएवमेवैतया दण्डप्प्रजितया तोत्त्रप्प्रजितया यꣳ स्वर्ग्गँल्लोकꣳ समीप्प्सति तꣳ समश्नुते ॥ १० ॥ अथ होवाचारुणिः । द्यौर्व्वा ऽएतस्याग्निहोत्रस्याग्निहोत्र्ययमेव वत्सो योऽयम्पवत ऽइयमेवाग्निहोत्रस्थाली न वा ऽएवं विदुषोऽग्निहोत्री नश्यति क्क ह्यसौ नश्येन्नैवं विदुषोऽग्निहोत्रीवत्सो नश्यति क्क ह्येष नश्येन्नैवं विदुषोऽग्निहोत्रस्थाली भिद्यते क्क हीयम्भिद्येत श्रियो वै पर्ज्जन्यो वर्षति तद्दियाच्छ्रेमाणम्मे महिमानमधारयमाणोपाविक्षच्छ्रेयान्नभविष्यामीति तामात्मन्न्येव कुर्वीतात्मन्न्येव तच्छ्रियन्धत्त ऽइति ह स्माहारुणिरेतदेव तत्र कर्म्म ॥ ११ ॥ तदाहुः । यस्याग्निहोत्री दोह्यमाना वाश्येत किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति स्तम्बमाच्छिद्य ग्रासयेदेतदेव तत्र कर्म्म ॥ १२ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



तदाहुः । यस्याग्निहोत्री लोहितन्दुहीत किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति ऽव्वर्युत्क्रामतेत्युक्त्वा मेक्षणङ्ख्वान्वाहार्य्यपचनम्परिश्रयितवै ब्रूयात्तस्मिन्नेनच्छ्रपयि-

(१) का० श्रौ० सू० २५. १. १८ । (२) का० श्रौ० सू० २५. २. २ ।

त्वा तस्मिँस्तूष्णीञ्जुहुयादनिरुक्तो वै प्रजापतिः प्राजापत्यमग्निहोत्रꣳ सर्वं वा ऽअनिरुक्तन्तदनेन सर्व्वेण प्रायश्चित्तिङ्कुरुते तान्तस्यामाहुत्याम्ब्राह्मणाय दद्याद्यमन-भ्यागमिष्यन्मन्येतार्त्तिं वा ऽएषा पाप्मानं यजमानस्य प्रतिदृश्य दुहे या लोहितन्दुह ऽआर्त्तिमेवास्मिँस्तत्पा-प्मानम्प्रतिमुञ्चत्यथ यदन्यद्विन्देत्तेन जुहुयादनार्त्तेनैव तदार्त्तं यज्ञस्य निष्करोत्येतदेव तत्र कर्म्म ॥ १ ॥ तदाहुः । यस्याग्निहोत्रन्दोह्यमानममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्धैके होतव्यम्मन्यन्ते प्रयतमेतन्नै-तस्याहोमोऽवकल्पते न वै देवाः कस्माच्चन बीभत्सन्ते बीभत्सन्ता३ऽइ तु देवा ऽइत्थमेव कुर्य्याद्गार्हपत्यादुष्ण-म्भस्म निरुह्य तस्मिमन्नेनदुष्णे भस्मँस्तूष्णीन्निनयेदद्भि-रुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेत-देव तत्र कर्म्म ॥ २ ॥ तदाहुः । यस्याग्निहोत्रन्दोहितम-मेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति य ऽएवै-तेऽङ्गारा निरूढा येष्वधिश्रयिष्यन्भवति तान्प्रत्युह्य तस्मिमन्नेनदुष्णे भस्मँस्तूष्णीन्निनयेदद्भिरुपनिनयत्य-द्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ३ ॥ तदाहुः । यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति य ऽएवैतेऽङ्गारा निरूढा येष्वधिश्रितम्भवति तेष्वेनत्तूष्णीञ्जुहुयात्तद्धुत-महुतं यदुहैनत्तेषु जुहोति तेन हुतं यद्वेनाँस्तेनैवानुगम-

(१) "०दनिरुक्तमनिरुक्तो" इति 'ग' 'ज' पुस्तकयोः ।

यस्याग्निहोत्रꣳ स्रुच्युन्नीतममेध्यमापद्येत किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति तद्धैके होतव्यम्मन्न्यन्ते प्प्रयतमेतन्नैतस्याहोमोऽवकल्प्पते न वै देवाः कस्स्माच्चन बीभत्त्सन्त ऽइति तद्धैक ऽउत्त्सिच्च्य च्छर्दयन्ति तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्ब्रूयात्परासिञ्चत न्न्वा ऽअयमग्निहोत्रं क्षिप्प्रेऽयं यजमानः परासेक्ष्यत ऽइतीश्वरो ह तथैव स्यादित्थमेव कुर्य्यादाहवनीये समिधमब्भ्याधायाहवनीयादुवोष्णम्भस्स्म निरुह्य तस्स्मिन्नेनदुष्णे भस्स्मँस्तूष्णीन्निनयेदद्भिरुपनिनयत्त्यद्भिरेनदाप्प्नोत्त्यथ यदन्न्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ९ ॥ तदाहुः । यस्याग्निहोत्रꣳ स्रुच्युन्नीतमुपरिष्टादववर्षेत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति तद्विद्यादुपरिष्टान्न्मा शुक्क्रमागन्नुप मान्देवाः प्प्राभूवञ्छ्रेयान्भविष्यामीति तेन कामञ्जुहुयादेतदेव तत्र कर्म्म ॥ १० ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ गार्हपत्याद्यनुगमने प्रायश्चित्तम् ]

तदाहुः । यत्पूर्वस्यामाहुत्याꣳ हुतायामथाग्निरनुगच्छेत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति यम्प्रातिवेशः शकलं विन्देत्तमब्भ्यस्याभिजुहुयाद्दारौ दारावग्निरिति वदन्दारौ दारौ ह्येवाग्निरथो यद्यु ऽअस्य हृदयं ब्ब्येव लिखेद्धिरण्ण्यमभिजुहुयादग्नेर्वा ऽएतद्रेतो यद्धिरण्ण्यं स ऽउ वै पुत्रः स पिता यः पिता स पुत्रस्तस्स्माद्धिरण्ण्यमभिजुहुयादेतदेव तत्र कर्म्म ॥ १ ॥ तदाहुः । यस्याहवनीय ऽउद्धृतः

पुराग्निहोत्रादनुगच्छेत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति गार्हपत्यादेवैनम्प्राञ्चमुद्धृत्योपसमाधायाग्निहोत्रञ्जुहुयात्स यद्यपि शतमेव कृत्वः पुनः पुनरुद्धृतोऽनुगच्छेद्गार्हपत्यादेवैनम्प्राञ्चमुद्धृत्योपसमाधायाग्निहोत्रञ्जुहुयादेतदेव तत्र कर्म्म ॥२॥ [अर्धः प्रपाठकः ४८] तदाहुः । यस्य गार्हपत्योऽनुगच्छेत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति तद्ध हैक ऽउल्मुकादेव निर्म्मन्थन्ति यतो वै पुरुषस्यान्ततो नश्यति ततो वै स तस्य प्प्रायश्चित्तिमिच्छत ऽइति वदन्तस्तदु तथा न कुर्य्यादुल्मुकः ह वै वादाय चरेयुरुल्मुकस्य वावब्रश्चमित्थमेव कुर्य्यादुल्मुकादङ्गारमादाय तमरण्योरभिविमत्थनीयादुप ह तङ्काममाप्नोति य ऽउल्मुकमत्थ्य ऽउपो तं ह्योऽरण्योरेतदेव तत्र कर्म्म ॥ ३ ॥ तदाहुः । यस्याग्नावग्निमभ्युद्धरेयुः किन्तत्र कर्म्म का प्प्रायश्चित्तिरितीश्वरौ वा ऽएतौ सम्पद्याशान्तौ यजमानस्य प्प्रजाञ्च पशूँश्च निर्दहस्तदभिमन्त्रयेत 'समितं सङ्कल्पेथाथं सम्प्रियौ रोचिष्णू सुमनस्यमानौ ॥ इषमूर्ज्जमभि संवसानौ ॥ सं वाम्मनाथंसि सं व्रता समु चित्तान्न्याकरम् ॥ अग्ने पुरीष्याधिपा भव त्वन्न ऽइषमूर्ज्जं यजमानाय धेही'ति शान्तिमेवाभ्यामेतद्वदति यजमानस्य प्प्रजायै पशूनामहिंसायै ॥ ४ ॥ यद्यु ऽअस्य हृदयं व्येव लिखेत् । अग्नयेऽग्निमतेऽष्टाकपालम्पुरोडाशन्निर्वपेत्तस्यावृत्सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संयाज्ये ऽअथैते याज्यानुवाक्ये

(१) शु० य० सं० ( अ० १२ क० ५७–५८ )।

ऽ'अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ॥ हव्यवाड्जुह्वास्य' ऽइत्यथ याज्या 'त्वं ह्यग्ने ऽअग्निना विप्रो विप्रेण सन्त्सता ॥ सखा सख्या समिध्यस' ऽइति शान्तिमेवाभ्यामेतद्दधाति यजमानस्य प्रजायै पशूनामहिंसाया ऽएतदेव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याहवनीयेऽननुगते गार्हपत्योऽनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्ध हैके तत ऽएव प्राञ्चमुद्धरन्ति प्राणा वा ऽअग्नयः प्राणानेवास्मा ऽएतदुद्धराम ऽइति वदन्तस्तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयात्प्राचो न्वा ऽअयं यजमानस्य प्राणान्प्रारौत्सीन्मरिष्यत्ययं यजमान ऽइतीश्वरो ह तथैव स्यात् ॥ ६ ॥ अथ हैके प्रत्यञ्चमाहरन्ति । प्राणोदानाविमाविति वदन्तस्तदु तथा न कुर्य्यात्स्वर्ग्यं वा ऽएतद्यदग्निहोत्रं यो हैनन्तत्र ब्रूयात्प्रति न्वा ऽअयं स्वर्गाल्लोकादवारुक्षन्नास्येदं स्वर्ग्यमिव भविष्यतीतीश्वरो ह तथैव स्यात् ॥ ७ ॥ अथ हैकेऽन्यङ्गार्हपत्यम्मन्थन्ति । तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयादग्नेर्न्वा ऽअयमधि द्विषन्तम्भ्रातृव्यमजीजनत क्षिप्रेऽस्य द्विषन्भ्रातृव्यो जनिष्यते प्रियतमः रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ ८ ॥ अथ हैकेऽनुगमय्यान्यम्मन्थन्ति । तस्याशान्नेयादपि यत्परिशिष्टमभूत्तदजीजसत नास्य दायादश्चन परिशेक्ष्यत ऽइतीश्वरो ह तथैव स्यात् ॥ ९ ॥ इत्थमेव कुर्य्यात् । अरण्योरग्नी समारोह्योदङ्ङुदवसाय निर्म्मथ्य जुहुयात्सेत्तथा ह न

(१) ऋ॰ सं॰ १. १. २२ । (२) ऋ॰ सं॰ ६. ३. ३१. ।

काञ्चन परिचक्षाङ्करोति नवावसान ऽउ ऽअस्याभितोरात्त्रꣳ हुतम्भवति * ॥ १० ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ अग्न्यन्तरसंसर्गादौ प्रायश्चित्तम् ]

अथ प्प्रातर्ब्भस्म्माद्युद्धृत्य । गोमयेनालिप्प्यारण्ण्योरेवाग्ग्नी समारोह्य प्प्रत्त्यवस्यति मथित्त्वा गार्हपत्त्यमुद्धृत्त्याहवनीयमाहृत्त्यान्न्वाहार्ययपचनमग्ग्नये पथिकृतेऽष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनुब्ब्रूयाद्वार्त्रघ्नावाज्यभागौ व्विराजौ संय्याज्ये ऽअथैते याज्यानुवाक्क्ये 'व्वेत्त्था हि व्वेधो ऽअद्ध्वनः पथश्श्च देवाञ्जसा ॥ अग्ग्ने यज्ञेषु सुक्रत'वित्त्यथ याज्या'देवानामपि पन्थामगन्म यच्छक्क्नवाम तदनुप्प्रवोढुम् ॥ अग्ग्निर्व्विद्वान्त्स यजात्सेदु होता सो ऽअद्ध्वरान्त्स ऽऋतून्कल्लपयाती'त्त्यग्ग्निर्व्वै पथिकृत्पथामपिनेता स ऽएवैनं य्यज्ञपथमपिनयत्त्येतदेव तत्र कर्म्म ॥ १ ॥ तदाहुः । यस्याग्ग्नयः सꣳसृज्येरन्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति स यदि परस्तादहन्नभीयात्तद्विद्यात्परस्तान्न्मा शुक्रमागन्नुप मान्देवाः प्प्राभूवञ्छ्रेयान्न्भविष्ष्यामीति यद्यु ऽअस्य हृदयं व्व्येव लिखेदग्ग्नये व्विविचयेऽष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनुब्ब्रूयाद्वार्त्रघ्नावाज्यभागौ व्विराजौ संय्याज्ये ऽअथैते

* का० श्रौ० सू० २५. ३. ४–६ ।
(१) ऋ० सं० ४. ५. २१ । (२) ऋ० सं० ७. ५. ३० ।

याज्यानुवाक्क्ये 'वि ते विष्ष्वग्ग्वातजूतासो ऽअग्ग्ने भामासः शुचे शुचयश्चरन्ति ॥ तुविम्म्रक्षासो दिव्व्या नवग्ग्वा वना वनन्ति धृषता रुजन्त' इत्यथ याज्या 'त्वामग्ग्ने मानुषीरीडते विशो होत्राविदं विविचिꣳ रत्नधातमम् ॥ गुहा सन्तꣳ सुभग विश्श्वदर्शतन्तुविष्ष्वणसꣳ सुयजङ्घृतश्श्रिय'मित्यथो ह यो द्विषतो भ्भ्रातृव्व्याद्व्याविवृत्सेत तत्काम ऽएतया यजेत वि हैवास्म्माद्वर्त्तत ऽएतदेव तत्र कर्म्म ॥ २ ॥ यद्वयमितो दुहन्नभीयात् । तद्विद्यादभि द्विषन्तम्भ्रातृव्व्यम्भविष्ष्यामि श्श्रेयान्न्भविष्ष्यामीति यद्यु ऽअस्य हृदयं व्व्येव लिखेद्- ग्ग्नये संवर्ग्गायाष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्प्तदश सामिधेनीरनुब्ब्रूयाद्वार्त्रघ्ग्नावाज्यभागौ विराजौ सँय्याज्ये ऽअथैते याज्ज्यानुवाक्क्ये 'परस्या ऽअधि संवतोऽ- वराँ२॥ऽअब्भ्यातर ॥ यत्राहमस्म्मि ताँ२॥ ऽअवे'त्यथ याज्ज्या 'मा नो ऽअस्म्मिन्न्महाधने परावर्ग्भारभृद्यथा ॥ सं वर्ग्गꣳ सꣳ रयिञ्जये'त्यथो ह यो द्विषतो भ्भ्रातृव्व्यात्सं- विवृक्षेत तत्काम ऽएतया यजेत सꣳ हैवास्म्माद्वृङ्क्त ऽएतदेव तत्र कर्म्म ॥ ३ ॥ तदाहुः । यस्य वैद्युतो दहेत्कि- न्तत्र कर्म्म का प्प्रायश्चित्तिरिति तद्विद्यादुपरिष्ष्टान्न्मा शुक्र- मागन्नुप मान्देवाः प्प्राभूवञ्छ्रेयान्न्भविष्ष्यामीति यद्यु ऽअस्य हृदयं व्व्येव लिखेदग्ग्नयेऽप्प्सुमतेऽष्टाकपाल- म्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्प्तदश सामिधेनीरनु-

(१) ऋ० सं० ४. ५. ८। (२) ऋ० सं० ३. ८. २६। (३) शु० य० सं० ११. ७१। (४) ऋ० सं० ६. ५. २६।

ब्ब्रूयाद्वार्त्रघ्नावाज्ज्यभागौ विराजौ सँय्याज्ज्ये ऽअथैते याज्ज्यानुवाक्क्ये 'ऽअप्प्स्वग्ग्ने सधिष्टव सौषधीरनुरुद्ध्यसे ॥ गर्ब्भे सञ्जायसे पुन'रित्यथ याज्ज्या 'गर्ब्भो ऽअस्योषधीनाङ्गर्ब्भो व्वनस्पतीनाम् । गर्ब्भो व्विश्वस्य भूतस्याग्ग्ने गर्ब्भो ऽअपामसी'ति शान्तिमेवाब्भ्यामेतद्दधाति यजमानस्य प्प्रजायै पशूनामहिꣳसाया ऽएतदेव तत्र कर्म्म ॥ ४ ॥ तदाहुः । यस्याग्नयोऽमेद्ध्यैरग्निभिः सꣳसृज्ज्येरन्त्किन्तत्र कर्म्म का प्प्रायश्चित्तिरित्यग्नये शुचयेऽष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनुब्ब्रूयाद्वार्त्रघ्नावाज्ज्यभागौ विराजौ सँय्याज्ज्ये ऽअथैते याज्ज्यानुवाक्क्ये 'ऽअग्निः शुचिव्रततमः शुचिर्व्विप्प्रः शुचिः कविः ॥ शुची रोचत ऽआहुत' इत्यथ याज्ज्यो'दग्ग्ने शुचयस्तव शुक्क्रा ब्भ्राजन्त ऽईरते ॥ तव ज्ज्योतीꣳष्यर्च्चय' ऽइति शान्तिमेवाब्भ्यामेतद्दधाति यजमानस्य प्प्रजायै पशूनामहिꣳसाया ऽएतदेव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याहवनीयमनुद्धृतमादित्योऽब्भ्यस्तमियात्किन्तत्र कर्म्म का प्प्रायश्चित्तिरित्येते वै रश्म्मयो व्विश्वे देवास्तेऽस्म्मादपप्प्रयन्ति तदस्म्मै व्व्यृद्ध्यते यस्म्माद्देवा ऽअपप्प्रयन्ति तामनु व्व्यृद्धिं यश्च्च व्वेद यश्च्च न ता ऽउभावाहतुरनुद्धृतमस्याब्भ्यस्तमगादिति तत्रेत्थङ्कुर्य्याद्धरितꣳ हिरण्यन्दर्ब्भे प्प्रबद्ध्य पश्च्चाद्धर्त्तवै ब्ब्रूयात्तदेतस्य रूपङ्क्रियते य ऽएष तपत्यहर्व्वा ऽएष तदहन्नो

(१) ऋ० सं० ६. ३. ३०। शु० य० सं० १२. ३६। (२) शु० य० सं० १२. ३७। (३) ऋ० सं० ६. ३. ४०। (४) ऋ० सं० ६. ३. ३९।

रूपङ्क्रियते पवित्रन्दर्भाः पवयत्त्येवैनन्तदुथेद्ध्ममादीप्प्य प्प्राञ्चꣳ हृत्त्वै ब्ब्रूयाद्ब्राह्मण ऽआर्षेय ऽउद्धरेद्ब्राह्मणो वा ऽआर्षेयः सर्व्वा देवताः सर्व्वाभिरेवैनन्तद्देवताभिः समर्द्धयति तमुपसमाधाय प्प्रातिपरेत्त्य गार्हपत्य ऽआज्यमधिश्श्रित्त्योद्वास्योत्पूयावेक्ष्य चतुर्ग्गृहीतमाज्यङ्गृहीत्त्वा समिधमुपसङ्गृह्य प्प्राङुदाद्रवत्त्यथाहवनीये समिधमब्भ्याधाय दक्षिणञ्जान्न्वाच्च्य जुहोति व्विश्श्वेब्भ्यो देवेब्भ्यः स्वाहेति स यथा ब्ब्राह्मणमावसथवासिनङ्क्रुद्धं य्यन्तमुक्षवेहुतोपमन्त्रयेतैवमेवैतद्विश्श्वान्देवानुपमन्त्रयते जानन्ति हैनमुप हैनमावर्त्तन्त ऽएतदेव तत्र कर्म्म ॥ ६ ॥ तदाहुः । यस्याहवनीयमनुद्धृतमादित्त्योऽब्भ्युदियात्किन्तत्र कर्म्म का प्प्रायश्चित्तिरित्त्येते वै रश्श्मयो व्विश्श्वे देवास्तेऽस्म्मादृषिवाꣳसोऽपप्प्रयन्ति तदस्म्मै व्व्यृद्ध्यते यस्म्माद्देवा ऽअपप्प्रयन्ति तामनु व्व्यृद्धिं य्यश्च्च वेद यश्च्च न ता ऽउभावाहतुरनुद्धृतमस्याब्भ्युदगादिति तत्रेत्थङ्कुर्य्याद्व्रजतः हिरण्यन्दर्भे प्प्रबद्ध्य पुरस्ताद्धर्त्त्वै ब्ब्रूयात्तच्चन्द्रमसो रूपङ्क्रियते रात्रिर्वै चन्द्रमास्तद्रात्रे रूपङ्क्रियते पवित्रन्दर्भाः पवयत्त्येवैनन्तदुथेद्ध्ममादीप्प्याञ्चꣳ हृत्त्वै ब्ब्रूयाद्ब्राह्मण ऽआर्षेय ऽउद्धरेद्ब्राह्मणो वा ऽआर्षेयः सर्व्वा देवताः सर्व्वाभिरेवैनन्तद्देवताभिः समर्द्धयति तमुपसमाधाय प्प्रातिपरेत्त्य गार्हपत्य ऽआज्यमधिश्श्रित्त्योद्वास्योत्पूयावेक्ष्य यथागृहीतमाज्यङ्गृहीत्त्वा समिधमुपसङ्गृह्य प्प्राङुदाद्रवत्त्यथाहवनीये समिधमब्भ्याधाय दक्षिणञ्जान्न्वाच्च्य जुहोति

विश्वेभ्यो देवेभ्यः स्वाहेति सोऽसावेव बन्धुर्न्न ह वै तत्र का चनार्त्तिर्न्न रिष्टिर्ब्भवति यत्रैषा प्रायश्चित्तिः क्रियत ऽएतदेव तत्र कर्म्म ॥ ७ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥



[ मृताग्निहोत्रनिरूपणम् ]

तदाहुः । यदेष दीर्घसत्र्यग्निहोत्रजुहृत्प्रवसन्म्म्रियेत जुहुयुरस्मा३ ऽइ ना३ ऽइति तद्धैके होतव्यम्मन्न्यन्त ऽआगन्तोरिति तदु तथा न कुर्य्यादुतस्थानो वा ऽएष तस्मै यदेनछ शवद्ब्राया ऽइव जुहुयुर्य्यज्ञाय वा ऽएष ऽआहुतिभ्यस्तस्थानः स हैनमम्मृष्यमाणस्तृप्प्रछ सचते ॥ १ ॥ अथ हैक ऽआहुः । एवमेवान्न्वाहिता ऽआहूयमानाः शयीरन्निति तदु तथा न कुर्य्यादुतस्थानो वा ऽएष तस्मै यदेनछ शवद्ब्राया ऽइवेन्धीरन्न्यज्ञाय वा ऽएष ऽआहुतिभ्यस्तस्थानः स हैनमम्मृष्यमाणस्तृप्प्रछ सचते ॥ २ ॥ अथ हैकेऽरण्योः । अग्नी समारोह्य निदधति तमाहृते निर्म्मन्थन्ति तदु तथा न कुर्य्यादुतस्थानो वा ऽएष तस्मै यदेनछ शवद्ब्राया ऽइव निर्म्मन्थेयुर्य्यज्ञाय वा ऽएष आहुतिभ्यस्तस्थानः स हैनमम्मृष्यमाणस्तृप्प्रछ सचते ॥ ३ ॥ इत्थमेव कुर्य्यात् । निवान्न्यवत्सामेष्टवै ब्रूयात्तस्यै पयसा जुहुयादार्त्तं वा

ऽएतत्पयो यन्निवान्न्यवत्सायाः * ऽआर्त्तमेतदग्निहोत्रं यथ-न्न्मृतस्य तदार्त्तेनैव तदार्त्तन्निष्कृत्य श्रेयान्न्भवति ॥ ४ ॥ तदप्प्युपमास्ति । यद्द्वौ रथौ मृदितौ समागच्छेतान्ताᳫँ स्यादेवान्न्यतरᳩ स्यदायेति ॥ ५ ॥ तस्य वा ऽएतस्या-ग्निहोत्रस्योपचारᳩ । प्राचीनावीती दोहयति यज्ञोपवीती वै देवेब्भ्यो दोहयत्त्यथैवम्पितॄणाम् ॥६॥ नाङ्गारेष्ष्वधिश्रयति । यद्धाङ्गारेष्ष्वधिश्रयेद्देवत्रा कुर्य्याद्गार्हपत्त्यादुष्णम्भस्म दक्षिणा निरुह्य तस्मिन्नेनदधिश्रयति पितृदेवत्त्यमेवैनत्तत्करोति ॥७॥ नावज्ज्योतयति नापᳩ प्प्रत्त्यानयति । यद्धावज्ज्योतये-द्यदपᳩ प्प्रत्त्यानयेद्देवत्रा कुर्य्यान्न त्रिᳩ प्प्रतिष्ठापद्ध हरति यत्त्रिᳩ प्प्रतिष्ठापद्ध हरेद्देवत्रा कुर्य्यात्सकृदेव निकर्षन्न्हरति पितृदेवत्त्यमेवैनत्तत्करोति ॥ ८ ॥ नोन्नेष्ष्यामीत्त्याह । न चतुरुन्नयति यद्धोन्नेष्ष्यामीति ब्ब्रूयाद्यच्चतुरुन्नयेद्देवत्रा कुर्य्या-त्सकृदेव तूष्ष्णीन्न्यक्क्पर्य्यस्यति पितृदेवत्त्यमेवैनत्तत्करोति ॥ ९ ॥ नोपरिष्टात्त्समिधमब्भ्यस्य हरति । यद्धोपरिष्टा-त्त्समिधमब्भ्यस्य हरेद्देवत्रा कुर्य्यादधस्तादुपास्य हरति पितृ-देवत्त्यमेवैनत्तत्करोति ॥ १० ॥ नोत्तरेण गार्हपत्त्यमेति । यद्धोत्तरेण गार्हपत्त्यमियाद्देवत्रा कुर्य्याद्दक्षिणेन गार्हपत्त्य-मेति पितृदेवत्त्यमेवैनत्तत्करोति ॥ ११ ॥ अथ यान्न्यमू-न्न्युदीचीनाग्ग्राणि तृणानि भवन्ति । दक्षिणाग्ग्राणि तानि करोति पितृदेवत्त्यमेवैनत्तत्करोत्त्यथाहवनीये समिधमब्भ्या-धाय सव्व्यञ्जान्न्वाच्य सकृदेव तूष्ष्णीन्न्यक्क्पर्य्यस्यति

* निवः पाता अन्यः परकीयवत्सो यस्याः । परकीयेण वत्सेन या मृतवत्सा गौर्दुह्यते सा निवान्यवत्सा । "अभिमृश्यार्धाः पिष्ट्वा निवान्यादुग्धे" ( का० श्रौ० सू० ५. ८. १८ ) ।

पितृदेवत्यमेवैनत्तत्करोति नोदिङ्गयति नोपस्पृष्टे न प्प्राश्नाति नोदुक्षति पितृदेवत्यमेवैनत्तत्करोति ॥ १२ ॥
तदाहुः । यदेष दीर्घसत्र्यग्निहोत्री जुह्वत्प्रवसन्म्म्रियेत कथमेनमग्निभिः कुर्युरिति तह हैके दग्ध्वाहरन्ति तमाहृतमग्निभिः सङ्क्षापयन्ति तदु तथा न कुर्याद्यथान्यस्यां य्योनौ रेतः सिक्तन्तदन्न्यस्याम्प्रजिजनयिषेत्तादृक्तदुस्त्थीन्येतान्याहृत्य कृष्णाजिने न्युप्य पुरुषविधिं विधायोर्णाभिः प्प्रच्छाद्याज्येनाभिघार्य तमग्निभिः समुपोषेत्तदेनं स्वाद्योनेः प्प्रजनयतीति ॥ १३ ॥ तह हैके ग्ग्रामाग्निना दहन्ति । तदु तथा न कुर्यादेष वै विश्वात्क्रव्याद्ग्निः स हैनमीश्वरः सपुत्रं सपशुं समन्तोः ॥ १४ ॥
अथ हैके प्प्रदव्येन दहन्ति । तदु तथा न कुर्यादेष वा ऽअशान्तोऽग्निः स हैनमीश्वरः सपुत्रं सपशुम्प्रदग्धोः ॥ १५ ॥ अथ हैक ऽउल्मुक्येन दहन्ति । तदु तथा न कुर्यादेष वै रुद्रियोऽग्निः स हैनमीश्वरः सपुत्रं सपशुमभिमन्तोः ॥ १६ ॥ अथ हैकेऽन्तरेणाग्नीश्चितिं चित्वा । तमग्निभिः समुपोषन्त्येतद्वै यजमानस्यायतनं यदन्तरेणाग्नीनिति तदु तथा न कुर्याद्यो हैनन्तत्र ब्रूयान्मध्ये न्वा ऽअयङ्गामस्याशासनमजीजनत क्षिप्प्रेऽस्याशासनञ्जनिष्यते प्प्रियतमं रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ १७ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ और्ध्वदेहिकनिरूपणम् ]

अथ ह स्माह नाको मौद्गल्ल्यः। मरिष्ष्यन्तं चेद्यजमानम्मन्न्येत यत्रैवास्स्मा ऽआशसनञ्जोषितथं स्यात्त-द्रण्ण्योरग्ग्नी समारोह्य निर्म्मथ्य जुहृवद्वसेत्स यदास्म्मा-ल्लोकाद्यजमानः प्प्रेयात् ॥ १ ॥ अथैनमन्तरेणाग्ग्नींश्चितिं ञ्चित्त्वा। तमग्ग्निभिः समुपोषेदिति तदु तथा न कुर्य्यादित-स्त्थानो वा ऽएष तस्म्मै यदेनः शवदह्याया ऽइव जुहुयु-र्य्यज्ञाय वा ऽएष ऽआहुतिभ्भ्यस्तस्थानः स हैनममृष्ष्य-माणस्तृप्प्रः सचते ॥ २ ॥ इत्त्थमेव कुर्य्यात्। तिस्र ऽएव स्त्थालीरेष्ट्वैं ब्ब्रूयात्तासु गोमयानि च शुम्बलानि चावधाय नाना त्रिष्ष्वग्ग्निषु प्प्रवृञ्ज्यात्ते ये ततः सन्तापा-दग्ग्नयो जायेरँस्तैरेनन्दहेयुस्तथाह तैरेव दग्ग्धो भवति नो प्प्रत्यक्षमिव ॥ ३ ॥ तस्म्मादुप्प्येतदृषिणाब्भ्यनूक्तम्। '[1]यो ऽअग्ग्निरग्ग्नेरध्ध्यजायत शोकात्पृथिव्व्या ऽउत वा दिवस्प्परि ॥ येन प्प्रजा विश्श्वकर्म्मा जजान तमग्ग्ने हेडः परि ते व्वृणक्त्विति यथऽर्क्कंथा ब्ब्राह्मणम् ॥ ४ ॥ अथैनं व्विपुरीषङ्कृत्त्वा। अस्याम्पुरीषम्प्रतिष्ठापयति पुरीषं व्वा ऽइयन्तत्पुरीष ऽएवैतत्पुरीषन्दधाति या ह वा ऽअस्यैषा व्वृकला सपुरीषा तस्यै ह व्विदग्ग्धायै स्तृगालः सम्भवति नेत्स्तृगालः सम्भवदिति तदु तथा न कुर्य्यात्क्षोधुका हास्य प्प्रजा भवति तमन्तरतः प्प्रक्षाल्ल्याज्ज्येनान्व्वनक्ति मेध्ध्य-मेवैनत्त्करोति ॥ ५ ॥ अथास्य सप्प्तसु प्प्राणायतनेषु *।

(१) शु० य० सं० अ० १३ क० ४५।

* का० श्रौ० सू० २५. ७. २०–३४।

सप्त हिरण्यशकलान्प्रत्यस्यति ज्योतिर्वा ऽअमृतꣳ हिरण्यञ्ज्योतिरेवास्मिँस्तदमृतन्दधाति ॥ ६ ॥ अथैन-मन्तरेणाग्नीऽइध्मचितिञ्चित्वा । कृष्णाजिनमुत्तरलोम प्राचीनग्रीवम्प्रस्तीर्य्य तस्मिन्नेनमुत्तानन्निपाद्य जुहूं घृतेन पूर्णान्दक्षिणे पाणावादधाति सव्य ऽउपभृतमुरसि ध्रुवाम्मुखेऽग्निहोत्रहवणीन्नासिकयोः स्रुवौ कर्णयोः प्राशित्रहरणे शीर्षꣳश्चमसम्प्रणीताप्रणयनम्पार्श्वयोः शूर्पे ऽउदरे पात्रीꣳ समवत्तधानीम्पृषदाज्यवतीꣳ शिश्नस्यान्ते शम्याम्माण्डयोरन्ते वृषारवावन्वगुलूखलञ्च मुसलञ्चान्तरेणोरू ऽअन्यानि यज्ञपात्राणि दक्षिणे पाणौ स्फ्यम् ॥ ७ ॥ स ऽएष यज्ञायुधी यजमानः । यथा बिभ्यदामोषमतीयादेवमेव योऽस्य स्वर्ग्गो लोको जितो भवति तमभ्यत्येति तमेते सन्ताप्या ऽअग्नयो यथा पुत्राः पितरम्प्रोषुषमागतꣳ शिवमुपस्पृशन्त्येवꣳ शिवꣳ हैवैनमुपस्पृशन्ति प्र हैवैनङ्कल्पयन्ति ॥ ८ ॥ तं यदि गार्हपत्यः पूर्वः प्राप्नुयात् । तद्विद्यात्प्रतिष्ठ ऽएनमग्निः पूर्वः प्रापत्प्रतिष्ठास्यति प्रत्येव तेऽस्मिँल्लोके स्थास्यन्ति येऽस्मात्प्रत्यञ्च ऽइति ॥ ९ ॥ अथ यद्याहवनीयः । तद्विद्यान्मुख्य ऽएनमग्निः पूर्वः प्रापन्मुखतो लोकानजैषीन्मुखमेव तेऽस्मिँल्लोके भविष्यन्ति येऽस्मात्प्रत्यञ्च ऽइति ॥ १० ॥ अथ यद्यन्वाहार्यपचनः । तद्विद्यादन्नादु ऽएनमग्निः पूर्वः प्रापदन्नमत्स्यत्यन्नमेव तेऽस्मिँल्लोकेऽत्स्यन्ति येऽस्मात्प्रत्यञ्च ऽइति ॥ ११ ॥ अथ यदि

सर्वं सकृत् । तद्विद्यात्कल्ल्याणँल्लोकमजैषीदित्येतान्न्यस्मिन्न्विज्ञानानि ॥ १२ ॥ तां व्वा ऽएताम् । यजमानास्माहुतिमन्ततो जुहोति स योऽस्य स्वर्ग्गो लोको जितो भवति तत ऽआहुतिमयोऽमृतः सम्भवति ॥ १३ ॥ अथ यान्न्यश्श्ममयानि च मृन्न्मयानि च भवन्ति । तानि ब्ब्राह्मणाय ‡ दद्याच्छवोद्वहमु ह तम्मन्न्यन्ते यस्तानि प्प्रतिगृह्णणात्यप ऽएवैनान्न्यब्भ्यवहरेयुरापो व्वा ऽअस्य सर्व्वस्य प्प्रतिष्ठा तदेनमप्प्स्वेव प्प्रतिष्ठापयति ॥ १४ ॥ अथैतामाहुतिञ्जुहोति * । पुत्त्रो वा ब्भ्राता वा यो वान्न्यो ब्ब्राह्मणः स्याद्'स्म्मात्त्वमधि जातोऽसि त्वदयञ्जायताम्पुनः ॥ असौ स्वर्ग्गाय लोकाय स्वाहे'त्यनपेक्षमेत्त्याप ऽउपस्पृशन्ति † ॥ १५ ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ ९५ ॥



‡ का० श्रौ० सू० २५. ७. ३६ ।

* का० श्रौ० सू० २५. ७. ४० ।

(१) शु० य० सं० ३३. २२ ।

† 'अनपेक्षमेत्योपस्पृशन्त्यपः' ( का० श्रौ० सू० २५. ७. ४१ )

[ ज्योतिष्टोमप्रायश्चित्तम् ]

सोमो वै राजा यज्ञः प्प्रजापतिः । तस्यैतास्तन्न्वो या ऽएता देवता या ऽएता ऽआहुतीर्ज्जुहोति ॥ १ ॥ स यद्य-ज्ञस्याच्छेंत् । यान्तत्प्रति देवताम्मन्न्येत तामनुसमीक्ष्य जुहु-याद्यदि दीक्षोपसत्स्वाहवनीये यदि प्प्रसुत ऽआग्नीध्रे वि वा ऽएतद्यज्ञस्य पर्व्व स्रंसते यद्दृध्वलति सा यैव तर्हि तत्र देवता भवति तयैवैतद्देवतया यज्ञम्भिषज्ज्यति तया देवतया यज्ञम्प्रति सन्दधाति ॥ २ ॥ स यद्येनम्मनसाभि-ध्यातः । यज्ञो नोपनमेत्परमेष्ठिने स्वाहेति जुहुयात्परमेष्ठी हि स तर्हि भवत्त्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥३॥ [* काण्डस्यार्धम् २३० ] अथ यद्येनं व्वाचाभिव्याहृतः । यज्ञो नोपनमेत्प्रजापतये स्वाहेति जुहुयात्प्रजापतिर्हि स तर्हि भव-त्त्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥४॥ अथ यस्य राजानमच्छेत्त्वा । नाहरन्त ऽएयुरन्धसे स्वाहेति जुहुयादन्धो हि स तर्हि भवत्त्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥ ५ ॥ अथ यदि सातः । किञ्चिदापद्येत सवित्रे स्वाहेति जुहुयात्सविता हि स तर्हि भवत्त्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥ ६ ॥ अथ यदि दीक्षासु । किञ्चिदापद्येत विश्श्वकर्म्मणे स्वाहेति जुहुयाद्विश्श्वकर्म्मा हि स तर्हि भवत्त्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥ ७ ॥ अथ यदि सोमक्क्रयण्ण्याम् । किञ्चिदापद्येत पूष्णणे स्वाहेति जुहुयात्पूषा हि स तर्हि भवत्त्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥ ८ ॥ अथ यदि क्क्रयायोपोत्त्थितः । किञ्चि-

* इयमर्धकाण्डसंख्याऽत्र काण्डे लिखिता । सापि 'क' पुस्तक एव ।

दापद्येतेन्द्राय च मरुद्भ्यश्च स्वाहेति जुहुयादिन्द्रश्च हि स तर्हि मरुतश्च भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥९॥ अथ यदि पणय्यमानः । किञ्चिदापद्येतासुराय स्वाहेति जुहुयादसुरो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १० ॥ अथ यदि क्रीतः । किञ्चिदापद्येत मित्राय स्वाहेति जुहुयान्मित्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ११ ॥ अथ यद्यूरावासन्नः । किञ्चिदापद्येत विष्णवे शिपिविष्टाय स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि शिपिविष्टो भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १२ ॥ अथ यदि पर्युह्यमाणः । किञ्चिदापद्येत विष्णवे नरन्धिषाय स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि नरन्धिषो भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १३ ॥ अथ यद्यागतः । किञ्चिदापद्येत सोमाय स्वाहेति जुहुयात्सोमो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १४ ॥ अथ यद्यासन्द्यामासन्नः । किञ्चिदापद्येत वरुणाय स्वाहेति जुहुयाद्वरुणो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १५ ॥ अथ यद्याग्नीध्रगतः । किञ्चिदापद्येताग्नये स्वाहेति जुहुयादग्निर्हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १६ ॥ अथ यदि हविर्धानगतः । किञ्चिदापद्येतेन्द्राय स्वाहेति जुहुयादिन्द्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १७ ॥ अथ यद्युपावह्रियमाणः किञ्चिदापद्येताथर्वणे

स्वाहेति जुहुयादथर्वा हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १८ ॥ अथ यद्यꣳशुषु न्न्युप्तः । किञ्चिदापद्येत विश्वेभ्यो देवेभ्यः स्वाहेति जुहुयाद्विश्वे हि स तर्हि देवा भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १९ ॥ अथ यद्याप्याय्यमानः । किञ्चिदापद्येत विष्णव ऽआप्प्रीतपाय स्वाहेति जुहुयाद्विष्णुर्हि स तर्ह्याप्प्रीतपा भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २० ॥ अथ यद्यभिषूयमाणः । किञ्चिदापद्येत यमाय स्वाहेति जुहुयाद्यमो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २१ ॥ अथ यदि सम्भ्रियमाणः । किञ्चिदापद्येत विष्णवे स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २२ ॥ अथ यदि पूयमानः । किञ्चिदापद्येत वायवे स्वाहेति जुहुयाद्वायुर्हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २३ ॥ अथ यदि पूतः । किञ्चिदापद्येत शुक्राय स्वाहेति जुहुयाच्छुक्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥२४॥ अथ यदि क्षीरश्रीः । किञ्चिदापद्येत शुक्राय स्वाहेति जुहुयाच्छुक्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २५ ॥ अथ यदि सक्तुश्रीः । किञ्चिदापद्येत मन्थिने स्वाहेति जुहुयान्मन्थी हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २६ ॥ अथ यदि चमसेषून्नीतः । किञ्चिदापद्येत विश्वेभ्यो देवेभ्यः स्वा-

हेति जुहुयाद्विश्वे हि स तर्हि देवा भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २७ ॥ अथ यदि होमायोद्यतः । किञ्चिदापद्येतासवे स्वाहेति जुहुयादसुर्हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २८ ॥ अथ यदि हूयमानः । किञ्चिदापद्येत रुद्राय स्वाहेति जुहुयाद्रुद्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २९ ॥ अथ यद्यभ्यावृत्तः । किञ्चिदापद्येत वाताय स्वाहेति जुहुयाद्वातो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥३०॥ अथ यदि प्रतिख्यातः । किञ्चिदापद्येत नृचक्षसे स्वाहेति जुहुयान्नृचक्षा हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ३१ ॥ अथ यदि भक्ष्यमाणः किञ्चिदापद्येत भक्षाय स्वाहेति जुहुयाद्भक्षो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ३२ ॥ अथ यदि नाराशꣳसेषु सन्नः । किञ्चिदापद्येत पितृभ्यो नाराशꣳसेभ्यः स्वाहेति जुहुयात्पितरो हि स तर्हि नाराशꣳसा भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ३३ ॥ अथ यद्यवभृथायोद्यतः । किञ्चिदापद्येत सिन्धवे स्वाहेति जुहुयात्सिन्धुर्हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ३४ ॥ अथ यद्यभ्यवह्रियमाणः । किञ्चिदापद्येत समुद्राय स्वाहेति जुहुयात्समुद्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ३५ ॥*

* शतम् ६२०० ।

अथ यदि प्रप्लुतः । किञ्चिदापद्येत सलिलाय स्वाहेति जुहुयात्सलिलो हि स तर्हि भवत्यप पाप्मानं हत उपैनं यज्ञो नमति ॥ ३६ ॥ ता वा एताः । चतुस्त्रिंशतमाज्याहुतीर्जुहोति त्रयस्त्रिंशद्वै देवाः प्रजापतिश्चतुस्त्रिंश एतदु सर्वैर्देवैर्यज्ञम्भिषज्यति सर्वैर्देवैर्यज्ञम्प्रति सन्दधाति ॥३७॥ ता ब्रह्मैव जुहुयात् । नाब्रह्मा ब्रह्मा वै यज्ञस्य दक्षिणत आस्ते ब्रह्मा यज्ञन्दक्षिणतो गोपायति यदि तु ब्रह्मा न विद्यादपि य एव कश्च विद्यात्स जुहुयाद्ब्रह्माणन्त्वामन्त्र्य ब्रह्मणातिसृष्टस्तासां वा एतासां व्याहृतीनाम्बन्धुता वसिष्ठो ह विराजं विदाञ्चकार ताᳬं हेन्द्रोऽभिदध्यौ ॥ ३८ ॥ स होवाच । ऋषे विराजं ह वै वेत्थ ताम्मे ब्रूहीति स होवाच किम्मम ततः स्यादिति सर्वस्य च ते यज्ञस्य प्रायश्चित्तिम्ब्रूयाᳬं रूपञ्च त्वा दर्शयेयेति स होवाच यन्नु मे सर्वस्य यज्ञस्य प्रायश्चित्तिम्ब्रूयाः किमु स स्याद्यन्त्वं रूपन्दर्शयेथा इति जीवस्वर्ग्ग एवास्माल्लोकात्प्रेयादिति ॥ ३९ ॥ ततो हैतामृषिरिन्द्राय विराजमुवाच । इयं वै विराडिति तस्माद्योऽस्यै भूयिष्ठँल्लभते स एव श्रेष्ठो भवति ॥ ४० ॥ अथ हैतामिन्द्र ऋषये । प्रायश्चित्तिमुवाचाग्निहोत्रादग्र आ महत उक्थात्ता ह स्मैताः पुरा व्याहृतीर्वसिष्ठा एव विदुस्तस्माद्ध स्म पुरा वासिष्ठ एव ब्रह्मा भवति यतस्त्वेना अप्प्येतर्हि य एव कश्चाधीते ततोऽप्प्येतर्हि य एव कश्च ब्रह्मा भवति स ह वै ब्रह्मा

भवितुमर्हति स वा ब्रह्मन्नित्यामन्त्रितः प्रतिशृणुयाद्य ऽएवमेता व्याहृतीर्वेद ॥ ४१ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

[ * सौत्रामणीहविः ]

विश्वरूपं वै त्वाष्ट्रमिन्द्रोऽहन् । तन्त्वष्टा हतपुत्रोऽभ्यचरत्सोऽभिचरणीयमपेन्द्रꣳ सोममाहरत्तस्येन्द्रो यज्ञवेशसङ्कृत्वा प्रासहा सोममपिबत्स विष्वङ् व्यार्च्छत्तस्येन्द्रियं वीर्यमङ्गादङ्गादस्रवत् ॥ १ ॥ तस्याक्षिभ्यामेव तेजोऽस्रवत् । सोऽजः पशुरभवद्धूम्रोऽथ यत्पक्ष्मभ्यस्ते गोधूमा यदुश्रुभ्यस्तत्कुवलम् ॥ २ ॥ नासिकाभ्यामेवास्य वीर्यमस्रवत् । सोऽविः पशुरभवन्मेषोऽथ यच्छ्लेष्मणस्ता ऽउपवाका यत्स्नीहा तद्बदरम् ॥ ३ ॥ मुखादेवास्य बलमस्रवत् । स गौः पशुरभवदृषभोऽथ ये फेनास्ते यवा यत्स्नेहस्तत्कर्कन्धु ॥ ४ ॥ श्रोत्रादेवास्य यशोऽस्रवत् । तदेकशफमभवदश्वोऽश्वतरो गर्दभः ॥ ५ ॥ स्तनाभ्यामेवास्य शुक्रमस्रवत् । तत्पयोऽभवत्पशूनाञ्ज्यो-

---

* सुष्ठु त्रायत इति सुत्रामा तस्येयं सौत्रामणी नाम पशुयागः । स च स्वतन्त्रोऽङ्गभूतश्चेति द्विविधः । चयनानन्तरं तदङ्गत्वेनानुष्ठीयमाना सौत्रामण्यङ्गभूता । स्वातन्त्र्येण विहिता च प्रधानभूता । सा नित्या काम्या नैमित्तिकी चेति त्रिविधा । तत्र फलमनुद्दिश्य विहिता नित्या हविर्यज्ञान्तर्गता । सैव च ऋद्धिफलोद्देशेन विधीयमाना काम्या । सोमवमनादिषु निमित्तेषूत्पन्नेषु तदनन्तरमनुष्ठेयतया विहिता नैमित्तिकी । स्वतन्त्रसौत्रामण्यां ब्राह्मणस्यैवाधिकारः । अङ्गभूतायां तु क्षत्रियवैश्यावप्यधिकारिणौ ।

रुरस ऽएवास्य हृदयात्त्विषिरस्रवत्स श्श्येनोऽपाष्ठिहाभव-
द्वयसाᳪं राजा ॥ ६ ॥ नाभ्या ऽएवास्य शूषोऽस्रवत् ।
तत्सीसमभवन्नायो न हिरण्यᳪं रेतस ऽएवास्य रूपमस्र-
वत्तत्सुवर्णᳪं हिरण्यमभवच्छिश्नादेवास्य रसोऽस्रवत्सा
परिस्रुदभवत्स्फिग्भ्यामेवास्य भामोऽस्रवत्सा सुरा-
भवदन्नस्य रसः ॥ ७ ॥ मूत्रादेवास्यौजोऽस्रवत् । स
वृकोऽभवदारण्यानाम्पशूनाᳪं जूतिरूवध्यादेवास्य मन्युर-
स्रवत्स व्याघ्रोऽभवदारण्यानाम्पशूनाᳪं राजा लोहिता-
देवास्य सहोऽस्रवत्स सिᳪंहोऽभवदारण्यानाम्पशूनामीशः
॥ ८ ॥ लोमभ्य ऽएवास्य चित्तमस्रवत् । ते श्यामाका
ऽअभवँस्त्वच ऽएवास्यापचितिरस्रवत्सोऽश्वत्थो वनस्पति-
रभवन्माᳪंसेभ्य ऽएवास्योर्गस्रवत्स ऽउदुम्बरोऽभवद-
स्थिभ्य ऽएवास्य स्वधास्रवत्स न्यग्रोधोऽभवन्मज्जभ्य
ऽएवास्य भक्षः सोमपीथोऽस्रवत्ते व्रीहयोऽभवन्नेवमस्ये-
न्द्रियाणि वीर्याणि व्युदक्रामन् ॥ ९ ॥ अथ ह वै तर्हि ।
नमुचिनैवासुरेण सह चचार स ऽऐक्षत नमुचिरपुनर्वा
ऽअयमभूद्धन्तास्येन्द्रियं वीर्यᳪं सोमपीथमन्नाद्यᳪं हरा-
णीति तस्यैतयैव सुरयेन्द्रियं वीर्यᳪं सोमपीथमन्नाद्यमह-
रत्स ह न्न्यपर्णः शिश्ये तन्देवा ऽउपसञ्जग्मिरे श्रेष्ठो वै
नोऽयमभूत्तमिमम्पाप्माविदद्धन्तेमम्भिषज्यामेति ॥ १० ॥
तेऽश्विनावब्रुवन् । युवं वै ब्रह्माणौ भिषजौ स्थो
युवमिमम्भिषज्यतमिति तावब्रूतामस्तु नौ भाग ऽइति
तेऽब्रुवन्न्य ऽएषोऽजः स वाम्भाग ऽइति तथेति तस्मा-

दाश्विनो धूम्म्रो भवति ॥ ११ ॥ ते सरस्वतीमब्रुवन् । त्वं वै भैषज्यमसि त्वमिमम्भिषज्ज्येति साब्रवीदस्तु मे भाग ऽइति तेऽब्रुवन्नय ऽएषोऽविः स ते भाग ऽइति तथेति तस्मात्सारस्वतो मेषो भवति ॥ १२ ॥ अथाब्रुवन् । एतावद्वा ऽअस्मिमन्नेतर्हि यावदयमृषभोऽस्यैवायमस्त्विति तथेति तस्मादैन्द्र ऽऋषभो भवति ॥ १३ ॥ तावश्विनौ च सरस्वती च । इन्द्रियं वीर्य्यन्नमुचेराहृत्य तदस्मिन्पुन-रदधुस्तम्पाप्मनोऽत्रायन्त सुत्रातम्बतैनम्पाप्मनोऽत्रास्म-हीति तद्वाव सौत्रामण्यभवत्तत्सौत्रामण्यै सौत्रामणी-त्वन्त्रायते मृत्योरात्मानमप पाप्मानꣳ हते य ऽएवमेत-त्सौत्रामण्यै सौत्रामणीत्वं वेद त्रयस्त्रिꣳशद्दक्षिणा भवन्ति त्रयस्त्रिꣳशद्धि तन्देवता ऽअभिषज्यँस्तस्मादाहुर्भेषजन्द-क्षिणा ऽइति ॥ १४ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ सुराक्रयादि ]

अप वा ऽएतस्मात् । तेज ऽइन्द्रियं वीर्य्यङ्क्रामति यꣳ सोमोऽतिपवत ऽऊर्द्ध्वं वांवाङ्वं वा ॥ १ ॥ तदाहुः । अन्नं वा ऽएतद्ब्राह्मणस्य यत्सोमो न वै सोमेन ब्राह्मणः सोमवामी स यो वा ऽअलम्भूत्यै सन्भूतिन्न प्राप्नोति यो वालम्पशुभ्यः सन्पशून्न विन्दते स सोमवामी पशवो हि सोम ऽइति ॥ २ ॥ स ऽएतमाश्विनन्धूम्म्रमालभेत ।

(१) 'ग' 'ज' पुस्तकयोः "चा" इति ।

सारस्वतम्मेषमैन्द्रमृषभमश्विनौ वै देवानाम्भिषजौ ताभ्यामेवैनम्भिषज्यति सरस्वती भेषजन्तयैवास्मै भेषजङ्करोतीन्द्र ऽइन्द्रियं व्वीर्य्यन्तेनैवास्मिन्निन्द्रियं व्वीर्य्यन्दधाति ॥ ३ ॥ चक्षुर्व्वा ऽअश्विनौ तेजः । यदाश्विनो भवति चक्षुरेवास्मिँस्तत्तेजो दधात्यथो श्श्रोत्रꣳ समानꣳ हि चक्षुश्च श्श्रोत्रञ्च ॥४॥ प्राणः सरस्वती व्वीर्य्यम् । यत्सारस्वतो भवति प्प्राणमेवास्मिँस्तद्वीर्य्यन्दधात्यथो ऽअपानꣳ समानꣳ हि प्प्राणश्चापानश्च ॥५॥ [अर्धप्रपाठकः ६०] व्वागिन्द्रो बलम् । यदैन्द्रो भवति व्वाचमेवास्मिँस्तद्बलन्दधात्यथो मनः समानꣳ हि व्वाक्च मनश्च ॥ ६ ॥ आश्विनीरजाः । सारस्वतीरवीरैन्द्रीर्ग्गाव ऽइत्याहुर्य्यदेते पशव ऽआलभ्यन्त ऽएताभिरेव देवताभिरेतान्पशूनवरुन्द्धे ॥ ७ ॥ व्वडवानुशिशुर्भ्भवति । यश ऽएवैकशफमवरुन्द्ध ऽआरण्यानाम्पशूनाँल्लोमानि भवन्त्यारण्यानाम्पशूनामवरुद्ध्यै व्वृकलोमानि भवन्त्योज ऽएव जूतिमारण्यानाम्पशूनामवरुन्द्धे व्व्याघ्रलोमानि भवन्ति मन्न्युमेव राज्यमारण्यानाम्पशूनामवरुन्द्धे सिꣳहलोमानि भवन्ति सह ऽएवैशामारण्यानाम्पशूनामवरुन्द्धे ॥ ८ ॥ व्रीहयश्च श्श्यामाकाश्च भवन्ति । गोधूमाश्च कुवलानि (A) चोपवाकाश्च[1] बदराणि (B) च यवाश्च कर्क्कन्धूनि च[2] शष्पाणि * च तोक्मानि † चोभयमेव

(A) स्थूलानि बदरीफलानि ।

(१) उपवाका इन्द्रयवाः ।

(B) सूक्ष्मबदरीफलानि ।

(२) 'ग' 'ज' पुस्तकयोः 'च' इति नास्ति ।

* विरूढा व्रीहयः शष्पाणि । † विरूढा यवाः तोक्माः ।

ग्राम्यञ्चान्नमारण्यञ्चावरुन्द्धेऽथो ऽउभयेनैवान्नेन यथारूपमिन्द्रियं वीर्य्यमात्मन्धत्ते ॥ ९ ॥ सीसेन शष्पाणि क्रीणाति । ऊर्णाभिस्तोक्मानि सूत्रैर्व्रीहीनुभयोर्वा ऽएतद्रूपमयसश्च हिरण्यस्य च यत्सीसमुभयछं सौत्रामणीष्टिश्च पशुबन्धश्चोभयस्यावरुद्ध्यै ॥ १० ॥ ऊर्णासूत्रेण क्रीणाति । तद्वा ऽएतत्स्त्रीणाङ्कर्म्म यदूर्णासूत्रङ्कर्म्म वा ऽइन्द्रियं वीर्य्यन्तदेतदुत्सन्नछं स्त्रीषु तद्यदेवेन्द्रियं वीर्य्यमुत्सन्नछं स्त्रीषु तदेवावरुन्द्धे ॥ ११ ॥ तद्धैतदन्येऽध्वर्य्यवः । सीसेन क्लीबाच्छष्पाणि क्रीणन्ति तत्तदिति न वा ऽएष स्त्री न पुमान्यत्क्लीबो नेष्टिर्न पशुबन्धः सौत्रामणीति वदन्तस्तदु तथा न कुर्य्यादुभयं वै सौत्रामणीष्टिश्च पशुबन्धश्च व्यृद्धमु वा ऽएतन्मनुष्येषु यत्क्लीबो यज्ञमुख ऽएव ते यज्ञस्य व्यृद्धिन्दधति ये तथा कुर्वन्ति सोमविक्रयिण ऽएव क्रीणीयात्सोमो वै सौत्रामणी यज्ञमुख ऽएव तत्सोमरूपङ्करोति यज्ञस्य समृद्ध्यै ॥ १२ ॥ शतातृण्णा कुम्भी भवति । बहुधेव हि स व्यस्रवदथो शतोन्मानो वै यज्ञो यज्ञमेवावरुन्द्धे सतम्भवति सदेवावरुन्द्धे चप्यम्भवत्यन्नाद्यस्यैवावरुद्ध्यै पवित्रम्भवति पुनन्ति ह्येनं वालो भवति पाप्मनो व्यावृत्त्यै सुवर्णछं हिरण्यम्भवति रूपस्यैवावरुद्ध्यै शतमानम्भवति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं वीर्य्यमात्मन्धत्ते ॥ १३ ॥ आश्वत्थम्पात्रम्भवति । अपचितिमेवावरुन्द्ध ऽऔदुम्बरम्भवत्यूर्जमेवावरुन्द्धे नैयग्रोधम्भवति स्वधामेवा-

वरुन्द्धे स्स्थाल्ल्यो भवन्ति पृथिव्व्या ऽएवान्नाद्यमवरुन्द्धे ॥ १४ ॥ पालाशान्न्युपशयानि भवन्ति । ब्ब्रह्म वै पलाशो ब्ब्रह्मणैव स्वर्ग्गँल्लोकञ्जयत्त्यपाष्ट्रिहस्य पत्त्रे भवतस्त्विषिमेव राज्ज्यं व्वयसामवरुन्द्धे षट्त्रिꣳशदेतानि भवन्ति षट्त्रिꣳशदक्षरा वै बृहती बार्हताः पशवो बृहत्त्यैवास्स्मै पशूनवरुन्द्धे ॥१५॥ तदाहुः । अन्न्यदेवत्त्याः पशवो भवन्त्यन्न्यदेवत्त्याः पुरोडाशा व्विलोमैतत्क्क्रियते कथमेतत्त्सलोम भवतीत्त्यैन्द्रः पशूनामुत्तमो भवत्त्यैन्द्रः पुरोडाशानाम्प्रथम ऽइन्द्रियं वै व्वीर्य्यमिन्द्र ऽइन्द्रियेणैवास्स्मा ऽइन्द्रियं व्वीर्य्यꣳ सन्दधातीन्द्रियेणेन्द्रियं व्वीर्य्यमवरुन्द्धे ॥ १६ ॥ सावित्त्रः पुरोडाशो भवति । सवितृप्प्रसूततायै व्वारुणो भवति व्वरुणो व्वा ऽएतङ्गृह्णाति यः पाप्प्मना गृहीतो भवति व्वरुणेनैवैनं व्वरुणण्याश्मुञ्चत्त्यन्त्त्यो भवत्त्यन्तत ऽएवैनं व्वरुणपाशात्प्रमुञ्चति ॥ १७ ॥ एकादशकपाल ऽऐन्द्रो भवति । एकादशाक्षरा वै त्रिष्टुबिन्द्रियमु वै व्वीर्य्यन्त्रिष्टुबिन्द्रियस्यैव व्वीर्य्यस्यावरुद्ध्यै ॥ १८ ॥ द्वादशकपालः सावित्त्रो भवति । द्वादश वै मासाः सँव्वत्त्सरस्य सँव्वत्त्सरं व्वा ऽअन्नाद्यमन्न्वायत्तꣳ सँव्वत्त्सरादेवास्स्मा ऽअन्नाद्यमवरुन्द्धे ॥ १९ ॥ दशकपालो व्वारुणो भवति । दशाक्षरा वै व्विराडन्नं व्विराड्वरुणोऽन्नपतिर्व्वरुणेनैवास्स्मा ऽअन्नमवरुन्द्धे मद्ध्यत ऽएतैः पुरोडाशैः प्प्रचरति मद्ध्यं व्वा ऽएतेषां रुक्षोनिः स्वादेवैनान्न्योनेः प्प्रजनयति ॥ २० ॥ व्वडवानुशिशुर्द्दक्षिणा भवति । उभयं व्वा ऽएषा जनय-

त्यश्श्वश्चाश्श्वतरश्चोभयꣳ सौत्रामणीष्टिश्च पशुबन्धश्चो-भयस्यैवावरुद्ध्यै ॥ २१ ॥

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ सौत्रामणीग्रहग्रहणादि ]

इन्द्रस्येन्द्रियमन्नस्य रसम् । सोमस्य भक्षꣳ सुरया-सुरो नमुचिरहरत्सोऽश्श्विनौ च सरस्वतीञ्चोपाधावच्छे-पानोऽस्म्मि नमुचये न त्वा दिवा न नक्तꣳ हनानि न दण्डेन न धन्न्वना न पृथेन न मुष्टिना न शुष्क्केण नार्द्रेणाथ म ऽइदमहार्षीदिदम्म ऽआजिहीर्षथेति ॥ १ ॥ तेऽब्ब्रुवन् । अस्तु नोऽत्राप्प्यथाहरामेति सह न ऽएतदथाहरतेत्यब्ब्र-वीदिति ॥ २ ॥ तावश्श्विनौ च सरस्वती च । अपाम्फेनं वज्रमसिञ्चन्न शुष्क्को नार्द्र ऽइति तेनेन्द्रो नमुचेरासुरस्य व्व्युष्टायाꣳ रात्रावनुदित ऽआदित्ये न दिवा न नक्त-मिति शिर ऽउदवासयत् ॥ ३ ॥ तस्म्मादेतदृषिणाब्भ्यनू-क्तम् । 'अपाम्फेनेन नमुचेꣳ शिर ऽइन्द्रोदवर्त्तयꣳ ॥ विश्श्वा यदजय स्पृध' ऽइति पाप्प्मा वै नमुचिꣳ पाप्प्मानं वाव तद्द्विषन्तम्भ्रातृव्व्यꣳ हत्त्वेन्द्रियं व्वीर्य्यमस्यावृङ्क्त स यो भ्रातृव्व्यवान्त्स्यात्स सौत्रामण्ण्या यजेत पाप्प्मान-मेव तद्द्विषन्तम्भ्रातृव्व्यꣳ हत्त्वेन्द्रियं व्वीर्य्यमस्य व्वृङ्क्ते तस्य शीर्ष्णश्छिन्ने लोहितमिश्रꣳ सोमोऽतिष्ठत्तस्म्मादबी-भत्सन्त त ऽएतदन्धसोर्व्विपानमपश्श्यन्त्सोमो राजामृतꣳ

(१) शु० य० सं० १९. ७१ । (२) शु० य० सं० १९. ७२ ।

सुत, ऽइति तेनैनꣳ स्वदयित्वात्मन्नदधत ॥४॥ ‘[1]स्वाद्वीन्त्वा स्वादुने’ति सुराꣳ सन्दधाति । स्वदयत्येवैना[2]‘न्तीव्व्रान्तीव्व्रेणे’तीन्द्रियमेवास्मिन्नदधात्त्य‘[3]मृताममृतेने’त्यायुरेवास्मिन्नदधाति ‘[4]मधुमतीम्मधुमते’ति रसमेवास्यान्दधाति ‘[5]सृजामि सꣳ सोमेने’ति सोमरूपमेवैनाङ्करोति ॥ ५ ॥ ‘सोमोऽ[6]स्यश्श्विब्भ्याम्पच्च्यस्व । सरस्वत्यै पच्च्यस्वेन्द्राय सुत्राम्म्णे पच्च्यस्वे’त्येता वा ऽएतन्देवता ऽअग्ग्रे यज्ञꣳ समभरँस्ताभिरेवैनꣳ सम्भरत्त्यथो ऽएता ऽएवैतद्देवता भागधेयेन समर्द्धयत्त्यासुनोति सुत्त्यायै तिस्रो रात्रीर्व्वसति तिस्रो हि रात्रीꣳ सोमꣳ क्क्रीतो व्वसति सोमरूपमेवैनाङ्करोति ॥ ६ ॥ द्वे व्वेदी * भवतꣳ । द्वौ वाव लोकावित्त्याहुर्द्देवलोकश्चैव पितृलोकश्चेत्त्युत्तरान्न्या भवति दक्षिणान्न्योत्तरो वै देवलोको दक्षिणꣳ पितृलोक ऽउत्तरयैव देवलोकमवरुन्द्धे दक्षिणया पितृलोकम् ॥ ७ ॥ पयश्च सुरा च भवतꣳ । सोमो वै पयोऽन्नꣳ सुरा पयसैव सोमपीथमवरुन्द्धे सुरयान्नाद्यं क्षत्रं वै पयो विट् सुरा सुराम्पूत्त्वा पयꣳ पुनाति विश ऽएव तत्क्षत्त्रञ्जनयति विशो हि क्षत्त्रञ्जायते ॥ ८ ॥ ‘[7]वायोꣳ पूतꣳ पवित्त्रेण । प्प्रत्त्यङ्क्सोमो ऽअतिद्रुत, ऽइति सोमातिपूतस्य † पुनाति यथारूपमेवैनम्पुनाती‘[8]न्द्रस्य

(१) शु० य० सं० १९. १ । (२) शु० य० सं० १९. १ । (३) शु० य० सं० १९. १ । (४) शु० य० सं० १९. १ । (५) शु० य० सं० १९. १ । (६) शु० य० सं० १९. १ ।

* का० श्रौ० सू० १९. २. १ ।

(७) शु० य० सं० १९. ३ ।

† मुखेतरच्छिद्रसोमवामिन इत्यर्थः । (८) शु० य० सं० १९. ३ ।

युज्यः सखे'ति यदेवास्य तेनेन्द्रियं वीर्यमतिक्रान्तम्भवति तदस्मिन्पुनर्दधाति ॥ ९ ॥ 'वायोः[1] पूतः पवित्रेण । प्राङ्क्सोमो ऽअतिद्रुत' ऽइति सोमवामिनः पुनाति यथारूपमेवैनम्पुनाती'न्द्रस्य[2] युज्यः सखे'ति यदेवास्य तेनेन्द्रियं वीर्यमतिक्रान्तम्भवति तदस्मिन्पुनर्दधाति ॥ १० ॥ 'पुनाति[3] ते परिस्रुत'मिति । समृद्धिकामस्य पुनाति समृद्ध्यै 'सोमं[4] सूर्यस्य दुहिते'ति श्रद्धा वै सूर्यस्य दुहिता श्रद्धयैष सोमो भवति श्रद्धयैवैनं सोमङ्करोति 'वारेण[5] शश्वता तने'ति वालेन ह्येषा पूयते ॥ ११ ॥ 'ब्रह्म[6] क्षत्रम्पवत' ऽइति पयः पुनाति । ब्रह्मण ऽएव तत्क्षत्रञ्जनयति ब्रह्मणो हि क्षत्रञ्जायते 'तेज[7] ऽइन्द्रिय'मिति तेज ऽएवास्मिन्निन्द्रियं वीर्यन्दधाति 'सुरया[8] सोम' ऽइति सुरया हि सोमः 'सुत[9] ऽआसुत' ऽइत्यासुताद्धि सूयते 'मदाये'[10]ति मदाय वाव सोमो मदाय सुरोभावेव सोममदञ्च सुरामदञ्चावरुन्द्धे 'शुक्रेण[11] देव देवताः पिपृग्धी'ति शुक्रेण देव देवताः प्रीणीहीत्येवैतदाह 'रसेनान्नं[12] यजमानाय धेही'ति रसमेवान्नं यजमाने दधाति पूर्वे पयोग्रहा गृह्यन्तेऽपरे सुराग्रहा विशन्तत्क्षत्रस्यानुवर्त्मानङ्करोति ॥ १२ ॥ 'कुविदङ्ग[13] यवमन्तो यवञ्चि'दिति । पयोग्रहान्गृह्णाति * सोमांशवो वै यवाः सोमः पयः

(१) शु० य० सं० १९. ३। (२) शु० य० सं० १९. ३। (३) शु० य० सं० १९. ४। (४) शु० य० सं० १९. ४। (५) शु० य० सं० १९. ४। (६–१२) शु० य० सं० १९. ५। (१३) शु० य० सं० १९. ६।

* का० श्रौ० सू० १९. २, १४।

सोमेनैवैनꣳ सोमङ्करोत्येकया गृह्णात्येकधैव यजमाने श्रियन्दधाति श्रीर्हि पयः ॥ १३ ॥ 'नाना हि वान्देवहितꣳ सदस्कृत'मिति। सुराग्रहान्गृह्णाति नाना हि सोमश्च सुरा च देवहितमिति देवहिते ह्येते नाना सदस्कृतमिति द्वे हि वेदी भवतो 'मा सꣳसृक्षाथाम्परमे व्योम'न्निति पाप्मनैवैनं व्यावर्त्तयति 'सुरा त्वमसि शुष्मिणी'ति सुरामेव सुराङ्करोति 'सोम एष'इति सोममेव सोमङ्करोति 'मा मा हिꣳसीः स्वां योनिमाविशन्ती'ति यथायोन्येवैनां व्यावर्त्तयत्यात्मनोऽहिꣳसाया एकया गृह्णात्येकधैव यजमाने यशो दधाति यशो हि सुरा ॥ १४ ॥ क्षत्रं वै पयोग्रहाः विट् सुराग्रहा यद्व्यतिषक्तान्गृह्णीयाद्विशं क्षत्राद्व्यवच्छिन्द्यात्क्षत्रं विशः पापवस्यसङ्कुर्य्याद्यज्ञस्य व्यृद्धिं व्यतिषक्तान्गृह्णाति विशमेव क्षत्रेण सन्दधाति क्षत्रं विशा पापवस्यसस्य व्यावृत्त्यै यज्ञस्य समृद्ध्यै ॥ १५ ॥ प्राणा वै पयोग्रहाः। शरीरꣳ सुराग्रहा यद्व्यतिषक्तान्गृह्णीयाच्छरीरम्प्राणेभ्यो व्यवच्छिन्द्यात्प्राणाञ्छरीरात्प्रमायुको यजमानः स्याद्व्यतिषक्तान्गृह्णाति शरीरमेव प्राणैः सन्दधाति प्राणाञ्छरीरेणाथो आयुरेवास्मिन्दधाति तस्मात्सौत्रामण्येजानः सर्वमायुरेत्यथो य एवमेतद्वेद ॥ १६ ॥ सोमो वै पयोग्रहाः। अन्नꣳ सुराग्रहा यत्पयोग्रहाश्च सुराग्रहाश्च गृह्यन्ते सोमपीथञ्चैवान्नाद्यञ्चावरुन्द्धे

(१) शु० य० सं० १९. ७। (२) शु० य० सं० १९. ७। (३) शु० य० सं० १९. ७। (४) शु० य० सं० १९. ७। (५) शु० य० सं० १९. ७।

॥ १७ ॥ पशवो वै पयोग्ग्रहाः । अन्नᳬ सुराग्ग्रहा यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्णन्ते पशूँश्चैवान्नाद्यञ्चावरुन्द्धे ॥ १८ ॥ ग्राम्म्या वै पशवः पयोग्ग्रहाः । आरण्याः सुराग्ग्रहा यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्णन्ते ग्ग्राम्म्याँश्चैव पशूनारण्याँश्चावरुन्द्धे ग्ग्राम्म्येण चान्नेनारण्येन च पयोग्ग्रहाञ्छ्रीणाति तस्म्माद्ग्राम्म्याणाम्पशूनाङ्ग्राम्म्यञ्चैवान्नाद्यमारण्यञ्चावरुद्धम् ॥ १९ ॥ तदाहुः । एतस्यै वा ऽएतद्घलायै देवतायै रूपं यदेते घोरा ऽआरण्याः पशवो यदेतेषाम्पशूनाँल्लोमभिः पयोग्ग्रहाञ्छ्रीणीयाद्रुद्रस्यास्ये पशूनपिदध्यादपशुर्यजमानः स्याद्यन्न श्रीणीयादनवरुद्धा ऽअस्य पशवः स्यू रुद्रो हि पशूनामीष्ट ऽइति सुराग्ग्रहानेवैतेषाम्पशूनाँल्लोमभिः श्रीणाति सुरायामेव तद्रौद्रन्दधाति तस्म्मात्सुराम्पीत्वा रौद्रमना ऽअथो ऽआरण्येष्वेव पशुषु रुद्रस्य हेतिन्दधाति ग्ग्राम्म्याणाम्पशूनामहिᳬसाया ऽअवरुद्धा ऽअस्य पशवो भवन्ति न रुद्रस्यास्ये पशूनपिदधाति ॥ २० ॥ '[1]यां व्याघ्रं विषूचिका । उभौ वृकञ्च रक्षति ॥ श्येनम्पतत्रिणᳬ सिᳬहᳬ सेमम्पात्वᳬहसः' ॥ '[2]यदापिपेष मातरम्पुत्रः प्रमुदितो धयन् ॥ एतत्तदग्ने ऽअनृणो भवाम्म्यहतौ पितरौ मये'ति ॥ २१ ॥ अद्ध्वर्युश्च प्रतिप्रस्थाता च । जघनेन वेदिम्प्राञ्चमावृत्तं यजमानᳬ श्येनपत्राभ्यामूर्द्धञ्चावाञ्चञ्च पावयतः प्राणोदानयोस्तद्रूपम्प्राणोदाना-

(१) शु० य० सं० १९. १०। (२) शु० य० सं० १९. ११।

वेवावरुन्द्ध ऽऊर्द्ध्वश्च ह्ययमवाङ् च प्प्राण ऽआत्मानमनु-सञ्चरति 'सम्पृच स्स्थ सम्मा भद्रेण पृङ्क्ते'ति पयोग्ग्रहा-न्त्सम्मृशति श्रियैवैनं य्यशसा समर्द्धयति 'विपृच स्स्थ वि मा पाप्प्मना पृङ्क्ते'ति सुराग्ग्रहान्न्पाप्प्मनैवैनं व्व्यावर्त्त-यति ॥ २२ ॥

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥



[ ग्रहभक्षणसुरापावनादि ]

इन्द्रस्य वै यत्र । इन्द्रियाणि व्वीर्य्याणि व्व्युदक्रा-मँस्तानि देवा ऽएतेनैव यज्ञेन पुनः समदधुर्य्यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्णन्त ऽइन्द्रियाण्ण्येवास्मिमँस्तद्वीर्य्याणि पुनः सन्दधत्युत्तरेऽग्नौ पयोग्ग्रहाञ्जुहोति शुक्रेणैवैनन्तत्सो-मपीथेन समर्द्धयन्ति ॥ १ ॥ स जुहोति 'सुरावन्तम्बर्हिषदꣳ सुवीर'मिति सुरावान्न्वा ऽएष बर्हिषद्यज्ञो यत्सौत्रामणी बर्हिषैवैनं य्यज्ञेन समर्द्धयति 'यज्ञꣳ हिन्न्वन्ति महिषा नमोभि'रित्यृत्विजो वै महिषा यज्ञो नम ऽऋत्विग्भिरेव यज्ञꣳ समर्द्धयति यज्ञेन यजमान'न्दधानाः सोम'मिति सोम-पीथमेवास्मिमन्दधाति 'दिवि देवतास्वि'ति दिव्व्येवैनन्दे-वतासु दधाति 'मदेमेन्द्र'मिति मदाय वाव सोमो मदाय सुरोभावेव सोममदञ्च सुरामदञ्चावरुन्द्धे 'यजमानाः

( ३ ) शु० य० सं० १९. ११ । ( ४ ) शु० य० सं० १९. ११ । ( ५ ) शु० य० सं० १९. ३२ । ( ६ ) शु० य० सं० १९. ३२ । ( ७ ) शु० य० सं० १९. ३२ । ( ८ ) शु० य० सं० १९. ३२ । ( ९ ) शु० य० सं० १९. ३२ । (१०) शु० य० सं० १९. ३२ ।

स्वर्क्का' ऽइत्यर्क्को * वै देवानामन्नमन्नं ऽयज्ञो यज्ञेनैवैनमन्नाद्येन समर्द्धयति हुत्वा भक्षयन्ति समृद्धमेवास्य तद्वर्द्धयन्ति ॥ २ ॥ स भक्षयति । '[1]यमश्विना नमुचेरासुराद्धी'त्यश्विनौ ह्येतन्नमुचेरद्ध्याहरताथ्ँ '[2]सरस्वत्यसुनोदिन्द्रियाये'ति सरस्वती ह्येतमसुनोदिन्द्रियाये'[3]मन्तथ्ँ शुक्रम्मधुमन्तमिन्दु'मिति शुक्रो वा ऽएष मधुमानिन्दुर्यथ्ँसोमथ्ँ '[4]सोमथ्ँ राजानमिह भक्षयामी'ति सोम ऽएवास्य राजा भक्षितो भवति दक्षिणेऽग्नौ सुराग्रहाञ्जुहोति पाप्मनैवैनन्तद्व्यावर्त्तयन्ति ॥ ३ ॥ स जुहोति । '[5]यस्ते रसः सम्भृत ऽओषधीष्वि'त्यपाञ्च वा ऽएष ऽओषधीनाञ्च रसो यत्सुरापाञ्चैवैन[6]मेतदोषधीनाञ्च रसेन समर्द्धयति '[7]सोमस्य शुष्मथ्ँ सुरया सुतस्ये'ति य ऽएव सोमे शुष्मो यथ्ँ सुरायान्तमेवावरुन्द्धे '[8]तेन जिन्व यजमानम्मदेने'ति तेन प्प्रीणीहि यजमानम्मदेनेत्येवैतदाह '[9]सरस्वतीमश्विनाविन्द्रमग्नि'मिति देवताभिरेव यज्ञथ्ँ समर्द्धयति देवताभिर्यज्ञेन यजमानथ्ँ हुत्वा भक्षयन्ति ऽव्यृद्धमेवास्य तत्समर्द्धयन्ति ॥४॥ स भक्षयति । '[10]यदत्र रिप्तथ्ँ रसिनथ्ँ सुतस्ये'ति सुतासुतयोरेव रसमवरुन्द्धे '[11]यदिन्द्रो ऽअपिबच्छचीभि'रितीन्द्रो ह्येतदपिबच्छचीभिर'[12]हन्तदस्य मनसा शिवेने'त्यशिव ऽइव वा

* 'अर्कमन्नं भवत्यर्चति भूतानि' ( निरु० नै० का० ५. ४ ) ।

(१) शु० य० सं १९. ३४ । (२) शु० य० सं० १९. ३४ । (३) शु० य० सं० १९. ३४ । (४) शु० य० सं० १९. ३४ । (५) शु० य० सं० १९. ३३ ।

(६) 'सुरापाञ्चैन०' इति 'ग' 'ज' पुस्तकयोः पाठः ।

(७) शु० य० सं० १९. ३३ ।

(८) शु० य० सं० १९. ३३ । (९) शु० य० सं० १९. ३३ । (१०) शु० य० सं० १९. ३५ । (११) शु० य० सं० १९. ३५ । (१२) शु० य० सं० १९. ३५ ।

ऽएष भक्षो यत्सुरा ब्ब्राह्मणस्य शिवमेवैनमेतत्कृत्वात्म-न्धत्ते 'सोमं राजानमिह भक्षयामी'ति सोम ऽएवास्य राजा भक्षितो भवति ॥ ५ ॥ तद्धैतदुन्न्येऽद्ध्वर्युर्वंद्व । राजन्न्यं वा व्वैश्यं वा परिक्क्रीणन्ति स ऽएतद्भक्षयिष्ष्यतीति तदु तथा न कुर्य्याद्यो ह वा ऽएतद्भक्षयति तस्य हैव-म्पितॄन्न्पितामहानेष सोमपीथोऽन्न्वेति दक्षिणस्यैवाग्नेस्त्री-नङ्गारान्निर्वृर्त्य बहिष्प्परिधि तदेताभिर्व्याहृतिभिर्जुहुयात् ॥ ६ ॥ 'पितृभ्यः स्वधायिभ्यः स्वधा नम' ऽइति । पितॄनेव पितृलोके स्वधायान्दधाति 'पितामहेभ्यः स्वधा-यिभ्यः स्वधा नम' ऽइति पितामहानेव पितामहलोके स्वधायान्दधाति 'प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नम' ऽइति प्रपितामहानेव प्रपितामहलोके स्वधायान्द-धाति ॥ ७ ॥ अप ऽआनीय निनयति । 'अक्षन्न्पितर' ऽइत्यन्नाद्यमेवैषु दधात्य'मीमदन्त पितर' ऽइति मद-यत्त्येवैनान'तीतृपन्त पितर' ऽइति तर्प्पयत्त्येवैना'न्न्पितरः शुन्धद्ध्व'मित्यनुपूर्व्वमेवैनान्त्सर्व्वान्न्पावयति पवित्रं व्वै सौत्रा-मणी ॥ ८ ॥ त्रिभिः पवित्रैः पावयन्ति । त्रयो वा ऽइमे लोका ऽएभिरेवैनँल्लोकैः पुनन्ति ॥ ९ ॥ पावमानीभिः पावयन्ति । पवित्रं व्वै पावमान्न्यः पवित्रेणैवैनम्पुनन्ति ॥ १० ॥ तिसृभिस्तिसृभिः पावयन्ति । त्रयो वै प्राणाः

(१) शु० य० सं० १९. ३५। (२) शु० य० सं० १९. ३६। (३) शु० य० सं० १९. ३६। (४) शु० य० सं० १९. ३६। (५) शु० य० सं० १९. ३६। (६) शु० य० सं० १९. ३६। (७) शु० य० सं० १९. ३६। (८) शु० य० सं० १९. ३६।

प्प्राण ऽउदानो व्व्यानस्तैरेवैनम्पुनन्ति ॥ ११ ॥ नवभिः पावयन्ति । नव वै प्प्राणा प्प्राणैरेवैनम्पुनन्ति प्प्राणेषु पुनः पूतम्प्रतिष्ठापयन्ति ॥ १२ ॥ पवित्त्रेण पावयन्ति । अजाविकस्य वा ऽएतद्रूपं यत्पवित्त्रमजाविकेनैवैनम्पुनन्ति ॥ १३ ॥ व्वालेन पावयन्ति । गोऽश्वस्य वा ऽएतद्रूपं यद्वालो गोऽश्वेनैवैनम्पुनन्ति ॥ १४ ॥ हिरण्ययेन पावयन्ति । देवानां व्वा ऽएतद्रूपं यद्धिरण्यन्देवाना-मेवैनꣳ रूपेण पुनन्ति ॥ १५ ॥ सुरया पावयन्ति । सुरा हि पूता पूतयैवैनम्पुनन्ति तद्यथा सुरा पूयमाना व्वल्कसेन व्विविच्च्यत ऽएवमेवैतद्यजमानः सर्व्वस्म्मात्पाप्प्मनो निर्म्मुच्च्यते य ऽएवं व्विद्वान्त्सौत्रामण्या यजते यो वैतदेवं व्वेद ॥ १६ ॥ तदाहुः । याजयितव्व्यꣳ सौत्रामण्या३ न याजयितव्व्या३मित्यनन्तरायꣳ ह्येवास्य[1] सर्व्वम्पाप्प्मान-मपघ्नन्तीति तदु ह स्म्माह रेवोत्तरा स्त्थपतिः पाटवश्चाक्क्रोऽपि प्प्रदानम्प्रदाय याजयितव्व्यमेवात्मा वै यज्ञस्य यज-मानोऽङ्गान्न्यृत्विजो यत्र वा ऽआत्मा पूतः पूतानि तत्रा-ङ्गान्न्युभय ऽएव पुनत ऽउभये पाप्प्मानमपघ्नते तस्म्मा-दपि प्प्रदानम्प्रदाय याजयितव्व्यमेवेति ॥ १७ ॥ पितृलोकं व्वा ऽएतेऽन्न्ववयन्ति । ये दक्षिणेऽग्नौ चरन्त्याज्याहुति-ञ्जुहोति यज्ञो वा ऽआज्ज्यं यज्ञादेव यज्ञे प्प्रतितिष्ठन्ति ॥ १८ ॥ स जुहोति । 'ये [2]समानाः समनसः पितरो यम-राज्ज्ये ॥ तेषाँल्लोकः स्वधा नमो यज्ञो देवेषु कल्प्पता'मिति

(१) "ह्येवास्मात्" इति 'ग' 'ज' पुस्तकयोः । (२) शु० य० सं० १९. ४५ ।

पितॄनेव यमे परिददात्यथो पितृलोकमेव जयति सर्व्वे यज्ञोपवीतानि कृत्वोत्तरमग्निमुपसमायन्त्ययं वै लोक ऽउत्तरोऽग्निरस्मिन्नेव लोके प्प्रतितिष्ठन्त्याज्याहुतिञ्जुहोति यज्ञो वा ऽआज्यं य्यज्ञादेव यज्ञे प्प्रतितिष्ठन्ति ॥ १९ ॥ स जुहोति । '[1]ये समानाः समनसो जीवा जीवेषु मामकाः ॥ तेषाᳬं श्रीर्म्मयि कल्प्पतामस्मिँल्लोके शतᳬं समा' ऽइति स्वानामेव श्रियमवरुन्द्धेऽथो ज्योग्जीवातुमेवैषु दधाति पयः समन्न्वारब्धेषु जुहोति प्प्राणो वा ऽअन्नम्पयः प्प्राण ऽएवान्नाद्येऽन्ततः प्प्रतितिष्ठन्ति ॥२०॥ स जुहोति । '[2]द्वे स्रुती ऽअश्रृणवम्पितॄणामह'मिति द्वे वाव स्रुती ऽइत्याहुर्द्देवानाञ्चैव पितॄणाञ्चेति '[3]ताभ्यामिदं व्विश्वमेजत्समेती'ति ताभ्याᳬं हीदᳬं सर्व्वमेजत्समेति '[4]यदन्तरा पितरम्मातरञ्चे'त्यसौ वै पितेयम्माताभ्यामेव पितॄन्देवलोकमपिनयत्येकाकी हुतोच्छिष्टम्भक्षयत्येकधैव श्रियमात्मन्धत्ते श्रीर्हि पयः ॥ २१ ॥ स भक्षयति । '[5]इदᳬं हविः प्प्रजननम्मे ऽअस्त्वि'ति प्प्रजननᳬं हि यदि पयो यदि सोमो '[6]दशवीर'मिति प्प्राणा वै दश वीराः प्प्राणानेवात्मन्धत्ते '[7]सर्व्वगण'मित्यङ्गानि वै सर्व्वे गणा ऽअङ्गान्न्येवात्मन्धत्ते '[8]स्वस्तय ऽआत्मसनी'त्यात्मानमेव सनोति

---

(१) शु० य० सं० १९. ४६ । (२) शु० य० सं० १९. ४७ । (३) शु० य० सं० १९. ४७ । (४) शु० य० सं० १९. ४७ । (५) शु० य० सं० १९. ४८ । (६) शु० य० सं० १९. ४८ । (७) शु० य० सं० १९. ४८ । (८) शु० य० सं० १९. ४८ । (९) शु० य० सं० १९. ४८ ।

'प्रजासनी'ति प्रजामेव सनोति 'पशुसनी'ति पशूनेव सनोति 'लोकसनी'ति लोकाय वै यजते तमेव जयत्य'भय-सनी'ति स्वर्गो वै लोकोऽभयꣳ स्वर्ग ऽएव लोकेऽन्ततः प्रतितिष्ठत्य'ग्निः प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतो ऽअस्मासु धत्ते'ति तद्य ऽएवैनमेते याजयन्ति तानेतदाहै-तन्मयि सर्वन्धत्तेति हिरण्येन मार्जयन्तेऽमृतं वै हिरण्य-ममृत ऽएवान्ततः प्रतितिष्ठन्ति ॥ २२ ॥

**अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥**

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या १२० ॥



[ सुरानिर्माणादि ]

प्रजापतिर्यज्ञमसृजत । तमाहरत्तेनायजत तेनेष्ट्वा रिरिचान ऽइवामन्यत स ऽएतं यज्ञक्रतुमपश्यत्सौत्रा-मणीन्तेनायजत ततो वै स पुनराप्यायत रिच्यत ऽइव वा ऽएष यः सोमेन यजते वीव ह्यस्य वित्तं वेदो हरन्ति ॥ १ ॥ सोमेनेष्ट्वा सौत्रामण्या यजेत । यथा धेनुर्दुग्धा पुनराप्यायेतैवꣳ हैव पुनराप्यायत ऽआ प्रजया पशुभिः प्यायते प्रत्यस्मिँल्लोके तिष्ठत्यभि स्वर्गँल्लोकञ्जयति य ऽएवं विद्वान्त्सौत्रामण्या यजते यो वैतदेवं वेद ॥ २ ॥ तद्धैतत्पप्रच्छ । सुप्ला सार्ञ्जयः प्रतीदर्शमैभावतं यन्न

(१) शु० य० सं० १९. ४८। (२) शु० य० सं० १९. ४८। (३) शु० य० सं० १९. ४८। (४) शु० य० सं० १९. ४८। (५) शु० य० सं० १९. ४८।

दीक्षयेव दीक्षते न सोमाᳩंशव ऽइव न्न्युप्प्यन्तेऽथ कथᳪं सौत्रामणी सोमयज्ञो भवतीति ॥ ३ ॥ स होवाच । शिरो वा ऽएतद्यज्ञस्य यद्व्रतमात्मा दीक्षैतत्खलु वै व्रतस्य रूपं य्यत्सत्यमेतद्दीक्षायै यच्छ्रद्धा मनो यजमानस्य रूपं व्वाग्यज्ञस्येति ॥ ४ ॥ स यद्वाचा व्रतमुपैति । आत्मन्न्येवैतद्यज्ञस्य शिरः प्प्रतिदधाति सत्यᳩं श्रद्धायान्दधाति यजमानं य्यज्ञे ॥ ५ ॥ तस्मादेतस्य यज्ञस्य । व्रतमेव दीक्षा व्वृषो वै व्रतं य्योषा दीक्षा वृषा सत्यं य्योषा श्श्रद्धा व्वृषा मनो योषा व्वाग्वृषा पत्न्यै यजमानस्तस्माद्यत्रैव पतिस्तत्र जायाथो यज्ञमुख ऽएव तन्न्मिथुनानि करोति प्प्रजात्यै ॥ ६ ॥ एते खलु वा ऽएतस्य यज्ञस्य । सोमाᳩंशव ऽइत्याहुर्यच्छष्प्पाणि तोक्मानि लाजा ऽइति ॥ ७ ॥ प्रातःसवनस्यैतद्रूपम् । यच्छष्प्पाण्ययं व्वै लोकः प्प्रातःसवनᳪं स ऽआश्विन ऽआश्विनेन पयसा प्प्रथमाᳩं रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण प्प्रातःसवनेन समर्द्धयति ॥ ८ ॥ माध्यन्दिनस्यैतत्सवनस्य रूपम् । यत्तोक्मान्न्यन्तरिक्षं वै माध्यन्दिनᳪं सवनन्तत्सारस्वतᳪं सारस्वतेन पयसा द्वितीयाᳩं रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण माध्यन्दिनेन सवनेन समर्द्धयति ॥ ९ ॥ तृतीयसवनस्यैतद्रूपम् । यल्लाजा द्यौर्वै तृतीयसवनᳪं सैन्द्रयैन्द्रेण पयसा तृतीयाᳩं रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण तृतीयसवनेन समर्द्धयति ॥ १० ॥

एकस्यै दुग्धेन । प्प्रथमाᳩं रात्रिम्परिषिञ्चति द्वयोर्दुग्धेन द्वितीयान्तिसृणान्दुग्धेन तृतीयां र्यथारूपमेवैनं र्यथा-देवतᳩ सवनैᳩ समर्द्धयति ॥ ११ ॥ 'परीतो षिञ्चता सुत'-मिति परिषिञ्चति सुत्यायै 'सोमो य ऽउत्तमᳩ हवि'-रित्युत्तमं व्वा ऽएतद्धविर्र्यत्सोम ऽउत्तममेवैनᳩ हविष्क-रोति 'दधन्न्वा यो नर्यो ऽअप्प्स्वन्तरे'त्यद्भिश्च ह्येषोऽ-न्तरेण च सूयते 'सुषाव सोममद्रिभि'रित्यद्रिभिर्व्वै सोमᳩ सूयतेऽद्रिभिरेवैनᳩ सुनोति सोमसुत्यायै ॥ १२ ॥ तदाहुᳩ । उभयोर्व्वा ऽएतद्रूपᳩ सुतस्य चासुतस्य च यत्सौत्रामण्य-प्पामेष ऽओषधीनाᳩं रसो यत्पयस्तत्सुतस्य रूपमन्नस्यै-ष रसो यत्परिस्रुत्तदासुतस्य रूपमुभाभ्यामेवैनᳩ सवा-भ्याᳩं सुनोत्युभाभ्याᳩं सवाभ्यामवरुन्द्धे ॥ १३ ॥ तदाहुᳩ । यद्ग्रावभिᳩ सोमᳩ सूयतेऽथ कथᳩ सौत्राम-णीति प्प्रैषाप्प्रीभिरिति ब्ब्रूयाद्बार्हता वै प्प्रैषा बार्हता ग्ग्रावाणो ग्ग्रावभिर्व्वै सोमᳩ सूयते ग्ग्रावभिरेवैनᳩ सुनोति सोमसुत्यायै ॥ १४ ॥ सर्व्वे पयस्वन्तो भवन्ति । पयसा हि सूयते सर्व्वे सोमवन्तो भवन्ति सोमरूपतायै सर्व्वे परिस्रुन्मन्तो भवन्ति परिस्रुता हि सूयते सर्व्वे घृतवन्तो भवन्त्येतद्वै प्प्रत्यक्षाद्यज्ञरूपं र्यद्घृतम्प्प्रत्यक्षादेवैनं र्यज्ञरू-पङ्करोति सर्व्वे मधुमन्तो भवन्त्येतद्वै प्प्रत्यक्षात्सोमरूपं र्यन्मधु प्प्रत्यक्षादेवैनᳩ सोमरूपङ्करोति ॥ १५ ॥ *

(१) शु० य० सं० १९. २। (२) शु० य० सं० १९. २। (३) शु० य० सं० १९. २। (४) शु० य० सं० १९. २।

* शतम् ६३००।

सर्वं ऽआश्विना भवन्ति । भैषज्याय सर्वे सारस्वता ऽअन्नाद्यस्येवावरुद्ध्यै सर्वं ऽऐन्द्रा इन्द्रियस्येव वीर्य्यस्यावरुद्ध्यै ॥ १६ ॥ यद्वेव सर्वं ऽआश्विना भवन्ति । सर्वे सारस्वताः सर्वं ऽऐन्द्रा ऽएता वा ऽएतन्देवता ऽअग्ग्रे यज्ञꣳ समभरँस्ताभिरेवैनꣳ सम्भरत्यथो ऽएता एवैतद्देवता भागधेयेन समर्द्धयति ॥ १७ ॥ सन्तता याज्यापुरोऽनुवाक्क्या भवन्ति । समानदेवत्याः प्प्रजानाᳬ सन्तत्या ऽअव्व्यवच्छेदाय सर्व्वा ऽआश्विन्न्यो भवन्ति सर्वाः सारस्वत्यः सर्व्वा ऽऐन्द्र्यः समानी बन्धुता ॥ १८ ॥ अनुष्टुभ ऽआप्प्रियो भवन्ति । वाग्ग्वा ऽअनुष्टुब्ब्वाचो वै सोमः सूयते वाचैवैनꣳ सुनोति सोमसुत्त्यायै सर्व्वा ऽआश्विन्न्यो भवन्ति सर्वाः सारस्वत्यः सर्व्वा ऽऐन्द्र्यः समानी बन्धुता ॥ १९ ॥ जागता ऽअनुप्प्रैषा भवन्ति । इयं वै जगत्त्यनया वै सोमः सूयतेऽनयैवैनꣳ सुनोति सोमसुत्त्यायै सर्वं ऽआश्विना भवन्ति सर्वे सारस्वताः सर्वं ऽऐन्द्राः समानी बन्धुता ॥ २० ॥ स वा ऽएष प्प्रत्यक्षात्सोमयज्ञ ऽएव यत्सौत्रामणी तं यद्येकाकी यजमानो भक्षयेदिष्टिर्वैव स्यात्पशुबन्धो वा सर्वं ऽऋत्विजो भक्षयन्ति सर्वे वा ऽऋत्विजः सोमम्भक्षयन्ति सोमरूपतायै ॥ २१ ॥ आश्विनमद्ध्वर्य्यवो भक्षयन्ति । अश्विनौ वै देवानामद्ध्वर्य्यू स्वमेवैतद्भागधेयꣳ स्व ऽआयतने भक्षयन्ति ॥ २२ ॥ सारस्वतꣳ होता ब्ब्रह्मा मैत्रावरुणः । वाग्वै यज्ञस्य होता हृदयम्ब्रह्मा मनो मैत्रावरुणः स्वमेवैतद्भागधेयᳬ स्व

ऽआयतने भक्षयन्ति ॥ २३ ॥ ऐन्द्रं य्यजमानो भक्षयति । ऐन्द्रो वा ऽएष यज्ञो यत्सौत्रामणीन्द्रायतन ऽएष ऽएतर्हि यो यजते स्वमेवैतद्भागधेयथं स्व ऽआयतने भक्षंयति ॥२४॥ चक्षुर्वा ऽआश्विनो ग्ग्रहः । प्प्राणः सारस्वतो व्वागैन्द्र ऽआश्विनात्सारस्वतेऽवनयति चक्षुरेवास्य तत्प्राणैः सन्दधाति सारस्वतादैन्द्रे प्प्राणानेवास्य तद्वाचा सन्दधात्यथो प्प्राणानेवास्य तद्वाचि प्प्रतिष्ठापयति तस्मात्सर्वे प्प्राणा व्वाचि प्प्रतिष्ठिताः ॥२५॥ त्रय आश्विनम्भक्षयन्ति । अद्ध्वर्य्युः प्प्रतिप्प्रस्थाताग्नीद्ध्रस्त्रिवृद्वा ऽइदञ्चक्षुः शुक्लं कृष्णङ्कनीनका यथारूपमेवास्मिँश्चक्षुर्द्दधति[1] ॥२६॥ त्रयः सारस्वतम् । होता ब्ब्रह्मा मैत्रावरुणस्त्रेधाविहितो वा ऽअयम्प्राणः प्प्राण ऽउदानो व्व्यान ऽइति यथारूपमेवास्मिन्प्राणन्दधति ॥ २७ ॥ एकाक्क्यैन्द्रं य्यजमानो भक्षयति । एकधा वा ऽएषा प्प्राणानाथं श्रीर्य्यद्वागेकधैव व्वाचथं श्रियमात्मन्धत्ते तस्मात्सौत्रामण्ण्येजान ऽएकधा स्वानाᳫं श्रेष्ठो भवत्यथो य ऽएवमेतद्वेद ॥ २८ ॥ ऋतवो वा ऽऋत्विजः मासा भक्षाः षडृत्विजो भक्षयन्ति षड्वा ऽऋतव ऽऋत्विग्भिरेवर्त्तूनवरुन्द्धे ॥ २९ ॥ द्वादश भक्षा भवन्ति । द्वादश वै[2] मासा भक्षैरेव मासानवरुन्द्धे पुनः पुनरभिनिवर्त्तमृत्विजो भक्षयन्ति तस्मादृतवश्च मासाश्चान्योऽन्यमभिनिवर्त्तन्ते ॥ ३० ॥ त्रयोदशं य्यजमानो भक्षयति । यो ह वा ऽएष त्रयोदशो मास ऽएष ऽएव प्प्रत्य-

(१) 'ग' 'ज' पुस्तकयोः 'धा' इति । ( २ ) 'ग' 'ज' पुस्तकयोः ''वै'' इति नास्ति ।

क्षात्सँव्वत्सर ऽएतमेवाप्त्वावरुन्द्धे स व्वा ऽएष सँव्वत्सर ऽएव यत्सौत्रामणी तेन सर्व्वञ्जयति सर्व्वमवरुन्द्धे ॥ ३१ ॥ त्रयः पशवो भवन्ति । त्रयो व्वा ऽइमे लोका ऽइमानेव तैर्ल्लोकानवरुन्द्ध ऽइममेव लोकमाश्विनेनान्तरिक्षꣳ सारस्वतेन दिवमैन्द्रेण यथारूपमेव यथादेवतमिमाँल्लोकाञ्जयति चाव च रुन्द्धे ॥ ३२ ॥ त्रयः पुरोडाशा भवन्ति । त्रयो व्वा ऽऋतव ऽऋतूनेव तैरवरुन्द्धे ग्रीष्ममेवैन्द्रेण व्वर्षाः सावित्रेण हेमन्तं व्वारुणेन यथारूपमेव यथादेवतमृतूञ्जयति चाव च रुन्द्धे ॥ ३३ ॥ षड्ग्रहा भवन्ति । षड्वा ऽऋतव ऽऋतूनेव[2] तैरवरुन्द्धे व्वसन्तग्रीष्मावेवाश्विनाभ्यां व्वर्षाशरदौ सारस्वताभ्याꣳ हेमन्तशिशिरावैन्द्राभ्यां यथारूपमेव यथादेवतमृतूञ्जयति चाव च रुन्द्धे ॥ ३४ ॥ सन्तता याज्यापुरोऽनुवाक्क्या भवन्ति । समानदेवत्त्या ऽऋतूनाꣳ सन्तत्त्या ऽअव्यवच्छेदाय सर्व्वाः पुरोऽनुवाक्क्या भवन्ति सर्व्वा याज्यास्तस्मादृतवः सर्व्वे पराञ्चः सर्व्वे प्प्रत्यञ्चः सर्व्वाः प्प्रथमा भवन्ति सर्व्वा मद्ध्यमाः सर्व्वा ऽउत्तमास्तस्मादृतवः सर्व्वे प्प्रथमाः सर्व्वे मद्ध्यमाः सर्व्व ऽउत्तमाः सर्व्वेषाङ्ग्रहाणान्द्वे याज्यापुरोऽनुवाक्क्ये भवतोऽहोरात्रयोस्तद्रूपमहोरात्रे ऽएवावरुन्द्धे तस्मादृतवश्च मासाश्चाहोरात्रयोरेव प्प्रतिष्ठिताः ॥ ३५ ॥ स व्वा ऽएष सँव्वत्सर ऽएव यत्सौत्रामणी । चन्द्रमा ऽएव प्प्रत्यक्षादादित्यो यजमानस्तस्येयमेव पृथिवी व्वेदिरन्तरिक्षमुत्तरवेदि-

( १-२ ) "ऋतूनेवैतै०" इति 'ग' 'ज' पुस्तकयोः ।

द्यौर्व्वाहिर्दिश ऽऋत्विजो व्वनस्पतय ऽइद्ध्म ऽआप ऽआज्यमोषधय ऽआहुतयोग्निरेवाग्निः सँव्वत्सरः सꣳस्था तद्वा ऽइदꣳ सर्व्वꣳ सँव्वत्सर ऽएव यदिदङ्किञ्च तस्मात्सौत्रामण्येजानः सर्व्वञ्जयति सर्व्वमवरुन्द्धे ॥ ३६ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ राज्ञोऽभिषेकादि ]

त्वष्टा हतपुत्रः । अभिचरणीयमपेन्द्रꣳ सोममाहरत्तस्येन्द्रो यज्ञवेशसङ्कृत्वा प्प्रासहा सोममपिबत्स व्विष्वङ् व्यार्च्छत्तस्य मुखात्प्राणेभ्यः श्रीयशसान्यूर्द्ध्वान्युदक्रामँस्तानि पशून्प्राविशँस्तस्मात्पशवो यशो यशो ह भवति य ऽएवं व्विद्वान्त्सौत्रामण्याभिषिच्च्यते ॥ १ ॥ ततोऽस्मा ऽएतमश्विनौ च सरस्वती च । यज्ञꣳ समभरन्त्सौत्रामणीम्भैषज्ज्याय तयैनमभ्यषिञ्चँस्ततो वै स देवानाꣳ श्रेष्ठोऽभवच्छ्रेष्ठः स्वानाम्भवति य ऽएनयाभिषिच्च्यते ॥२॥ कृष्णाजिनेऽभिषिञ्चति । यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैनमेतदभिषिञ्चति लोमतश्छन्दाꣳसि वै लोमानि च्छन्दः स्वेवैनमेतदभिषिञ्चति ॥ ३ ॥ आसन्द्यामभिषिञ्चति । आसन्दी सद्वै साम्म्राज्यꣳ साम्म्राज्येनैवैनꣳ साम्म्राज्यङ्गमयति ॥ ४ ॥ औदुम्बरी भवति । ऊर्ग्वा ऽउदुम्बर ऽऊर्ज्जैवाद्यभिषिच्च्यते जानुसम्मिता भवति जानुसम्मितो वा ऽअयँल्लोकोऽस्म्मा ऽउ वै लोकाय क्षत्त्रियोऽभिषिच्च्यते क्षत्त्रमु

वा ऽएष भवति यः सौत्रामण्याभिषिच्यते तस्मा-
ज्जानुसम्मितापरिमिता तिरश्ची ॥ ५ ॥ राष्ट्रं वा ऽआ-
सन्दी । अपरिमितसमृद्धमु वै राष्ट्रम्मुञ्जविवयना भवति
यज्ञिया हि मुञ्जा द्वा ऽउत्तरस्यां वेद्याम्पादौ भवतो द्वौ
दक्षिणस्यामयं वै लोक ऽउत्तरा वेदिर्दक्षिणा पितृलोकस्त-
देनमुभयोर्ल्लोकयोरध्यभिषिञ्चति ॥ ६ ॥ एतद्ध स्म वै
तद्विद्वानाह । गौरीवितिः शाक्त्यः क्षत्रमिवाह किल वय-
ममुष्मिँल्लोके भविता स्म ऽइति शश्वद्धास्मा ऽऋषभो
यज्ञतुरः प्रोवाच श्विक्नानाᳫं राजा ॥ ७ ॥ स ऽआस-
न्दीमास्तृणाति * । 'क्षत्र[1]स्य योनिरसि क्षत्रस्य नाभिर-
सी'ति क्षत्रस्य वा ऽएषा योनिः क्षत्रस्य नाभिः ॥८॥ अथै-
नाङ्कृष्णाजिनेनास्तृणाति † । 'मा[2] त्वा हिᳫंसीन्मा मा
हिᳫंसी'रिति यज्ञो वै कृष्णाजिनं यज्ञस्य चैवात्मनश्चा-
हिᳫंसायै ॥ ९ ॥ अथाधिरोहति । वारुण्यर्चा वरुणो वै
देवानाᳫं राजा स्वयैवैनमेतद्देवतयाभिषिञ्चति 'नि[3]षसाद
धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतु'रिति ॥१०॥
अथ सुवर्णरजतौ रुक्मौ ‡ व्युपास्यति । 'मृ[4]त्योः पाहि
विद्योत्पाही'ति वृष्टिर्वै विराट् तस्या ऽएते घोरे तन्वौ विद्युच्च

---

* का० श्रौ० सू० १९. ४. ७ ।

( १ ) शु० य० सं० २०. १ ।

† का० श्रौ० सू० १९. ४. ८ ।

( २ ) शु० य० सं० २०. १ । ( ३ ) शु० य० सं० २०. २ ।

‡ मण्डलाकारो भूषणविशेषो रुक्मः । ( म० भा० )

( ४ ) शु० य० सं० २०. २ ।

ह्रादुनिश्च ततः सुवर्ण्ण ऽएव रुक्क्मो विद्युतो रूपꣳ रजतो
ह्रादुनेस्ताभ्यामेवास्म्मै देवताभ्याꣳ शर्म्म यच्छति तस्मा-
त्सौत्रामण्ण्येजानस्यैताभ्यान्देवताभ्यान्न शङ्का भवत्यथो
य ऽएवमेतद्वेद ॥ ११ ॥ पशूनां वसयाभिषिञ्चति । श्रीर्वै
पशूनां वसा * श्रियैवैनमेतत्पशूनाꣳ रसेनाभिषिञ्चत्यथो
परमं वा ऽएतदन्नाद्यं यद्वसा परमेणैवैनमेतदन्नाद्येनाभि-
षिञ्चति ॥ १२ ॥ शफग्ग्रहा भवन्ति । शफैर्वै पशवः प्प्रति-
तिष्ठन्ति प्प्रतिष्ठामेवैनङ्गमयति त्रयस्त्रिꣳशद्ग्रहा भवन्ति
त्रयस्त्रिꣳशद्वै सर्वा देवताः सर्वाभिरेवैनमेतद्देवताभिरभि-
षिञ्चति जगतीभिर्ज्जुहोति जागता वै पशवो जगत्यैवास्म्मै
पशूनवरुन्द्धे षोडशभिर्ऋग्भिर्ज्जुहोति षोडशकला वै पशवोऽनु-
कलमेवास्मिञ्छ्रियन्दधाति ॥ १३ ॥ '[२]सीसेन तन्त्रम्मनसा
मनीषिण' ऽइति । द्वौ द्वौ† समासꣳ हुत्वा सते सꣳस्रवान्त्स-
मवनयत्यहोरात्राण्ण्येवैतदर्द्धमासान्मासानृतून्त्सँवत्सरे प्प्र-
तिष्ठापयति तानीमान्न्यहोरात्राण्ण्यर्द्धमासा मासा ऽऋतवः
सँवत्सरे प्प्रतिष्ठिताः ॥ १४ ॥ वैतसः सतो भवति । अप्प्सु-
योनिर्वै वेतस ऽआपो वै सर्वा देवताः सर्वाभिरेवैनमेतद्देवता-
भिरभिषिञ्चति ॥१५॥ सर्वसुरभ्युन्मर्द्दनम्भवति परमो वा
ऽएष गन्धो यत्सर्वसुरभ्युन्मर्द्दनङ्गन्धेनैवैनमेतदभिषिञ्चति
॥ १६ ॥ पुरस्तात्प्रत्यङ्ङभिषिञ्चति । पुरस्ताद्धि प्प्रत्यगन्न-
मद्यते शीर्षतः शीर्षतो ह्यन्नमद्यत ऽआ मुखादन्ववस्त्रावयति

* मांसपाकभाण्डे स्थितः स्नेहात्मको द्रवविशेषो वसाशब्देनोच्यते ।

† "द्वौ द्वौ हुत्वा शेषान्त्सते करोति" ( का० श्रौ० सू० १९. ४. १३ )

( १ ) 'ग' 'ज' पुस्तकयोः "दधति" इति । ( २ ) शु० य० सं० १९, ८० ।

मुखेन ह्यन्नमद्यते सर्वतः परिक्रामः सर्वाभ्य ऽएवास्मिन्नेतद्दिग्भ्योऽन्नाद्यन्दधाति तस्मात्सौत्रामण्येजानस्य सर्वासु दिक्ष्वन्नाद्यमवरुद्धम्भवत्यथो य ऽएवमेतद्वेद ॥ १७ ॥

आश्विनेन प्रथमेन यजुषाभिषिञ्चति । अथ सारस्वतेनाथैन्द्रेणैताभिरेवैनमेतद्देवताभिरभिषिञ्चति तः हैक ऽएताभिश्च देवताभिरभिषिञ्चन्ति भूर्भुवः स्वरित्येताभिरु च व्याहृतिभिरेता वै व्याहृतय ऽइदः सर्वन्तदेनमनेन सर्वेणाभिषिञ्चाम ऽइति न तथा कुर्यादेताभिरेवैनन्देवताभिरभिषिञ्चेदेता ऽउ ह्येव देवता इदः सर्वम् ॥ १८ ॥

पुरस्तात्स्विष्टकृतोऽभिषिञ्चति । क्षत्रं वै स्विष्टकृत्क्षत्रेणैवैनमेतदभिषिञ्चत्यन्तरा वनस्पतिञ्च स्विष्टकृतञ्चाभिषिञ्चति सोमो वै वनस्पतिरग्निः स्विष्टकृदग्नीषोमाभ्यामेवैनमेतत्परिगृह्याभिषिञ्चति तस्माद्ये चैतद्विदुर्ये च न त ऽआहुः क्षत्रियो वाव क्षत्रियस्याभिषेक्तेति ॥ १९ ॥

अथैनञ्जानुमात्रे धारयन्ति । अथ नाभिमात्रेऽथ मुखमात्र ऽएष्वेवास्मा ऽएतल्लोकेष्वायतनानि कल्पयत्यभिषेको वा ऽएष यद्वाजपेयमभिषेकः सौत्रामणी तद्यथैवादो वाजपेये यूपः रोहति तदेवैतद्रूपं क्रियते ॥ २० ॥ [अर्धः प्रपाठकः ॥५६॥] तदाहुः । प्रेव वा ऽएषोऽस्माल्लोकाच्च्यवते यः सौत्रामण्याभिषिच्यत ऽइति कृष्णाजिने प्रत्यवरोहति यज्ञो वै कृष्णाजिनं यज्ञ ऽएवान्ततः प्रतितिष्ठति ॥ २१ ॥ '(१)प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे' ऽइति । क्षत्र

(१) शु० य० सं० २०. १० ।

ऽएव राष्ट्रे प्प्रतितिष्ठति क्षत्राद्राष्ट्राद्दुप्प्रब्भ्रꣳशाय 'प्प्रत्यश्श्वेषु[1] प्प्रतितिष्ठामि गोषु'ति गोऽश्श्व ऽएव प्प्रतितिष्ठति गोऽश्श्वाद्दुप्प्रब्भ्रꣳशाय 'प्प्रत्यङ्गेषु[2] प्रतितिष्ठाम्म्यात्म'न्नित्यङ्गेष्ष्वेवात्मन्प्रतितिष्ठत्यङ्गेब्भ्य ऽआत्मनोऽप्प्रब्भ्रꣳशाय 'प्प्रति प्प्राणेषु[3] प्प्रतितिष्ठामि पुष्टे' ऽइति प्प्राणेष्ष्वेव पुष्टे प्प्रतितिष्ठति प्प्राणेब्भ्यः पुष्टाद्दुप्प्रब्भ्रꣳशाय 'प्प्रति द्यावापृथिव्व्योः[4] प्प्रतितिष्ठामि यज्ञ' ऽइति तदनयोर्द्यावापृथिव्व्योः प्प्रतितिष्ठति ययोरिदꣳ सर्व्वमधि ॥ २२ ॥ अथ साम गायति । क्षत्रं व्वै साम क्षत्रेणैवैनमेतदभिषिञ्चत्यथो साम्म्राज्यं व्वै साम साम्म्राज्येनैवैनꣳ साम्म्राज्यङ्गमयति सर्व्वेषां व्वा ऽएष व्वेदानाꣳ रसो यत्साम सर्व्वेषामेवैनमेतद्वेदानाꣳ रसेनाभिषिञ्चति ॥ २३ ॥ बृहत्याङ्गायति । बृहत्यां व्वा ऽअसावादित्यः श्रियाम्प्रतिष्ठायाम्प्रतिष्ठितस्तपति बृहत्यामेवैनमेतच्छ्रियाम्प्रतिष्ठायाम्प्रतिष्ठापयति ॥२४॥ ऐन्द्र्याम्बृहत्याङ्गायति *। ऐन्द्रो वा ऽएष यज्ञो यत्सौत्रामणीन्द्रायतन ऽएष ऽएतर्हि यो यजते स्व ऽएवैनमेतदायतनेऽभिषिञ्चति ॥ २५ ॥ अथ यस्म्मात्सꣳशानानि नाम । एतैर्व्वै सामभिर्द्देवा ऽइन्द्रमिन्द्रियाय व्वीर्य्याय समश्श्यँस्तथो ऽएवैतमृत्विजो यजमानमेतैरेव सामभिरिन्द्रियाय व्वीर्य्याय सꣳश्श्यन्ति सꣳश्रवसे विश्श्रवसे सत्य-

(१) शु० य० सं० २०. १० । (२) शु० य० सं० २०. १० । (३) शु० य० सं० २०. १० । (४) शु० य० सं० २०. १० ।

* का० श्रौ० सू० १९. ५. २ ।

इश्रवसे इश्रवस ऽइति सामानि भवन्त्येष्वेवैनमेतल्लोकेषु इश्रावयन्ति चतुर्न्निधनम्भवति चतस्रो वै दिशः सर्व्वास्वे- वैनमेतद्दिक्षु प्प्रतिष्ठापयन्ति सर्व्वे निधनमुपावयन्ति संवि- दाना ऽएवास्म्मिञ्छ्रियन्दधति ॥ २६ ॥ तदाहुः । यदेत- त्साम गीयतेऽथ क्कैतस्य साम्म्न ऽउक्क्थङ्क्का प्प्रतिष्ठा ऽवृद्धः हि तद्यत्स्तुतमननुशस्तमिति ॥ २७ ॥ त्रया देवा ऽएकादशेति । एतद्वा ऽएतस्य साम्म्न ऽउक्क्थमेषा प्प्रतिष्ठा ॥ २८ ॥ अथो 'त्रयाँ[1] देवा ऽएकादशे'ति । त्रयस्त्रिंशञ्जुहोति त्रया हि देवा ऽएकादश 'त्रयस्त्रिंऽ[2]- शाः सुराधस' ऽइति त्रयस्त्रिंशद्धि देवा 'बृहस्प्पतिपुरो[3]- हिता' ऽइति ब्ब्रह्म वै बृहस्प्पतिर्ब्ब्रह्मपुरोहिता ऽइत्त्येवैतदाह 'देवस्य[4] सवितुः सव' ऽइति देवेन सविञ्चा प्प्रसूता ऽइत्त्ये- वैतदाह 'देवा[5] देवैरवन्तु मे'ति देवा ह्येतन्देवैरभिषिञ्चन्ति ॥ २९ ॥ 'प्रथमा[6] द्वितीयै'रिति । प्प्रथमा ह्येतन्द्वितीयैर- भिषिञ्चन्ति 'द्वितीयाँस्[7]तृतीयै'रिति द्वितीया ह्येतन्तृतीयै- रभिषिञ्चन्ति 'तृतीयाः[8] सत्त्येने'ति तृतीया ह्येतः सत्त्ये- नाभिषिञ्चन्ति 'सत्त्यं[9] यज्ञेने'ति सत्त्यः ह्येतं यज्ञेना- भिषिञ्चति 'यज्ञो[10] यजुर्भि'रिति यज्ञो ह्येतं यजुर्भिर- भिषिञ्चति 'यजूं[11]षि सामभि'रिति यजूंषि ह्येतः साम-

---

(१) शु० य० सं० २०. ११। (२) शु० य० सं० २०. ११। (३) शु० य० सं० २०. ११। (४) शु० य० सं० २०. ११। (५) शु० य० सं० २०. ११। (६) शु० य० सं० २०. १२। (७) शु० य० सं० २०. १२। (८) शु० य० सं० २०. १२। (९) शु० य० सं० २०. १२। (१०) शु० य० सं० २०. १२। (११) शु० य० सं० २०. १२।

भिरभिषिञ्चन्ति 'सामान्यृग्भि'रिति सामानि ह्येतमृग्भिरभिषिञ्चन्त्यृ'चः पुरोऽनुवाक्याभि'रित्यृचो ह्येतम्पुरोऽनुवाक्याभिरभिषिञ्चन्ति 'पुरोऽनुवाक्या याज्याभि'रिति पुरोऽनुवाक्या ह्येतं याज्याभिरभिषिञ्चन्ति 'याज्या वषट्कारै'रिति याज्या ह्येतं वषट्कारैरभिषिञ्चन्ति 'वषट्कारा आहुतिभि'रिति वषट्कारा ह्येतमाहुतिभिरभिषिञ्चन्त्या'हुतयो मे कामान्त्समर्द्धयन्तु भूः स्वाहे'ति तदेनमेताभिर्देवताभिः परोऽवरमभिषिच्याथास्मा आहुतिभिः सर्वान्कामान्त्समर्द्धयत्यथर्त्विक्षूपहवमिष्ट्वा भक्षयत्यृतवो वा ऋत्विज ऋतुष्वेवैतदुपहवमिच्छते ॥ ३० ॥ स भक्षयति । 'लोमानि प्रयतिर्मम त्वङ्म आनतिरागतिः ॥ माꣳसम्म उपनतिर्वस्वस्थि मज्जा म आनति'रिति प्रैव वा एष लोकाꣳश्च देवताश्च विशति यः सौत्रामण्याभिषिच्यते तदेतदवान्तरामात्मानमुपह्वयते तथा कृत्स्न एव सर्वतनूः साङ्गः सम्भवति ॥ ३१ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इत्यष्टमोऽध्यायः ॥ ८ ॥



[ सौत्रामणीशेषः ]

एतस्माद्वै यज्ञात्पुरुषो जायते । स यद्ध वा अस्मिँल्लोके पुरुषोऽन्नमत्ति तदेनममुष्मिँल्लोके प्रत्यत्ति स

(१) शु० य० सं० २०. १२। (२) शु० य० सं० २०. १२। (३) शु० य० सं० २०. १२। (४) शु० य० सं० २०. १२। (५) शु० य० सं० २०. १२। (६) शु० य० सं० २०. १२। (७) शु० य० सं० २०. १३।

वा ऽएष परिस्रुतो यज्ञस्तायतेऽनाद्या वै ब्ब्राह्मणेन परिस्रुत्स ऽएतस्म्मादनाद्याज्जायते तद्ध हामुष्म्मिँल्लोकेऽन्नन्न प्प्रत्त्यत्ति तस्म्मादेष ब्ब्राह्मणयज्ञ ऽएव यत्सौत्रामणी ॥ १ ॥ तस्य लोमान्न्येव शष्प्पाणि । त्त्वक्तोक्क्मानि माᳬसँल्लाजा ऽअस्थि कारोतरो मज्जा मासरद्ध रसः परिस्रुन्नग्ग्नहुल्लोहितद्ध रेतः पयो मूत्रद्ध सुरोवद्ध्यं वल्कसम् ॥ २ ॥ हृदयमेवास्यैन्द्रः पुरोडाशः । यकृत्सावित्रः क्क्लोमा व्वारुणो मतस्न्ने ऽएवास्याश्श्वत्थश्च पात्रमौदुम्बरश्च पित्तन्नैयग्ग्रोधमान्त्राणि स्स्थाल्ल्यो गुदा ऽउपशयानि श्श्येनपत्त्रे प्प्लीहासन्दी नाभिः कुम्भो व्वनिष्ठुः प्लाशिः शतातृण्णा तद्यत्सा बहुधा व्वितृण्णा भवति तस्म्मात्प्लाशिर्ब्बहुधा व्विकृत्तो मुखद्ध सतञ्जिह्वा पवित्रञ्चप्प्यम्पायुर्व्वस्तिर्व्वालः ॥ ३ ॥ अङ्गान्न्येवास्याश्श्विनः पशुः । आत्मा सारस्वतो रूपमैन्द्र ऽऋषभस्तस्म्मादाहुर्ग्गावः पुरुषस्य रूपमित्त्यायुर्हिरण्यन्तच्छतमानम्भवति तस्म्माच्छतायुः पुरुषः ॥ ४ ॥ चक्षुषी ऽएवास्याश्श्विनौ ग्ग्रहौ । पक्ष्माणि गोधूमसक्तवश्च कुवलसक्तवश्च नासिके ऽएवास्य सारस्वतौ ग्ग्रहावथ यानि नासिकयोर्ल्लोमानि तान्न्युपवाकसक्तवश्च बदरसक्तवश्च श्श्रोत्रे ऽएवास्यैन्द्रौ ग्ग्रहावथ यानि कर्ण्णयोर्ल्लोमानि यानि च भ्भ्रुवोस्तानि यवसक्तवश्च कर्क्कन्धुसक्तवश्च ॥ ५ ॥ अथ यान्न्युपस्थे लोमानि । यानि चाधस्तात्तानि

( १ ) 'सर्जत्वक्त्रिफलाशुण्ठीपुनर्नवाचतुर्जातकपिप्पलीगजपिप्पलीवंशावकाबृहच्छत्राचित्रकेन्द्रवारुण्यश्वगन्धाधान्यकयवानीजीरकद्वयहरिद्राद्वयविरूढयवव्रीहय एकीकृता नग्नहुः' (म० भा०) ।

ऽवृकलोमान्यथ यान्युरसि लोमानि यानि च निकक्ष-
योस्तानि व्व्याघ्रलोमानि केशाश्च श्मश्रूणि च सिꣳ-
हलोमानि ॥ ६ ॥ त्रयः पशवो भवन्ति । त्रेधाविहितो
वा ऽअयम्पुरुषस्यात्मात्मानमेवास्य तै स्पृणोति यदुवाङ्ना-
भेस्तदाश्विनेन यदूर्द्ध्वन्नाभेरवाचीनꣳ शीर्ष्णस्तत्सारस्वतेन
शिर ऽऐन्द्रेण यथारूपमेव यथादेवतमात्मानम्मृत्यो स्पृत्वा-
मृतङ्कुरुते ॥ ७ ॥ त्रयः पुरोडाशा भवन्ति । त्रेधाविहितं वा
ऽइदम्पुरुषस्य व्वयो व्वय ऽएवास्य तै स्पृणोति पूर्व्ववयसमे-
वैन्द्रेण मद्ध्यमवयसꣳ सावित्रेणोत्तमवयसं व्वारुणेन यथा-
रूपमेव यथादेवतं व्वयो मृत्यो स्पृत्वामृतङ्कुरुते ॥ ८ ॥
षड्ग्रहा भवन्ति । षड्वा ऽइमे शीर्षन्प्राणाः प्प्राणानेवास्य
तै स्पृणोति चक्षुषी ऽएवाश्विनाभ्यान्नासिके सारस्व-
ताभ्याꣳ श्रोत्रे ऽऐन्द्राभ्यां १यथारूपमेव यथादेवत-
म्प्राणान्म्मृत्यो स्पृत्वामृतान्कुरुते ॥ ९ ॥ सन्तता याज्या-
पुरोऽनुवाक्क्या भवन्ति । समानदेवत्याः प्प्राणानाꣳ
सन्तत्या ऽअव्व्यवच्छेदाय सर्व्वाः पुरोऽनुवाक्क्या भवन्ति
सर्व्वा याज्यास्तस्मात्प्राणाः सर्व्वे पराञ्चः सर्व्वे प्प्रत्यञ्चः
सर्व्वाः प्प्रथमा भवन्ति सर्व्वा मद्ध्यमाः सर्व्वा ऽउत्तमास्त-
स्म्मात्प्राणाः सर्व्वे प्प्रथमाः सर्व्वे मद्ध्यमाः सर्व्व ऽउत्तमाः
सर्व्वेषाङ्ग्रहाणान्द्वे याज्यापुरोऽनुवाक्क्ये भवतः प्प्राणो-
दानयोस्तद्रूपम्प्राणोदानावेवावरुन्द्धे तस्म्मात्सर्व्वे प्प्राणाः
प्प्राणोदानयोरेव प्प्रतिष्ठिताः ॥ १० ॥ स वा एष ऽआ-

(१) ''मात्मानम्मृत्यो स्पृत्वामृतङ्कुरुते'' इति 'ग' 'ज' पुस्तकयोः ।

त्मैव यत्सौत्रामणी । मन ऽएव प्प्रत्यक्षाद्वाग्ग्यजमानस्त-
स्यात्मैव व्वेदिः प्प्रजोत्तरवेदिः पशवो बर्हिरङ्गान्न्यृत्त्विजो-
ऽस्थीनीद्ध्म ऽआज्यम्मज्जा मुखमग्निरन्नमाहुतिर्व्वयः
सᳬस्था तस्म्मात्सौत्रामण्ण्येजानो व्वय ऽउपगच्छति ॥११॥
तद्यौ ह वा ऽइमौ पुरुषाविवाक्ष्योः । एतावेवाश्विनावथ
यत्कृष्णणन्तत्सारस्वतं ग्यच्छुक्कन्तदैन्द्रन्तद्यदाश्विने पशौ
सत्त्यथैता देवताः सह यजत्येतान्न्येवैतत्साद्धॅङ्कृत्त्वात्मन्धत्ते
॥ १२ ॥ मन ऽएवेन्द्रः । व्वाक्क्सरस्वती श्श्रोत्रे ऽअश्विनौ
यद्वै मनसा द्ध्यायति तद्वाचा वदति यद्वाचा व्वदति
तत्कर्ण्णाब्भ्याᳬ शृणोति तद्यत्सारस्वते पशौ सत्त्यथैता
देवताः सह यजत्येतान्न्येवैतत्साद्धॅङ्कृत्वात्मन्धत्ते ॥ १३ ॥
प्राण ऽएवेन्द्रः । जिह्वा सरस्वती नासिके ऽअश्विनौ
यद्वै प्प्राणेनान्नमात्मन्न्प्रणयते तत्प्राणस्य प्प्राणत्त्वञ्जिह्व्वया
वा ऽअन्नस्य रसं व्विजानाति नासिके ऽउ वै प्प्राणस्य
पन्थास्तद्यदैन्द्रे पशौ सत्त्यथैता देवताः सह यजत्येता-
न्न्येवैतत्साद्धॅङ्कृत्वात्मन्धत्ते ॥ १४ ॥ हृदयमेवेन्द्रः । यकृ-
त्सविता क्क्लोमा व्वरुणस्तद्यदैन्द्रे पुरोडाशे सत्त्यथैता
देवताः सह यजत्येताञ्ज्येवैतत्साद्धॅङ्कृत्वात्मन्धत्ते ॥ १५ ॥
प्राण ऽएव सविता । व्व्यानो व्वरुणः शिश्नमिन्द्रो यद्वै
प्प्राणेनान्नमत्ति तद्व्यानेन व्व्यनिति शिश्नेन वा ऽअन्नस्य
रसᳬ रेतः सिञ्चति तद्यत्सावित्रे पुरोडाशे सत्त्यथैता
देवताः सह यजत्येताञ्ज्येवैतत्साद्धॅङ्कृत्वात्मन्धत्ते ॥ १६ ॥
योनिरेव व्वरुणः । रेत ऽइन्द्रः सवितैव रेतसः प्प्रजनयिता

तद्यद्वारुणे पुरोडाशे सत्यथैता देवताः सह यजत्येताभ्ये-वैतत्साद्धँ कृत्वात्मन्धत्ते स य ऽएवमेतद्वेदैता ऽएव देवता अनुसम्भवत्येता देवता ऽअनु प्प्रजायत ऽआ प्प्रजया पशुभिः प्प्यायते प्प्रत्यस्मिँमँल्लोके तिष्ठत्त्यभि स्वर्ग्गँल्लो-कञ्जयति य ऽएवं विद्वान्त्सौत्रामण्ण्या यजते यो वैत-देवं वेद ॥ १७ ॥

नवमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अवभृथेष्टिः ]

अवभृथमिष्ट्वा यन्ति । अवभृथं वै सोमनेष्ट्वा यन्ति सोम ऽएष यत्सौत्रामणी ॥ १ ॥ '[1]यद्देवा देवहेडन'मिति । देवकृतादेवैनमेनसो मुञ्चति '[2]यदि दिवा यदि नक्त'मिति यद्देवाहोरात्राभ्यामेनः करोति तस्म्मादेवैनम्मुञ्चति '[3]यदि जाग्ग्रद्यदि स्वप्न' ऽइति मनुष्ष्या वै जागरितम्पितरः सुप्तम्मनुष्ष्यकिल्विषाच्चैवैनम्पितृकिल्विषाच्च मुञ्चति ॥ २ ॥ '[4]यद्ग्ग्रामे यदरण्ण्य' ऽइति । ग्ग्रामे वा ह्यरण्ण्ये वैनः क्रियते तस्म्मादेवैनम्मुञ्चति '[5]यत्सभाया'मिति सभ्या-देवैनमेनसो मुञ्चति '[6]यदिन्द्रिय' ऽइति देवादेवैनमेनसो मुञ्चति '[7]यच्छूद्रे यदर्य्ये यदेनश्चकृमा वयं यदेकस्याधि धर्म्मणि तस्यावयजनमसी'ति सर्वस्म्मादेवैनमेतस्म्मादे-नसो मुञ्चति ॥ ३ ॥ '[8]यदापो ऽअघ्न्या ऽइति । वरुणेति

(१) शु० य० सं० २०. १४ । (२) शु० य० सं० २०. १५ । (३) शु० य० सं० २०. १६ । (४) शु० य० सं० २०. १७ । (५) शु० य० सं० २०. १७ । (६) शु० य० सं० २०. १७ । (७) शु० य० सं० २०. १७ । (८) शु० य० सं० २०. १८ ।

शपामहे ततो वरुण नो मुञ्चे'ति वरुण्ययादेवैनमेनसो मुञ्चत्य-'वभृथ[1] निचुम्पुण निचेरुरसि निचुम्पुण' ऽइति यो ह वा ऽअ-यमपामावर्त्तः स हावभृथः स हैष वरुणस्य पुत्रो वा भ्राता वा तमेवैतत्स्तौत्य'व[2] देवैर्देवकृतमेनो यक्षी'ति देवकृतमेवैनो-ऽवयजते'ऽव मर्त्यैर्[3]मर्त्यकृत'मिति मर्त्यकृतमेवैनोऽवयजते 'पुरुराव्णो[4] देव रिषस्पाही'ति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्येवैतदाह ॥ ४ ॥ 'समुद्रे[5] ते हृदयमप्स्वन्त'रिति । आपो वै समुद्रो रसो वा ऽआपस्तदेनमेतेन रसेन सꣳसृजति 'सन्त्वा[6] विशन्त्वोषधीरुताप' ऽइति तदेन-मेतेनोभयेन रसेन सꣳसृजति यश्चौषधिषु यश्चाप्सु द्वौ विक्रमा ऽउदङ्ङुत्क्रामत्येतावती वै मनुष्ये जूति-र्यावान्विक्रमस्तद्यावत्येवास्मिञ्जूतिस्तयैव पाप्मानं विज-हाति ॥ ५ ॥ 'सुमित्रिया[7] न ऽआप ऽओषधयः सन्त्वि'ति । अञ्जलिनाप ऽउपाचति वज्रो वा ऽआपो वज्रेणैवैतन्मि-त्रधेयं कुरुते 'दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्म' ऽइति यामस्य दिशन्द्वेष्यः स्यात्तान्दि-शम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ ६ ॥ 'द्रुपदा[8]दिव मुमुचानः । स्विन्नः स्नातो मलादिव ॥ पूतम्पवित्रेणेवाज्य-मापः शुन्धन्तु मैनस' ऽइति वासोऽपप्लावयति यथे-षीकाम्मुञ्जाद्विवृहेदेवमेनꣳ सर्वस्मात्पाप्मनो विवृहति

(१) शु० य० सं० २०. १८। (२) शु० य० सं० २० १८। (३) शु० य० सं० २०. १८। (४) शु० य० २०. १८। (५) शु० य० सं० २०. १९. (६) शु० य० सं० २०. १९। (७) शु० य० सं० २०. १९। (८) शु० य० सं० २०. १९। (९) शु० य० सं० २०. २०।

स्नाति तम ऽएवापहते ॥ ७ ॥ 'उद्वयन्तमसस्परी'ति । पाप्मा वै तमः पाप्मानमेव तमोऽपहते 'स्वः पश्यन्त ऽउत्तर'मित्ययं वै लोकोऽथ ऽउत्तरोऽस्मिन्नेव लोके प्रतितिष्ठति 'देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तम'मिति स्वर्गो वै लोकः सूर्यो ज्योतिरुत्तमꣳ स्वर्ग ऽएव लोकेऽन्ततः प्रतितिष्ठत्यनपेक्षमेत्याहवनीयमुपतिष्ठते ॥ ८ ॥ 'अपो ऽअद्यान्वचारिष'मिति । अपामेव रसमवरुन्द्धे 'रसेन समसृक्ष्महीत्यपामेव रसमात्मन्धत्ते 'पयस्वानग्न ऽआगमन्तम्मा सꣳसृज वर्चसा प्रजया च धनेन चे'त्याशिषमेवैतदाशास्ते ॥ ९ ॥ 'एधोऽस्येधिषीमही'ति समिधमादत्ते * । एधो ह वा ऽअग्नेः समि'त्समिदसि तेजोऽसि तेजो मयि धेही'त्याहवनीये समिधमभ्यादधात्यग्निमेवैतया समिन्द्धे स ऽएनꣳ समिद्धस्तेजसा समिन्द्धे ॥ १० ॥ आदित्यञ्चरुं स्वक्ष्यमाणो निर्वपति । आदित्यमीजान ऽइयं वा अदितिरस्यामेव यज्ञन्तनुतेऽस्यामिष्ट्वा प्रतितिष्ठति धेनुर्दक्षिणेयं वै धेनुरिमामेव सर्वान्कामान्दुहे वत्सम्पूर्वस्यान्ददाति मातरमुत्तरस्यां स्यदा वै वत्सो मातरन्धयत्यथ सा प्रत्ता दुहे प्रत्तामेवेमाꣳ सर्वान्कामान्दुहे ॥ ११ ॥ तदाहुः । प्रेव वा ऽएषोऽस्मा-

---

(१) शु॰ य॰ सं॰ २०. २१। (२) शु॰ य॰ सं॰ २०. २१। (३) शु॰ य॰ सं॰ २०. २१। (४) शु॰ य॰ सं॰ २०. २२। (५) शु॰ य॰ सं॰ २०. २२। (६) शु॰ य॰ सं॰ २०. २२। (७) शु॰ य॰ सं॰ २०. २३। (८) शु॰ य॰ सं॰ २०. २३।

* का॰ श्रौ॰ सू॰ १९. ५. १९।

ल्लोकाच्च्यवते यो॒ऽपो॑ऽवभृ॒थम॒भ्यवै॑ती॒त्यवभृ॒थादु॒दे॒त्य मैत्रा-वरुण्य॒या पय॒स्यया यजतेऽयं वै॒ लो॒को मि॒त्रो॒ऽसौ व॒रुणो य॒दे॒वेद॒मन्तरेण त॒त्पय॒स्या। तद्य॒न्मैत्रावरुण्य॒या पय॒-स्यया य॒जत ऽए॒ष्वे॒वैत॒ल्लोके॒षु प्प्र॒तितिष्ठ॒ति प्प्राणो वै॒ मि॒त्रो॒ऽपानो व॒रुणो॒ऽन्नमेव॒ पय॒स्या तद्य॒न्मैत्रावरुण्य॒या पय॒स्यया य॒जते प्प्राण॒ ऽए॒वान्नाद्येऽन्ततः॒ प्र॒तितिष्ठ॒ति ॥१२॥

नवमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ सौत्रामण्यर्थवादः ]

दु॒ष्टरी॑तु॒र्ह पौ॒ᳫं॒साय॒नः । द॒शपु॒रुष॒ᳫं॒ राज्या॒दु॒परु॒द्ध ऽआस रे॒वो॒त्तरसमु ह पाटव॒श्चा॒क्रᳫं॒ स्थपति॒ᳫं॒ सृ॒ञ्जया ऽअ॒परुरुधुः ॥ १ ॥ स॒ हो॒वाच । दुष्ट॒रीतु॒म्पौ॒ᳫं॒साय॒नᳫं॒ सौत्रामण्य॒या त्वा यजयानि य॒दि॒द॒ᳫं॒ सृ॒ञ्जयेषु राष्ट्र॒न्त-त्व॒यि धास्यामी॒ति तथे॒ति त॒यैनमयाजयत् ॥ २ ॥ त॒दु ह ब॒ल्हिकः॒ प्प्रातिपीय॒ः शुश्रा॒व । कौरव्यो॒ रा॒जा यो॒ ह वा ऽअय॒न्दुष्ट॒रीतुः पौ॒ᳫं॒साय॒नो दशपुरुष॒ᳫं॒ राज्यादुप-रुद्धो॒ऽभूत्तमय॒श्चाक्र स्थप॒तिः सौत्रामण्य॒या यजयिष्यति य॒दि॒द॒ᳫं॒ सृ॒ञ्जयेषु राष्ट्र॒न्तद्धा॒स्मिन्धास्यती॒ति ॥ ३ ॥ स॒ होवाच । तन्न्वा॒ ऽअहन्तं वे॒दि॒ष्यामि य॒दि स त॒स्मि॒-न्रा॒ष्ट्र॒न्धास्य॒ति बहिर्द्धा वैन॒ᳫं॒ राष्ट्रा॒द्धास्य॒ती॒ति स ऽआ॒जगाम य॒स्यां वे॒लाया॒ङ्ग्रहा गृह्णन्ते ॥ ४ ॥ स॒ होवाच । स्थ॒पते चाक्र॒ नाहव॒नीये सु॒रा हो॒तव्ये॒त्या-

हुन्नान्यत्राहवनीयाद्यद्याहवनीये सुराᳫं होष्यसि पापवस्यसङ्करिष्यसि जामि यज्ञस्य यद्यन्न्यत्राहवनीयाद्बहिर्द्धैनᳪं राष्ट्राद्धास्यसि नैनᳪं राष्ट्रे धास्यसि नास्मिन्न्राष्ट्रन्धास्यसीति ॥ ५ ॥ स होवाच। नाहवनीये सुराᳫं होष्यामि नान्न्यत्राहवनीयान्न पापवस्यसङ्करिष्यामि न जामि यज्ञस्य नैनम्बहिर्द्धा राष्ट्राद्धास्यामि राष्ट्रऽएनन्धास्यामि राष्ट्रमस्मिन्धास्यामीति ॥ ६ ॥ स होवाच। कथᳪं हि करिष्यसी३ऽइति स हैतदुवाचासुरेषु वा ऽएषोऽग्ग्रे यज्ञ आसीत्सौत्रामणी स देवानुपप्रैत्सोऽप ऽआगच्छत्तमापᳬ प्रत्यनन्दँस्तस्माद्‌ श्रेयाᳫंसमागतम्प्रत्येव नन्दन्ति तᳪं होचुरेह्येव भगव ऽइति ॥ ७ ॥ स होवाच। बिभेमि वै प्प्रणयत मेति कस्माद्भगवो बिभेषीत्त्यसुरेब्भ्य ऽइति तथेति तमापᳬ प्प्राणयँस्तस्माद्यो व्वधत्रो भवति स बिब्भ्यतम्प्रणयति यद्वापᳬ प्प्राणयँस्तस्माद्वापᳬ प्प्रणीतास्तत्प्रणीतानाम्प्रणीतात्त्वम्प्रति ह तिष्ठति य ऽएवमेतत्प्रणीतानाम्प्रणीतात्त्वं व्वेद ॥ ८ ॥ तदिष्ट्वाᳬ प्प्रयाजा ऽआसुᳬ। अपरूर्ग्ग्निकृतमथासुरा ऽअन्न्वाजग्ग्मुस्ते देवाᳬ परुर्षग्ग्निनैवासुरान्त्सपत्नान्भ्रातृव्व्यान्न्यज्ञादन्तरायँस्तथो ऽएवैष ऽएतत्परुर्षग्ग्निनैव द्विषन्तम्भ्रातृव्व्यं रुयज्ञादन्तरेति ॥ ९ ॥ देवयोनिर्व्वा ऽएष यदाहवनीयᳬ। तस्यैतावमृतपक्षौ यावेतावभितोऽग्ग्नी तद्यदाहवनीये यज्ञन्तन्न्वते देवयोनावेवैतद्देवेब्भ्यो यज्ञन्तन्न्वत ऽउप हैनम्पुनरुर्यज्ञो नमति नास्माद्यज्ञो

ऽव्यवच्छिद्यते य ऽएवमेतद्वेद यस्य वैवं विदुष ऽएतत्कर्म्म क्रियते ॥ १० ॥ उत्तरेऽग्नौ पयोग्रहाञ्जुहोति । उत्तरेऽग्नौ पशूञ्छ्रपयन्ति पशूनेव तन्मर्त्त्यान्त्सतोऽमृतयोनौ दधाति मर्त्त्यान्त्सतोऽमृतयोनेः प्रजनयत्यप ह वै पशूनाम्पुनर्म्मृत्युञ्जयति नास्म्माद्यज्ञो ऽव्यवच्छिद्यते य ऽएवमेतद्वेद यस्य वैवं विदुष ऽएतत्कर्म्म क्रियते ॥ ११ ॥ दक्षिणेऽग्नौ सुराग्रहाञ्जुहोति । दक्षिणेऽग्नौ पावयन्ति पवित्राभिस्त्रिषंयुक्ताभिः पितॄनेव तन्मर्त्त्यान्त्सतोऽमृतयोनौ दधाति मर्त्त्यान्त्सतोऽमृतयोनेः प्रजनयत्यप ह वै पितॄणाम्पुनर्म्मृत्युञ्जयति नास्म्माद्यज्ञो ऽव्यवच्छिद्यते य ऽएवमेतद्वेद यस्य वैवं विदुष ऽएतत्कर्म्म क्रियते ॥ १२ ॥ तद्यदेतावग्नी ऽआहवनीयाद्विह्रियेते । तेनाहवनीयावथ यदाहवनीयम्पुनर्न्नाङ्नुवाते तेनानाहवनीयौ तेनोभौ होमा ऽउपाप्नोति यश्चाहवनीये यश्चानाहवनीये यच्च हुतं यच्चाहुतम्पुनर्हायमित्त्वोवाच न तदस्ति यत्सृञ्जयानाᳯँ राष्ट्रन्दुष्टरीतोस्तदद्य तथायश्चाक्र स्थपतिर्य्यज्ञेऽकरिति ॥१३॥ उत्तरेऽग्नौ पशुभिः पुरोडाशैः पयोग्रहैरिति चरन्ति । यदु चान्यत्तेन देवानेव तद्देवलोके प्रीणाति त ऽएनम्प्रीताः प्रीणन्त्यथो देवलोकमेव जयति ॥ १४ ॥ दक्षिणेऽग्नौ सुराग्रहाञ्जुहोति । दक्षिणेऽग्नौ पावयन्ति पवित्राभिस्त्रिषंयुक्ताभिः पितॄनेव तत्पितृलोके प्रीणाति त ऽएनम्प्रीताः प्रीणन्त्यथो पितृलोकमेव जयति ॥ १५ ॥ स वा ऽएष आत्मैव यत्सौत्रामणी । तस्म्मात्सा निरुक्ता निरुक्तो ह्यात्मा

लोको वयोधास्तस्मात्सोऽनिरुक्तोऽनिरुक्तो हि लोक ऽआत्मा वै यज्ञस्य सौत्रामणी बाहू ऽऐन्द्रश्च वयोधाश्च तद्यदेतावभितः पशू भवतस्तस्मादिमावात्मानमभितो बाहू यथो वै पशुरेवं यूपस्तद्यदेतᳪ सौत्रामणिकं यूपमेतौ यूपावभितो भवतस्तस्मादिमावात्मानमभितो बाहू ॥ १६ ॥

नवमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ११२ ॥

इति नवमोऽध्यायः ॥ ९ ॥

मध्यमनाम द्वादशं काण्डं समाप्तम्* ॥ १२ ॥



* अस्मिन्काण्डे कण्डिकासंख्या ४५९ ।

# अथाश्वमेधनाम त्रयोदशं काण्डम्



[ अस्मिन्काण्डे प्रतिपाद्या विषयाः—अश्वमेधः, तद्गतं प्रायश्चित्तम्, पुरुषमेधः, सर्वमेधः, दशरात्रः, पितृमेधः ]

[ ब्रह्मौदनपाकः ]

॥ ओ३म् ॥* ब्रह्मौदनम्पचति । रेत ऽएव तद्धत्ते यदाज्यमुच्छिष्यते तेन रशनामभ्यज्याद्त्ते तेजो वा ऽआज्यम्प्राजापत्योऽश्वः प्रजापतिमेव तेजसा समर्द्धयत्यपूतो वा ऽएषोऽमेध्यो यदश्वः ॥ १ ॥ दर्भमयी रशना भवति । पवित्रं वै दर्भाः पुनात्येवैनम्पूतमेवैनम्मेध्यमालभते ॥ २ ॥ अश्वस्य वा ऽआलब्धस्य । रेत ऽउदक्रामत्तत्सुवर्णं हिरण्यमभवद्यत्सुवर्णं हिरण्यन्ददात्यश्वमेव रेतसा समर्द्धयति ॥ ३ ॥ † प्रजापतिर्यज्ञमसृजत । तस्य महिमापाक्रामत्स महार्त्विजः प्राविशत्तम्महर्त्विग्भिरन्वैच्छत्तम्महर्त्विग्भिरन्वविन्दद्यन्महार्त्विजो ब्रह्मौदनम्प्राश्नन्ति महिमानमेव तद्यज्ञस्य यजमानोऽवरुन्द्धे ब्रह्मौदने सुवर्णं हिरण्यन्ददाति रेतो वा ऽओदनो रेतो हिरण्यं रेतसैवास्मिँस्तद्रेतो दधाति शतमानम्भवति शतायुर्वै पुरुषः शतेन्द्रिय आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते चतुष्टयीरपो

---

* ब्राह्मणेभ्य ऋत्विग्भ्यो देय ओदनः ब्रह्मौदनः ।

† अत्र शतम् ६४०० ।

( १ ) 'क' इति 'ज' पुस्तके ।

वसतीवरीर्म्मध्यमायाह्ने गृह्णाति ता दिग्भ्यः समाहृता भवन्ति दिक्षु वा ऽअन्नमन्नमापोऽन्नेनैवास्मा ऽअन्नमवरुन्द्धे ॥ ४ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अश्वस्य बन्धनप्रोक्षणादि ]

ऽऋद्धम्मु वा ऽएतद्यज्ञस्य । यदयजुष्केण क्रियत 'ऽइमा-मगृभ्णन्रशनामृतस्ये'[1]त्यश्वाभिधानीमादत्ते यजुष्कृत्यै यज्ञस्य समृद्ध्यै द्वादशारत्निर्भवति द्वादश मासाः सँवत्सरः सँवत्सरमेव यज्ञमाप्नोति ॥ १ ॥ तदाहुः । द्वादशारत्नी रशना कार्य्या३ त्रयोदशारत्नी३रित्यृषभो वा ऽएष ऽऋतूनां यत्सँवत्सरस्तस्य त्रयोदशो मासो विष्टप वृषभ ऽएष यज्ञानां यदश्वमेधो यथा वा ऽऋषभस्य विष्टपमेवमेतस्य विष्टपन्त्रयोदशमरत्निः रशनायामुपाद ध्यात्तद्यथर्षभस्य* विष्टपः संस्क्रियते तादृक्तत् ॥ २ ॥ 'अभिधा ऽअसी'[2]ति । तस्मादश्वमेधयाजी सर्व्वा दिशोऽभिजयति 'भुवनमसी'[3]ति भुवनन्तज्जयति 'यन्तासि धर्त्ते'[4]ति यन्तारमेवैनन्धर्त्तारङ्करोति' 'स त्वमग्निं वैश्वानर'[5]मित्यग्निमेवैनं वैश्वानरङ्गमयति 'सप्प्रथसङ्गच्छे'[6]ति प्प्रजयैवैनम्पशुभिः प्प्रथयति 'स्वाहाकृत' ऽइति वषट्कार

(१) शु० य० सं० २२. २ ।

* 'ऽथ ऽऋषभस्य' इति 'ग' 'ज' पुस्तकयोः ।

(२) शु० य० सं० २२. ३ । (३) शु० य० सं० २२. ३ । (४) शु० य० सं० २२. ३ । (५) शु० य० सं० २२. ३ । (६) शु० य० सं० २२. ३ ।
(७) शु० य० सं० २२. ३ ।

ऽएवास्यैष 'स्वगा[1] त्वा देवेब्भ्य' ऽइति देवेब्भ्य ऽएवै-
नᳫं स्वगा करोति 'प्प्रजापतय[2]' ऽइति प्प्राजापत्त्योऽश्श्वः
स्वयैवैनन्देवतया समर्द्धयति ॥ ३ ॥ ईश्श्वरो वा ऽएषः ।
आर्त्तिमार्त्तोर्य्यो ब्ब्रह्मणे देवेब्भ्योऽप्प्रतिप्प्रोच्च्याश्श्वम्ब-
द्ध्नाति 'ब्ब्रह्मन्नश्श्वम्भन्त्स्यामि[3] देवेब्भ्यः प्प्रजापतये तेन
राद्ध्यास'मिति ब्ब्रह्माणमामन्त्रयते ब्ब्रह्मण ऽएवैनम्प्रति-
प्प्रोच्च्य बद्ध्नाति नार्त्तिमार्च्छति 'तम्बधान[4] देवेब्भ्यः
प्प्रजापतये तेन राद्ध्नुही'ति ब्ब्रह्मा प्प्रसौति स्वयैवैनन्देवतया
समर्द्धयत्त्यथ प्प्रोक्षत्त्यसावेव बन्धुः ॥ ४ ॥ स प्प्रोक्षति ।
'प्प्रजापतये[5] त्वा जुष्टम्प्रोक्षामी'ति प्प्रजापतिर्व्वै देवानां व्वीर्य्य-
वत्तमो व्वीर्य्यमेवास्मिन्दधाति तस्मादश्श्वः पशूनां व्वीर्य्य-
वत्तमः ॥५॥ 'इन्द्राग्निब्भ्यान्त्वा[6] जुष्टम्प्रोक्षामी'ति । इन्द्राग्नी
वै देवानामोजस्वितमा ऽओज ऽएवास्मिन्दधाति तस्मा-
दश्श्वः पशूनामोजस्वितमः ॥ ६ ॥ 'वायवे[7] त्वा जुष्टम्प्रो-
क्षामी'ति । वायुर्व्वै देवानामाशिष्ठो जवमेवास्मिन्दधाति
तस्मादश्श्वः पशूनामाशिष्ठः ॥ ७ ॥ 'विश्श्वेब्भ्यस्त्वा[8]
देवेब्भ्यो जुष्टम्प्रोक्षामी'ति । विश्श्वे वै देवा देवानां
यशस्वितमा यश ऽएवास्मिन्दधाति तस्मादश्श्वः पशूनां
यशस्वितमः 'सर्व्वेब्भ्यस्त्वा[9] देवेब्भ्यो जुष्टम्प्रोक्षामी'ति
॥ ८ ॥ तदाहुः । यत्प्राजापत्त्योऽश्श्वोऽथ कथाप्प्यन्न्याब्भ्यो

(१) शु० य० सं० २२. ४। (२) शु० य० सं० २२. ४। (३) शु० य० सं० २२. ४। (४) शु० य० सं० २२. ४। (५) शु० य० सं० २२. ५। (६) शु० य० सं० २२. ५। (७) शु० य० सं० २२. ५। (८) शु० य० सं० २२. ५। (९) शु० य० सं० २२. ५।

देवताभ्यः प्रोक्षतीति सर्वा वै देवता ऽअश्वमेधेऽन्वायत्ता यदाह सर्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामीति सर्वा ऽएवा-स्मिन्देवता ऽअन्वायातयति तस्मादश्वमेधे सर्वा देवता ऽअन्वायत्ताः पाप्मा वा ऽएतम्भ्रातृव्य ऽईप्सति योऽ-श्वमेधेन यजते वज्रोऽश्वः 'परो मर्त्तः परः श्वे'ति श्वानञ्चतुरक्षः हत्वाधस्पदमश्वस्योपप्लावयति वज्रेणै-वैनमवक्रामति नैनम्पाप्मा भ्रातृव्य ऽआप्नोति ॥ ९ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ सहस्रमाहुतयः ]

यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशो स्कन्दति यन्निक्तमनालब्धमुत्सृजन्ति यत्स्तोकीया जुहोति सर्वहुतमेवैनञ्जुहोत्यस्कन्दायास्कन्नः हि तद्यद्धुतस्य स्क-न्दति सहस्रञ्जुहोति सहस्रसम्मितो वै स्वर्गो लोकः स्वर्गस्य लोकस्याभिजित्यै ॥ १ ॥ तदाहुः । यन्मिता जुहुयात्परिमितमवरुन्धीतेत्यमिता जुहोत्यपरिमितस्यैवा-वरुद्ध्या ऽउवाच ह प्रजापति स्तोकीयासु वा ऽअहम-श्वमेधः सःस्थापयामि तेन सःस्थितेनैवात ऽऊर्द्ध्व-ञ्चरामीति ॥ २ ॥ 'अग्नये[1] स्वाहे'ति । अग्नय ऽएवैनञ्जु-होति 'सोमाय[2] स्वाहे'ति सोमायैवैनञ्जुहो'[3]त्यपाम्मोदाय[4]

---

( १ ) शु० य० सं० २२. ५ । ( २ ) शु० य० सं० २२. ६ । ( ३ ) शु० य० सं० २२. ६ । ( ४ ) शु० य० सं० २२. ६ ।

स्वाहे'त्यग्नय ऽएवैनञ्जुहोति 'सवित्रे[1] स्वाहे'ति सवित्र ऽएवैनञ्जुहोति 'वायवे[2] स्वाहे'ति वायव ऽएवैनञ्जुहोति 'विष्णवे[3] स्वाहे'ति विष्णव ऽएवैनञ्जुहोती'न्द्राय[4] स्वाहे'-तीन्द्रायैवैनञ्जुहोति 'बृहस्पतये[5] स्वाहे'ति बृहस्पतय ऽएवै-नञ्जुहोति 'मित्राय[6] स्वाहे'ति मित्रायैवैनञ्जुहोति 'वरुणाय[7] स्वाहे'ति वरुणायैवैनञ्जुहोत्येतावन्तो वै सर्वे देवास्तेभ्य ऽएवैनञ्जुहोति पराचीर्ज्जुहोति पराङिव वै स्वर्ग्गो लोकः स्वर्ग्गस्य लोकस्याभिजित्यै ॥ ३ ॥ ईश्वरो वा ऽएषः । पराङ् प्रदघोर्यः पराचीराहुतीर्ज्जुहोति पुनरावर्त्ततेऽस्मि-न्नेव लोके प्रतितिष्ठत्येताᳬं ह वाव स यज्ञस्य सᳬंस्थिति-मुवाचास्कन्दायास्कन्नᳬं हि तद्यद्धुतस्य स्कन्दति ॥ ४ ॥ यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशो स्कन्दति यम्प्रोक्षितमनालब्धमुत्सृजन्ति यद्रूपाणि जुहोति सर्व-हुतमेवैनञ्जुहोत्यस्कन्दायास्कन्नᳬं हि तद्यद्धुतस्य स्कन्दति 'हिङ्काराय[8] स्वाहा हिङ्कृताय स्वाहे'त्येतानि वा ऽअश्वस्य रूपाणि तान्येवावरुन्द्धे ॥ ५ ॥ तदाहुः । अनाहुतिर्वै रूपाणि नैता होतव्या ऽइत्यथो खल्वाहुरत्र वा ऽअश्व-मेधः सन्तिष्ठते यद्रूपाणि जुहोति होतव्या ऽएवेति बहिर्द्धा वा ऽएतमायतनात्करोति भ्रातृव्यमस्मै जन-यति यस्यानायतनेऽन्यत्राग्नेराहुतीर्ज्जुहोति ॥ ६ ॥ सावित्र्या

(१) शु॰ य॰ सं॰ २२. ६ । (२) शु॰ य॰ सं॰ २२. ६ । (३) शु॰ य॰ सं॰ २२. ६ । (४) शु॰ य॰ सं॰ २२. ६ । (५) शु॰ य॰ सं २२. ६ । (६) शु॰ य॰ सं॰ २२. ६ ।
(७) शु॰ य॰ सं॰ २२. ६ । (८) शु॰ य॰ सं॰ २२. ७ ।

ऽएवेष्टेः । पुरस्तादनुद्रुत्य सकृदेव रूपाण्याहवनीये जुहोत्यायतन ऽएवाहुतीर्जुहोति नास्मै भ्रातृव्यञ्जनयति यज्ञमुखे यज्ञमुखे जुहोति यज्ञस्य सन्तत्या ऽअव्व्यवच्छे- दाय ॥ ७ ॥ तदाहुः । यद्यज्ञमुखे यज्ञमुखे जुहुयात्पशु- भिर्व्यृध्येत पापीयान्त्स्यात्सकृदेव होतव्या न पशुभि- र्व्यृध्यते न पापीयान्भवत्यष्टाचत्त्वारिᳫंशतञ्जुहोत्य- ष्टाचत्त्वारिᳫंशदक्षरा जगती जागताः पशवो जगत्यै- वास्मै पशूनवरुन्द्ध ऽएकमतिरिक्तञ्जुहोति तस्मादेकः प्रजास्वर्द्धुकः ॥ ८ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ सावित्र्य इष्टयः ]

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टः पराङैत्स दिशोऽनुप्राविशत्तन्देवाः प्रैषमैच्छँस्तमिष्टिभिरनुप्रा- युञ्जत तमिष्टिभिरन्वैच्छँस्तमिष्टिभिरन्वविन्दन्न्यदिष्टि- भिर्यजतेऽश्वमेव तन्मेध्यं यजमानोऽन्विच्छति ॥ १ ॥ सावित्र्यो भवन्ति । इयं वै सविता यो वा ऽअस्यान्नि- लयते योऽन्यत्रैत्यस्यां वाव तमनुविन्दन्ति न वा ऽइमा- ङ्कश्चन तिर्य्यङ्नोर्द्ध्वोऽत्येतुमर्हति यत्सावित्र्यो भवन्त्यश्व- स्यैवानुवित्त्यै ॥ २ ॥ तदाहुः । प्र वा ऽएतदश्वो मीयते यत्पराङेति न ह्येनम्प्रत्यावर्त्तयन्तीति यत्सायन्धृतीर्जुहोति क्षेमो वै धृतिः क्षेमो रात्रिः क्षेमेणैवैनन्दाधार तस्मा- त्सायम्मनुष्याश्च पशवश्च क्षेम्या भवन्त्यथ यत्प्रातरिष्टि-

भिर्य्यजत ऽइच्छन्त्येवैनन्तस्म्माद्दिवा नष्टैष ऽएति यद्दव सायन्धृतीर्ज्जुहोति प्प्रातरिष्टिभिर्य्यजते योगक्षेममेव तद्यज-मानः कल्प्पयते तस्म्माद्यत्रैतेन यज्ञेन यजन्ते क्क्लृप्प्तः प्प्रजानां योगक्षेमो भवति ॥ ३ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ गाथागानम् ]

अप वा ऽएतस्म्मात् । श्री राष्ट्रङ्क्रामति योऽश्वमे-धेन यजते यदा वै पुरुषः श्रियङ्गच्छति व्वीणास्म्मै वाद्यते ब्ब्राह्मणौ व्वीणागाथिनौ सँव्वत्सरङ्गायतः श्रियै वा ऽएत-द्रूपं यद्वीणा श्रियमेवास्म्मिँस्तद्धत्तः ॥ १ ॥ तदाहुः । यदुभौ ब्ब्राह्मणौ गायेतामपास्म्मात्क्षत्रङ्क्रामेद्ब्रह्मणो वा ऽएतद्रूपं यद्ब्राह्मणो न वै ब्रह्मणि क्षत्रᳪ रमत ऽइति ॥ २ ॥ यदुभौ राजन्न्यौ । अपास्म्माद्ब्रह्मवर्च्चसङ्क्रामेत्क्ष-त्त्रस्य वा ऽएतद्रूपं यद्राजन्न्यो न वै क्षत्रे ब्ब्रह्मवर्च्चसᳪ रमत ऽइति ब्ब्राह्मणोऽन्न्यो गायति राजन्न्योऽन्न्यो ब्ब्रह्म वै ब्ब्राह्मणः क्षत्रᳪ राजन्न्यस्तदस्य ब्ब्रह्मणा च क्षत्त्रेण चोभयतः श्रीः परिगृहीता भवति ॥ ३ ॥ तदाहुः । यदुभौ दिवा गायेताम्प्रब्भ्रᳪशुकास्म्माच्छ्रीः स्याद्ब्रह्मणो वा ऽएतद्रूपं यदहर्य्यदा वै राजा कामयतेऽथ ब्ब्राह्मणञ्जिनाति पापीयाँस्तु भवति ॥ ४ ॥ यदुभौ नक्तम् । अपास्म्माद्ब्रह्म-वर्च्चसङ्क्रामेत्क्षत्त्रस्य वा ऽएतद्रूपं यद्रात्रिर्न्न वै क्षत्रे

ब्ब्रह्मवर्च्चसᳬ रमत ऽइति दिवा ब्ब्राह्मणो गायति नक्तᳬ राजन्न्यस्तथो हास्य ब्ब्रह्मणा च क्षत्रेण चोभयतᳬ श्रीᳬ परिगृहीता भवतीति ॥ ५ ॥ अयजतेत्त्यददादिति ब्ब्राह्मणो गायतीष्ट्टापूर्त्तं व्वै ब्ब्राह्मणस्येष्ट्टापूर्त्तेनैवैनᳬ स समर्द्धयतीत्त्ययुद्ध्यतेत्त्यमुᳬ सङ्ग्राममजयदिति राजन्न्यो युद्धं व्वै राजन्न्यस्य व्वीर्य्यं व्वीर्य्येणैवैनᳬ स समर्द्धयति तिस्रोऽन्न्यो गाथा गायति तिस्रोऽन्न्यᳬ षट् सम्पद्यन्ते षड्वृतवᳬ सँव्वत्सर ऽऋतुष्ष्वेव सँव्वत्सरे प्प्रतितिष्ठति ताब्भ्याᳬ शतन्ददाति शतायुर्व्वै पुरुषᳬ शतेन्द्रिय ऽआयुरेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते ॥ ६ ॥

प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ अश्वकर्णे जपः, धृतिहोमश्च ]

'व्विभूर्म्मात्रा प्प्रभूᳬ पित्रे'ति । इयं व्वै मातासौ पिताब्भ्यामेवैनम्परिददा'त्त्यश्वोऽसि हयोऽसी'ति शास्त्येवैनन्तत्तस्माच्छिष्टाᳬ प्प्रजा जायन्ते'ऽत्त्योऽसि मयो ऽसी'त्त्यत्त्येवैनन्नयति तस्मादश्वᳬ पशूनत्त्येति तस्मादश्वᳬ पशूनाᳬ श्रैष्ठ्यङ्गच्छ'त्त्यर्व्वासि सप्तिरसि व्वाज्यसी'ति यथायजुरेवैत'द्वृषासि नृमणा ऽअसी'ति मिथुनत्त्वाय 'ययुर्न्नामासि शिशुर्न्नामासी'त्त्येतद्वा ऽअश्वस्य प्प्रियन्नाम-

(१) शु० य० सं० २२. १९ । (२) शु० य० सं० २२. १९ । (३) शु० य० सं० २२. १९ । (४) शु० य० सं० २२. १९ । (५) शु० य० सं० २२. १९ । (६) शु० य० सं० २२. १९ ।

धेयम्प्रियेणैवैनन्नाम्नाभिवदति तस्माद्द्व्यामित्रौ सङ्गत्य नाम्ना चेदभिवदतोऽन्न्योऽन्न्यᳪ समेव जानाते ॥ १ ॥ 'आदित्यानाम्पत्वान्विही'ति । आदित्यानेवैनङ्गमयति 'देवा ऽआशापाला ऽएतन्देवेभ्योऽश्वम्मेधाय प्प्रोक्षितᳪ रक्षते'ति शतं वै तल्प्या राजपुत्रा ऽआशापालास्तेभ्य ऽएवैनम्परिददाती'ह रन्तिरिह रमतामिह धृतिरिह स्वधृतिᳪ स्वाहे'ति सँव्वत्सरमाहुतीर्ज्जुहोति षोडश नवतीरेता वा ऽअश्वस्य बन्धनन्ताभिरेवैनम्बद्ध्नाति तस्मादश्वᳪ प्प्रमुक्तो बन्धनमागच्छति षोडश नवतीरेता वा ऽअश्वस्य बन्धनन्ताभिरेवैनम्बद्ध्नाति तस्मादश्वᳪ प्प्रमुक्तो बन्धनन्न जहाति ॥ २ ॥ राष्ट्रं वा ऽअश्वमेधᳪ । राष्ट्र ऽएते व्व्यायच्छन्ते येऽश्वᳪ रक्षन्ति तेषां य ऽउदृचङ्गच्छन्ति राष्ट्रेणैव ते राष्ट्रम्भवन्त्यथ ये नोदृचङ्गच्छन्ति राष्ट्रात्ते व्व्यवच्छिद्यन्ते तस्माद्राष्ट्र्यश्वमेधेन यजेत परा वा ऽएष सिच्च्यते योऽबलोऽश्वमेधेन यजते यद्यमित्रा ऽअश्वं व्विन्देरन्यज्ञोऽस्य व्विच्छिद्येत पापीयान्त्स्याच्छतङ्कवचिनो रक्षन्ति यज्ञस्य सन्तत्या ऽअव्व्यवच्छेदाय न पापीयान्भवत्यथान्न्यमानीय प्प्रोक्षेयुᳪ सैव तत्र प्प्रायश्चित्तिᳪ ॥ ३ ॥

प्रथमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥



(१) शु॰ य॰ सं॰ २२. १९ । (२) शु॰ य॰ सं॰ २२. १९ । (३) शु॰ य॰ सं॰ २२. १९ ।

[ औद्ग्रभणहोमः ]

प्रजापतिरकामयत । अश्वमेधेन यजेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य सप्तधाऽत्मनो देवता ऽअपाक्रामन्त्सा दीक्षाभवत्स ऽएतानि वैश्वदेवान्यपश्यत्तान्यजुहोत्तैर्वै स दीक्षामवारुन्द्ध यद्वैश्वदेवानि जुहोति दीक्षामेव तैर्यजमानोऽवरुन्द्धेऽन्वहञ्जुहोत्यन्वहमेव दीक्षामवरुन्द्धे सप्त जुहोति सप्त वै ता देवता ऽअपाक्रामँस्ताभिरेवास्मै दीक्षामवरुन्द्धे ॥ १ ॥

अप वा ऽएतेभ्यः प्राणाः क्रामन्ति । ये दीक्षामतिरेचयन्ति सप्ताहम्प्रचरन्ति सप्त वै शीर्षण्याः प्राणाः प्राणा दीक्षा प्राणैरेवास्मै प्राणान्दीक्षामवरुन्द्धे त्रेधा विभज्य देवताञ्जुहोति त्र्यावृतो वै देवास्त्र्यावृत ऽइमे लोका ऽऋद्ध्यामेव वीर्य्यं ऽएषु लोकेषु प्रतितिष्ठति ॥ २ ॥

एकविंशतिः सम्पद्यन्ते । द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविंशस्तद्दैवं क्षत्रं सा श्रीस्तदाधिपत्यन्तद्ब्रध्नस्य विष्टपन्तत्स्वाराज्यमश्नुते ॥ ३ ॥

त्रिंशतमौद्ग्रभणानि जुहोति । त्रिंशदक्षरा विराड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै चत्वार्य्यौद्ग्रभणानि जुहोति त्रीणि वैश्वदेवानि सप्त सम्पद्यन्ते सप्त वै शीर्षण्याः प्राणाः प्राणा दीक्षा प्राणैरेवास्मै प्राणान्दीक्षामवरुन्द्धे पूर्णाहुतिमुत्तमाञ्जुहोति प्रत्युत्तब्ध्यै सयुक्त्वाय ॥ ४ ॥

प्रथमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



प्रजापतिरश्वमेधमसृजत । स सृष्टः प्राङ्र्चमम्लीनात्प्र साम तं वैश्वदेवान्युदयच्छन्यद्वैश्वदेवानि जुहोत्यश्वमेधस्यैवोद्यत्यै ॥ १ ॥ 'काय स्वाहा । कस्मै स्वाहा कतमस्मै स्वाहे'ति प्राजापत्यम्मुख्यङ्करोति प्रजापतिमुखाभिरेवैनन्देवताभिरुद्यच्छति ॥ २ ॥ 'स्वाहाधिमाधीताय स्वाहा । मनः प्रजापतये स्वाहा चित्तं विज्ञातायेति यदेव पूर्वासाम्ब्राह्मणन्तदत्र ॥ ३ ॥ 'अदित्यै स्वाहा । अदित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहे'तीयं वा ऽअदितिरनयैवैनमुद्यच्छति ॥ ४ ॥ 'सरस्वत्यै स्वाहा । सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहे'ति वाग्वै सरस्वती वाचैवैनमुद्यच्छति ॥ ५ ॥ 'पूष्णे स्वाहा । पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहे'ति पशवो वै पूषा पशुभिरेवैनमुद्यच्छति ॥ ६ ॥ 'त्वष्ट्रे स्वाहा । त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहे'ति त्वष्टा वै पशूनाम्मिथुनानाᳬ रूपकृद्रूपैरेवैनमुद्यच्छति ॥ ७ ॥ 'विष्णवे स्वाहा । विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहे'ति यज्ञो वै विष्णुर्यज्ञेनैवैनमुद्यच्छति 'विश्वो देवस्य नेतु'रिति पूर्णाहुतिमुत्तमाञ्जुहोतीयं वै पूर्णाहुतिरस्यामेवान्ततः प्रतितिष्ठति ॥ ८ ॥

प्रथमाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥



(१) शु० य० सं० २२. २० । (२) शु० य० सं० २२. २० । (३) शु० य० सं० २२. २० । (४) शु० य० सं० २२. २० । (५) शु० य० सं० २२. २० । (६) शु० य० सं० २२. २० । (७) शु० य० सं० २२. २० । (८) शु० य० सं० २२. २१ ।

[ अध्वर्युकर्तृकजपः ]

'ओं ब्ब्रह्मन् । ब्राह्मणो ब्ब्रह्मवर्च्चसी जायता'मिति ब्ब्राह्मण ऽएव ब्ब्रह्मवर्च्चसन्दधाति तस्म्मात्पुरा ब्ब्राह्मणो ब्ब्रह्मवर्च्चसी जज्ञे ॥ १ ॥ 'ओं राष्ट्रे राजन्न्यः । शूर ऽइषव्व्योऽतिव्व्याधी महारथो जायता'मिति राजन्न्य ऽएव शौर्य्यम्महिमानन्दधाति तस्म्मात्पुरा राजन्न्यः शूर ऽइषव्व्योऽतिव्व्याधी महारथो जज्ञे ॥ २ ॥ 'दोग्ग्ध्री धेनु'रिति । धेन्न्वामेव पयो दधाति तस्म्मात्पुरा धेनुर्द्दोग्ग्ध्री जज्ञे ॥ ३ ॥ 'व्वोढानड्वा'निति । अनडुह्येव बलन्दधाति तस्म्मात्पुरानड्वान्न्वोढा जज्ञे ॥ ४ ॥ 'आशुः सप्प्ति'रिति । अश्श्व ऽएव जवन्दधाति तस्म्मात्पुराश्श्वः सर्त्ता जज्ञे ॥ ५ ॥ 'पुरन्धिर्य्योषे'ति । योषित्त्येव रूपन्दधाति तस्म्माद्रूपिणी युवतिः प्प्रिया भावुका ॥ ६ ॥ 'जिष्णू रथेष्ठा' ऽइति । राजन्न्य ऽएव जैत्रम्महिमानन्दधाति तस्म्मात्पुरा राजन्न्यो जिष्णुर्ज्जज्ञे ॥ ७ ॥ 'सभेयो युवे'ति । एष वै सभेयो युवा यः प्प्रथमवयसी तस्म्मात्प्रथमवयसी स्त्रीणाम्प्रियो भावुकः ॥ ८ ॥ 'आऽस्य यजमानस्य व्वीरो जायता'मिति । यजमानस्यैव प्प्रजायां व्वीर्य्यन्दधाति तस्म्मात्पुरेजानस्य व्वीरो जज्ञे ॥९॥ [अर्धः प्रपाठकः ॥५४॥] 'निकामे-निकामे नः पर्ज्जन्न्यो व्वर्षत्वि'ति । निकामे-निकामे वै तत्र पर्ज्जन्न्यो

(१) शु० य० सं० २२. २२। (२) शु० य० सं० २२. २२। (३) शु० य० सं० २२. २२। (४) शु० य० सं० २२. २२। (५) शु० य० सं० २२. २२। (६) शु० य० सं० २२. २२। (७) शु० य० सं० २२. २२। (८) शु० य० सं० २२. २२। (९) शु० य० सं० २२. २२। (१०) शु० य० सं० २२. २२।

वृर्षति युत्रैतेन युज्ञेन युजन्ते 'फुलवत्यो न ऽओषधयः पच्यन्ता'मिति फुलवत्यो वै तत्रौषधयः पच्यन्ते युत्रैतेन युज्ञेन युजन्ते 'योगक्षेमो नः कल्पता'मिति योगक्षेमो वै तत्र कल्पते युत्रैतेन युज्ञेन युजन्ते तस्माद्यत्रैतेन युज्ञेन युजन्ते क्लृप्तः प्रजानां योगक्षेमो भवति ॥ १० ॥

प्रथमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

[ आज्यसक्तुधानालाजहोमः ]

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत् । स ऽआत्मन्नश्वमेधमधत्त ते देवाः प्रजापतिमब्रुवन्नेष वै यज्ञो यदश्वमेधोऽपि नोऽत्रास्तु भाग ऽइति तेभ्य ऽएतानन्नहोमानकल्पयद्यदन्नहोमाञ्जुहोति देवानेव तत्प्रीणाति ॥१॥ आज्येन जुहोति । तेजो वा ऽआज्यन्तेजसैवास्मिँस्तत्तेजो दधात्याज्येन जुहोत्येतद्वै देवानाम्प्रियन्धाम यदाज्यम्प्रियेणैवैनान्धाम्ना समर्द्धयति ॥ २ ॥ सक्तुभिर्ज्जुहोति । देवानां वा ऽएतद्रूपं यत्सक्तवो देवानेव तत्प्रीणाति ॥ ३ ॥ धानाभिर्ज्जुहोति । अहोरात्राणां वा ऽएतद्रूपं यद्धाना ऽअहोरात्राण्येव तत्प्रीणाति ॥ ४ ॥ लाजैर्ज्जुहोति । नक्षत्राणां वा ऽएतद्रूपं यल्लाजा नक्षत्राण्येव तत्प्रीणाति 'प्राणाय स्वाहापानाय स्वाहे'ति नामग्राहञ्जुहोति नाम-

(१) शु० य० सं० २२. २२। (२) शु० य० सं० २२. २२। (३) शु० य० सं० २२. २३।

त्याहमेवैनाँस्तत्प्रीणा[1]त्येकस्मै स्वाहा द्वाभ्याᳯं स्वाहा शताय स्वाहैकशताय स्वाहे'त्यनुपूर्वञ्जुहोत्यनुपूर्वमेवैनाँस्तत्प्रीणात्येकोत्तरा जुहोत्येकवृद्वै स्वर्ग्गो लोक ऽएकधैवैनᳯं स्वर्ग्गँल्लोकङ्गमयति पराचीर्ज्जुहोति पराङिव वै स्वर्ग्गो लोकः स्वर्ग्गस्य लोकस्याभिजित्यै ॥५॥ ईश्वरो वा ऽएषः । पराङ् प्रदघोर्यः पराचीराहुतीर्ज्जुहोति नैकशतमत्येति यदेकशतमतीयादायुषा यजमानं व्यर्द्धयेदेकशतञ्जुहोति शतायुर्वै पुरुष ऽआत्मैकशत आयुष्येवात्मन्प्रतितिष्ठति '[2]व्युष्ट्यै स्वाहा स्वर्ग्गाय स्वाहे'त्युत्तमे ऽआहुती जुहोति रात्रिर्वै व्युष्टिरहः स्वर्ग्गोऽहोरात्रे ऽएव तत्प्रीणाति ॥ ६ ॥ तदाहुः । यदुभे दिवा वा नक्तं वा जुहुयादहोरात्रे मोहयेद्व्युष्ट्यै स्वाहेत्यनुदित ऽआदित्ये जुहोति स्वर्ग्गाय स्वाहेत्युदितेऽहोरात्रयोर्व्यतिमोहाय ॥ ७ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ पर्यङ्गपशुनिरूपणम् ]

राजा वा ऽएष यज्ञानां यदश्वमेधः । यजमानो वा ऽअश्वमेधो यजमानो यज्ञो यदश्वे पशून्नियुनक्ति यज्ञ ऽएव तद्यज्ञमारभते ॥ १ ॥ अश्वन्तूपरङ्गोमृगमिति । तान्मध्यमे यूप ऽआलभते सेनामुखमेवास्यैतेन सᳯंश्यति तस्माद्राज्ञः सेनामुखम्भीष्ममम्भावुकम् ॥ २ ॥ कृष्णग्रीवमाग्नेयᳯं रराटे पुरस्तात् । पूर्वाग्निमेव तत्कुरुते

(१) शु० य० सं० २२. ३४ । (२) शु० य० सं० २२. ३४ ।

तस्मात्राजः पूर्वाग्निर्भावुकः ॥ ३ ॥ सारस्वतीम्मेषीमधस्ताद्धन्वोः । स्त्रीरेव तदनुगाः कुरुते तस्मात्स्त्रियः पुंसोऽनुवर्त्मानो भावुकाः ॥ ४ ॥ आश्विनावधोरामौ बाह्वोः । बाह्वोरेव बलन्धत्ते तस्माद्राजा बाहुबली भावुकः ॥ ५ ॥ सौमापौष्णꣳ श्यामन्नाभ्याम् । प्रतिष्ठामेव ताङ्कुरुत ऽइयं वै पूषास्यामेव प्प्रतितिष्ठति ॥ ६ ॥ सौर्य्ययामौ श्वेतञ्च कृष्णञ्च पार्श्वयोः । कवचे ऽएव ते कुरुते तस्माद्राजा सन्नद्धो वीर्य्यङ्करोति ॥७॥ त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः । ऊर्व्वोरेव बलन्धत्ते तस्माद्राजोरुबली भावुकः ॥ ८ ॥ वायव्यꣳ श्वेतम्पुच्छे । उत्सेधमेव तङ्कुरुते तस्मादुत्सेधम्प्रजा भयेऽभिसꣳश्रयन्तीन्द्राय स्वपस्याय वेहतं ऽयज्ञस्य सेन्द्रतायै वैष्णवो वामनो यज्ञो वै विष्णुर्यज्ञ ऽएवान्ततः प्प्रतितिष्ठति ॥ ९ ॥ ते वा ऽएते । पञ्चदश पर्य्यङ्ग्याः पशवो भवन्ति पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैवैतद्वीर्य्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ १० ॥ पञ्चदश—पञ्चदशो ऽएवेतरेषु । पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैवैतद्वीर्य्येण यजमानोऽभितः पाप्मानमपहते ॥ ११ ॥ तदाहुः । अपाहैवैतैः पाप्मानꣳ हता ऽइत्यकृत्स्नञ्च त्वै प्प्रजापतिꣳ संस्करोति न चेदꣳ सर्व्वमवरुन्द्धे ॥ १२ ॥ सप्तदशैव * पशून्मध्यमे यूप ऽआलभेत । सप्तदशो वै प्प्रजापतिः

---

* त्रयोऽश्वतूपरगोमृगाः द्वौ चाग्नेयावैकादशिनौ द्वादश रोहितादयः, एवं सप्तदश पशवो मध्यमे यूपे भवन्ति ।

प्प्रजापतिरश्श्वमेधोऽश्श्वमेधस्यैवाप्प्त्यै षोडश–षोडशेतरेषु षोडशकलं व्वा ऽइदᳪ सर्व्वन्तदिदᳪ सर्व्वमवरुन्द्धे ॥ १३ ॥ ताङ्कथमाप्प्रीणीयादित्त्याहुः । 'समिद्धो ऽअञ्जन्कृदरम्मतीना'मिति बार्हदुक्क्थीभिराप्प्रीणीयाद्बृहदुक्क्थो ह वै व्वामदेव्व्योऽश्श्वो वा सामुद्रिरश्श्वस्याप्प्रीर्ह्ददर्श ता ऽएतास्ताभिरेवैनमेतदाप्प्रीणीम ऽइति व्वदन्तो न तथा कुर्य्याज्जामदग्न्नीभिरेवाप्प्रीणीयात्प्रजापतिर्व्वै जमदग्निः सोऽश्श्वमेधः स्वयैवैनन्देवतया समर्द्धयति तस्म्माज्जामदग्न्नीभिरेवाप्प्रीणीयात् ॥ १४ ॥ तद्धैके । एतेषाम्पर्य्यङ्ग्याणान्नाना याज्यापुरोऽनुवाक्क्याः कुर्व्वन्ति व्विन्दाम ऽएतेषामविर्त्येतरेषान्न कुर्म्म ऽइति न तथा कुर्य्यात्क्षत्रं व्वा ऽअश्श्वो व्विडितरे पशवः प्प्रातिप्प्रातिनीथ्थं ह ते प्प्रत्युद्यामिनीङ्क्षत्राय व्विशङ्कुर्व्वन्त्त्यथो ऽआयुषा यजमानं व्व्यर्द्धयन्ति ये तथा कुर्व्वन्ति तस्म्मात्प्राजापत्त्य ऽएवाश्श्वो देवदेवत्त्या ऽइतरे क्षत्रायैव तद्विशङ्कृतानुकरामनुवर्त्मानङ्करोत्त्यथो ऽआयुषैव यजमानᳪ समर्द्धयति ॥ १५ ॥ हिरण्मयोऽश्श्वस्य शासो भवति । लोहमयाः पर्य्यङ्ग्याणामायसा ऽइतरेषाञ्ज्योतिर्व्वै हिरण्यᳪ राष्ट्रमश्श्वमेधो ज्योतिरेव तद्राष्ट्रे दधात्त्यथो हिरण्यज्ज्योतिषैव यजमानः स्वर्ग्गँल्लोकमेत्त्यथो ऽअनूकाशमेव तङ्कुरुते स्वर्ग्गस्य लोकस्य समष्ट्यै ॥ १६ ॥ अथो क्षत्रं व्वा ऽअश्श्वः । क्षत्रस्यैतद्रूपं यद्धिरण्यं क्षत्रमेव तत्क्षत्रेण समर्द्धयति ॥ १७ ॥ अथ

(१) शु० य० सं० २९. १ ।

यल्लोहमयाः पुरुषंङ्क्षाणाम् । यथा वै राज्ञोऽराजानो राज-कृतः सूतग्रामण्य ऽएवं वा ऽएतेऽश्वस्य यत्पुरुषंङ्क्या ऽएवमु वा ऽएतद्धिरण्यस्य यल्लोहथं स्वेनैवैनाँस्तद्रूपेण समर्द्धयति ॥ १८ ॥ अथ यदायसा ऽइतरेषाम् । विड्वा ऽइतरे पशवो विश ऽएतद्रूपं यदयो विशमेव तद्विशा समर्द्धयति वैतस ऽइटसून ऽउत्तरतोऽश्वस्यावद्यन्त्या-नुष्टुभो वा ऽअश्व ऽआनुष्टुभैषा दिक्स्वायामेवैनन्तद्दिशि दधात्यथ यद्वैतस ऽइटसूनेऽप्सुयोनिर्वा ऽअश्वोऽप्सुजा वेतसः स्वयैवैनं योन्या समर्द्धयति ॥ १९ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ उद्गात्रन्वारम्भः ]

देवा वा ऽअश्वमेधे पवमानम् । स्वर्गँल्लोकन्न प्राजानँस्तमश्वः प्राजानाद्यदश्वमेधेऽश्वेन पवमानाय सर्प्पन्ति स्वर्गस्य लोकस्य प्रज्ञात्यै पुच्छमन्वारभन्ते स्वर्गस्यैव लोकस्य समष्ट्यै न वै मनुष्यः स्वर्गँल्लोक-मञ्जसा वेदाश्वो वै स्वर्गँल्लोकमञ्जसा वेद ॥ १ ॥ यदुद्गा-तोद्गायेत् । यथाक्षेत्रज्ञोऽन्येन पथा नयेत्तादृक्तदथ यदु-द्गातारमपरुध्याश्वमुद्गीथाय वृणीते यथा क्षेत्रज्ञोऽञ्जसा नयेदेवमेवैतद्यजमानमश्वः स्वर्गँल्लोकमञ्जसा नयति हिङ्करोति सामैव तद्धिङ्करोत्युद्गीथ ऽएव स वडवा ऽउप-

( १ ) 'व' इति 'ग' 'ज' पुस्तकयोः ।

योग्ग्रामान्तौ भवतो नऽर्क्षीकाः पुरुषव्व्याग्घ्राः परिमोषिण ऽआव्व्याधिन्न्यस्तस्कराऽअरण्ण्येष्ष्वाजायन्ते ॥ ४ ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ पश्वेकादशिनी ]

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टः पराङैत्स पङ्क्तिर्भूत्वा सँव्वत्सरम्प्राविशत्तेऽर्द्धमासा ऽअभवँस्तम्पञ्चदशिभिरनुप्प्रायुङ्क्त तमाप्नोत्तमाप्त्वा पञ्चदशिभिरवारुन्द्धार्द्धमासानां व्वा ऽएषा प्प्रतिमा यत्पञ्चदशिनो यत्पञ्चदशिन ऽआलभतेऽर्द्धमासानेव तैर्य्यजमानोऽवरुन्द्धे ॥ १ ॥ तदाहुः । अनवरुद्धो व्वा ऽएतस्य सँव्वत्सरो भवति योऽन्न्यत्र चातुर्म्मास्येभ्यः सँव्वत्सरन्तनुत ऽइत्त्येष वै साक्षात्सँव्वत्सरो यच्चातुर्म्मास्यानि यच्चातुर्म्मास्यान्न्पशूनालभते साक्षादेव तत्सँव्वत्सरमवरुन्द्धे व्वि व्वा ऽएष प्प्रजया पशुभिर्र्ऋद्ध्यतेऽप स्वर्ग्गँल्लोकः राद्ध्नोति योऽन्न्यत्रैकादशिनेभ्यः सँव्वत्सरन्तनुत ऽइत्त्येष वै सम्प्रति स्वर्ग्गो लोको यदेकादशिनी प्प्रजा वै पशव ऽएकादशिनी यदैकादशिनान्न्पशूनालभते न स्वर्ग्गँल्लोकमपराद्ध्नोति न प्प्रजया पशुभिर्व्व्यृद्ध्यते ॥ २ ॥ प्रजापतिर्व्विराजमसृजत । सास्म्मात्सृष्टा पराच्च्यैत्साऽश्वम्मेद्ध्यम्प्राविशत्तान्दशिभिरनुप्प्रायुङ्क्त तामाप्नोत्तामाप्त्वा दशिभिरवारुन्द्ध यद्दशिन ऽआलभते व्विराजमेव तैर्य्यजमानोऽवरुन्द्धे शतमालभते शतायुर्व्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते ॥ ३ ॥

एकादश दशत ऽआलभते । एकादशाक्षरा वै त्रिष्टुबि- न्द्रियमु वै वीर्यन्त्रिष्टुबिन्द्रियस्यैव वीर्यस्यावरुद्ध्या ऽएकादश दशत ऽआलभते दश वै पशोः प्राणा ऽआत्मै- कादशः प्राणैरेव पशून्त्समर्द्धयति वैश्वदेवा भवन्ति वैश्वदेवो वा ऽअश्वोऽश्वस्यैव सर्वत्वाय बहुरूपा भवन्ति तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नाना- रूपाः पशवः ॥ ४ ॥

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ अश्वस्य नियोजनाञ्जनमणिबन्धनादि ]

'युञ्जन्ति ब्रध्नमरुषञ्चरन्त'मिति । असौ वा ऽआ- दित्यो ब्रध्नोऽरुषोऽमुमेवास्मा ऽआदित्यं युनक्ति स्वर्गस्य लोकस्य समष्ट्यै ॥ १ ॥ तदाहुः । पराङ्वा ऽए- तस्माद्यज्ञ ऽएति यस्य पशुरुपाकृतोऽन्यत्र वेदेरेती'त्येतꣳ स्तोतरनेन पथा पुनरश्वमावर्त्तयासि न' ऽइति वायुर्वै स्तोता तमेवास्मा ऽएतत्परस्ताद्दधाति तथा नात्येति ॥२॥ अप वा ऽएतस्मात् । तेज ऽइन्द्रियम्पशवः श्रीः क्रामन्ति योऽश्वमेधेन यजते ॥ ३ ॥ 'वसवस्त्वाञ्जन्तु । गायत्रेण च्छन्दसे'ति महिष्यभ्यनक्ति तेजो वा ऽआज्यन्तेजो गायत्री तेजसी ऽएवास्मिन्नन्त्समीची दधाति ॥ ४ ॥ 'रुद्रास्त्वा- ञ्जन्तु । त्रैष्टुभेन च्छन्दसे'ति वावाता तेजो वा ऽआज्य-

(१) शु० य० सं० २३. ५। (२) शु० य० सं० २३. ७। (३) शु० य० सं० २३. ८। (४) शु० य० सं० २३. ८।

मिन्द्रियन्त्रिष्टुप्तेजश्चैवास्मिन्निन्द्रियञ्च समीची दधाति ॥ ५ ॥ 'आदित्यास्त्वाञ्जन्तु । जागतेन च्छन्दसे'ति परिवृक्ता तेजो वा ऽआज्यम्पशवो जगती तेजश्चैवास्मिन्पशूँश्च समीची दधाति ॥ ६ ॥ पत्न्योऽभ्यञ्जन्ति * । श्रियै वा ऽएतद्रूपं यत्पत्न्यः श्रियमेवास्मिँस्तद्दधाति नास्मात्तेज ऽइन्द्रियम्पशवः श्रीरपक्रामन्ति ॥ ७ ॥ यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशो स्कन्दति यस्य निक्तस्य लोमानि शीयन्ते यत्काचानावयन्ति लोमान्येवास्य सम्भरन्ति हिरण्मया भवन्ति तस्योक्तम्ब्राह्मणमेकशतमेकशतङ्काचानावयन्ति शतायुर्वै पुरुष ऽआत्मैकशत ऽआयुष्येवात्मन्प्रतितिष्ठति 'भूर्भुवः स्व'रिति प्राजापत्याभिरावयन्ति प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयन्ति 'लाजी३ञ्छाची३न्यव्ये गव्य' ऽइत्यतिरिक्तमन्नमश्वायोपावहरति प्रजामेवान्नादीङ्कुरुत 'ऽएतदन्नमत्त देवा ऽएतदन्नमद्धि प्रजापत' ऽइति प्रजामेवान्नाद्येन समर्द्धयति ॥ ८ ॥ अप वा ऽएतस्मात् । तेजो ब्रह्मवर्चसङ्क्रामति यो ऽश्वमेधेन यजते होता च ब्रह्मा च ब्रह्मोद्यं वदत ऽआग्नेयो वै होता बार्हस्पत्यो ब्रह्मा ब्रह्म बृहस्पतिस्तेजश्चैवास्मिन्ब्रह्मवर्चसञ्च समीची धत्तो यूपमभितो वदतो यजमानो वै यूपो यजमानमेवैतत्तेजसा

(१) शु० य० सं० २३. ८ ।

* का० श्रौ० सू० २०. ५. १५ ।

(२) शु० य० सं० २३. ८ । (३) शु० य० सं० २३. ८ । (४) शु० य० सं० २३. ८ ।

च ब्ब्रह्मवर्चसेन चोभयतः परिधत्तः ॥ ९ ॥ 'कः[1] स्विदेकाकी चरती'ति । असौ वा ऽआदित्य ऽएकाकी चरत्त्येष ब्ब्रह्मवर्चसम्ब्रह्मवर्चसमेवास्मिँस्तद्धत्तः ॥ १० ॥ 'क[2] ऽउ स्विज्जायते पुन'रिति । चन्द्रमा वै जायते पुनरायुरेवास्मिँस्तद्धत्तः ॥ ११ ॥ 'किं[3] स्विद्धिमस्य भेषज'मिति । अग्निर्वै हिमस्य भेषजन्तेज ऽएवास्मिँस्तद्धत्तः ॥ १२ ॥ * 'किम्[4]वावपनम्महदि'ति । अयं वै लोक ऽआवपनम्महदस्मिन्नेव लोके प्प्रतितिष्ठति ॥ १३ ॥ 'का[5] स्विदासीत्पूर्व्वचित्ति'रिति । द्यौर्वै व्वृष्टिः पूर्व्वचित्तिर्दिवमेव व्वृष्टिमवरुन्द्धे ॥ १४ ॥ 'किं[6] स्विदासीद्बृहद्वय' ऽइति । अश्वो वै बृहद्वय ऽआयुरेवावरुन्द्धे ॥ १५ ॥ 'का[7] स्विदासीत्पिलिप्पिले'ति । श्रीर्वै पिलिप्पिला श्रियमेवावरुन्द्धे ॥१६॥ 'का[8] स्विदासीत्पिशङ्गिले'ति अहोरात्रे वै पिशङ्गिले ऽअहोरात्रयोरेव प्रतितिष्ठति ॥ १७ ॥

द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ १०८ ॥



(१) शु० य० सं० २३. ९। (२) शु० य० सं० २३. ९। (३) शु० य० सं० २३. ९।
* अत्र शतम् ६५०० ।
(४) शु० य० सं० २३. ९। (५) शु० य० सं० २३. ११। (६) शु० य० सं० २३. ११। (७) शु० य० सं० २३. ११। (८) शु० य० सं० २३. ११।

[ अश्वस्य प्रोक्षणादि ]

नियुक्तेषु पशुषु । प्प्रोक्षणीरद्ध्वर्युरादत्तेऽश्श्वम्प्रोक्षिष्ष्यन्नन्न्वारब्धे यजमान ऽआद्ध्वरिकं य्यजुरनुद्रुत्याश्श्वमेधिकं य्यजुः प्प्रतिपद्यते ॥ १ ॥ 'वायुष्ट्वा पचतैरवत्त्वि'ति । वायुरेवैनम्पच'त्यसितग्ग्रीवश्छागै'रित्यग्निर्वा ऽअसितग्ग्रीवोऽग्निरेवैनञ्छागैः पचति ॥ २ ॥ 'न्यग्ग्रोधश्चमसै'रिति । यत्र वै देवा यज्ञेनायजन्त त ऽएतांश्चमसान्न्यौब्जँस्ते न्न्यञ्चोऽरोहँस्तस्मान्न्यञ्चो न्न्यग्ग्रोधा रोहन्ति ॥ ३ ॥ 'शल्ल्मलिर्व्वृद्ध्ये'ति । शल्म्मलौ व्वृद्धिन्दधाति तस्म्माच्छल्म्मलिर्व्वनस्प्पतीनां व्वर्षिष्ठं व्वर्द्धते ॥४॥ 'एष स्य राथ्यो व्वृषे'ति । अश्श्वेनैव रथꣳ सम्पादयति तस्म्मादश्श्वो नान्न्यद्रथाद्वहति ॥ ५ ॥ 'पड्भिश्चतुर्भिरेदग'न्निति । तस्म्मादश्श्वस्त्रिभिस्तिष्ठँस्तिष्ठत्त्यथ युक्तः सर्व्वैः पद्भिः सममायुते ॥ ६ ॥ 'ब्रह्माकृष्णश्च नोऽवत्त्वि'ति । चन्द्रमा वै ब्रह्माकृष्णश्चन्द्रमस ऽएवैनम्परिददाति 'नमोऽग्नय' ऽइत्त्यग्नय ऽएव नमस्करोति ॥ ७ ॥ 'संशितो रश्म्मिना रथ' ऽइति । रश्म्मिनैव रथꣳ सम्पादयति तस्म्माद्रथः परुर्षुतो दर्शनीयतमो भवति ॥ ८ ॥ 'संशितो रश्म्मिना हय' ऽइति । रश्म्मिनैवाश्श्वꣳ सम्पादयति तस्म्मादश्श्वो रश्म्मिना प्प्रतिहतो भूयिष्ठꣳ रोचते ॥ ९ ॥ 'संशितो

(१) शु० य० सं० २३. १३ । (२) शु० य० सं० २३. १३ । (३) शु० य० सं० २३. १३ । (४) शु० य० सं० २३. १३ । (५) शु० य० सं० २३. १३ । (६) शु० य० सं० २३. १३ । (७) शु० य० सं० २३ १३ । (८) शु० य० सं० २३. १३ । (९) शु० य० २३. १४ । (१०) शु० य० सं० २३. १४ । (११) शु० य० सं० २३. १४ ।

ऽअप्स्वप्सुजा' ऽइति । अप्सुयोनिर्वा ऽअश्वः स्वयैवैनं देवतया समर्द्धयति 'ब्रह्मा सोमपुरोगव' ऽइति सोमपुरोगवमेवैनथं स्वर्ग्गँल्लोकङ्गमयति ॥१०॥ 'स्वयं[2] वाजिँस्तन्वङ्कल्पयस्वे'ति । स्वयथं रूपङ्कुरुष्व यादृशमिच्छसीत्येवैनन्तदाह 'स्वयं[3] यजस्वे'ति स्वाराज्यमेवास्मिन्दधाति 'स्वयञ्जुषस्वे'[4]ति स्वयँल्लोकथं रोचयस्व यावन्तमिच्छसीत्येवैनन्तदाह 'महिमा[5] तेऽन्येन न सन्नश' ऽइत्यश्वमेव महिम्ना समर्द्धयति ॥११॥ 'न[6] वा ऽउ ऽएतन्म्रियसे न रिष्यसी'ति । प्राश्वासयत्येवैनन्त'देवाँ२॥ ऽइँदेषि पथिभिः सुगेभि'रिति देवयानानेवैनम्पथो दर्शयति 'यत्रासते सुकृतो यत्र ते ययु'रिति सुकृद्भिरेवैनथं सलोकङ्करोति 'तत्र[8] त्वा देवः सविता दधात्वि'ति सवितैवैनथं स्वर्ग्गे लोके दधाति 'प्रजापतये[10] त्वा जुष्टम्प्रोक्षामी'त्युपाथंश्वथोपगृह्णाति ॥ १२ ॥ 'अग्निः[11] पशुरासीत् । तेनायजन्त स ऽएतँल्लोकमजयद्यस्मिन्नग्निः स ते लोको भविष्यति तञ्जेष्यसि पिबैता ऽअप' ऽइति यावानग्नेर्विजयो यावाँल्लोको यावदैश्वर्य्यन्तावाँस्ते विजयस्तावाँल्लोकस्तावदैश्वर्य्यम्भविष्यतीत्येवैनन्तदाह ॥ १३ ॥ 'वायुः[12] पशुरासीत् । तेनायजन्त स ऽएतँल्लोकमजयद्यस्मिन्वायुः स ते लोको भविष्यति तञ्जेष्यसि पिबैता

---

(१) शु० य० सं० २३. १४। (२) शु० य० सं० २३. १५। (३) शु० य० सं० २३. १५। (४) शु० य० सं० २३. १५। (५) शु० य० सं० २३. १५। (६) शु० य० सं० २३. १६। (७) शु० य० सं० २३. १६। (८) शु० य० सं० २३. १६। (९) शु० य० सं० २३. १६। (१०) शु० य० सं० २२. ५। (११) शु० य० सं० २३. १७। (१२) शु० य० सं० २३. १७।

ऽअप' ऽइति यावान्न्वायोर्व्विजयो यावाँल्लोको यावदैश्वर्य्यं-न्तावाँस्ते व्विजयस्तावाँल्लोकस्तावदैश्वर्य्यम्भविष्यतीत्त्येवैनन्तदाह ॥ १४ ॥ 'सूर्य्यः[1] पशुरासीत् । तेनायजन्त स ऽएतँल्लोकमजयद्यस्मिन्त्सूर्य्यः स ते लोको भविष्यति तञ्जेष्यसि पिबैता ऽअप' ऽइति यावान्त्सूर्य्यस्य व्विजयो यावाँल्लोको यावदैश्वर्य्यन्तावाँस्ते व्विजयस्तावाँल्लोकस्तावदैश्वर्य्यम्भविष्यतीत्त्येवैनन्तदाह तर्प्पयित्त्वाश्वम्पुनः सं-स्कृत्य प्प्रोक्षणीरितरान्पशून्प्प्रोक्षति तस्यातः ॥ १५ ॥

द्वितीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



[ मृतस्याऽश्वस्य परिक्रमणादि ]

देवा वा ऽउदञ्चः । स्वर्ग्गँल्लोकन्न प्प्राजानँस्तमश्वः प्प्राजानाद्यदश्वेनोदञ्चो यन्ति स्वर्ग्गस्य लोकस्य प्प्रज्ञात्यै व्वासोऽधिवासः हिरण्यमित्त्यश्वायोपस्तृणन्ति यथा नान्न्यस्मै पशवे तस्मिन्नेनमधि संज्ञपयन्त्यन्न्यैरेवैनन्तत्पशु-भिर्व्व्यावर्त्तयन्ति ॥१॥ घ्नन्ति वा ऽएतत्पशुम् । यदेनः संज्ञपय न्ति 'प्प्राणाय[2] स्वाहापानाय स्वाहा व्व्यानाय स्वाहे'ति संज्ञ-प्प्यमान ऽआहुतीर्ज्जुहोति प्प्राणानेवास्मिन्नेतद्दधाति तथो हास्यैतेन जीवतैव पशुनेष्टम्भवति ॥२॥ 'अम्बे[3] * ऽअम्बिकेऽ-म्बालिके । न मा नयति कश्चने'ति पत्नीरुदानयत्त्यहूतै-

(१) शु० य० सं० २३. १७। (२) शु० य० सं० २३. १८। (३) शु० य० सं० २३. १८।

* 'आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालिकेऽम्बिके पूर्वे' ( पा० सू० ६. १. १२८ ) इति प्रकृतिभावः ।

वैना ऽएतदथो मेद्ध्या ऽएवैनां करोति ॥ ६ ॥ 'गणानान्त्वा गणपतिं हवामह' ऽइति । पत्न्यः परियन्त्यपह्नुवत ऽएवास्म्मा ऽएतदतो न्न्येवास्म्मै ह्नुवतेऽथो धुवत ऽएवैनन्त्रिः परियन्ति त्रयो वा ऽइमे लोका ऽएभिरेवैनँल्लोकैर्द्धुवते त्रिः पुनः परियन्ति षट् सम्पद्यन्ते षड्वा ऽऋतव ऽऋतुभिरेवैनन्धुवते ॥ ४ ॥ अप वा ऽएतेब्भ्यः प्प्राणाः क्क्रामन्ति । ये यज्ञे धुवनन्तन्न्वते नव कृत्वः परियन्ति नव वै प्प्राणाः प्प्राणानेवात्मन्दधते नैब्भ्यः प्प्राणा ऽअपक्क्रामन्त्या'हमजानि गब्भँधमात्वमजासि गब्भँध'मिति प्प्रजा वै पशवो गब्भँः प्प्रजामेव पशूनात्मन्धत्ते 'तौ ऽउभौ चतुरः पदः सम्प्रसारयावे'ति मिथुनस्यावरुद्ध्यै 'स्वर्ग्गे लोके प्प्रोर्ण्णुवाथा'मित्येष वै स्वर्ग्गो लोको यत्र पशुं संज्ञपयन्ति तस्म्मादेवमाह 'व्वृषा व्वाजी रेतोधा रेतो दधात्वि'ति मिथुनस्यैवावरुद्ध्यै ॥ ५ ॥

द्वितीयाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥



[ संवादः ]

अप वा ऽएतस्म्मात् । श्री राष्ट्रङ्क्रामति यो ऽश्श्वमेधेन यजते ॥ १ ॥ 'ऊर्द्ध्वामेनामुच्छ्रापये'ति । श्श्रीर्वै राष्ट्रमश्श्वमेधः श्श्रियमेवास्म्मै राष्ट्रमूर्द्ध्वमुच्छ्रयति ॥ २ ॥ 'गिरौ

(१) शु० य० सं० २३. १९। (२) शु० य० सं० २३. १९। (३) शु० य० सं० २३. २०। (४) शु० य० सं० २३. २०। (५) शु० य० सं० २३. २०। (६) शु० य० सं० २३. २६। (७) शु० य० सं० २३. २६।

भारꣳ हरन्निवे'ति । श्रीर्वै राष्ट्रस्य भारः श्रियमेवास्मै राष्ट्रꣳ सन्नह्यत्यथो श्रियमेवास्मिन्नराष्ट्रमधिनिदधाति ॥ ३ ॥ '[1]अथास्यै मध्यमेधता'मिति । श्रीर्वै राष्ट्रस्य मध्यꣳ श्रियमेव राष्ट्रे मध्यतोऽन्नाद्यन्दधाति ॥ ४ ॥ 'शीते [2]वाते पुनन्निवे'ति । क्षेमो वै राष्ट्रस्य शीतं क्षेममेवास्मै करोति ॥ ५ ॥ '[3]यकासकौ शकुन्तिके'ति । विड्वै शकुन्तिका'[4]हलगिति वञ्चती'ति विशो वै राष्ट्राय वञ्चन्त्या'[5]हन्ति गभे पसो निगल्गलीति धारके'ति विड्वै गभो राष्ट्रम्पसो † राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशङ्घातुकः ॥ ६ ॥ '[6]माता च ते पिता च त' इति । इयं वै मातासौ पिताभ्यामेवैनꣳ स्वर्ग्गँल्लोकङ्गमयत्य'ग्रं वृक्षस्य रोहत' इति [7]श्रीर्वै राष्ट्रस्याग्रꣳ श्रियमेवैनꣳ राष्ट्रस्याग्रङ्गमयति '[8]प्रतिलामीति ते पिता गभे मुष्टिमतꣳसय'दिति विड्वै गभो राष्ट्रम्मुष्टी राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशङ्घातुकः ॥ ७ ॥ '[9]यद्धरिणो यवमत्ती'ति विड्वै यवो राष्ट्रꣳ हरिणो विशमेव राष्ट्रायाद्याङ्करोति तस्माद्राष्ट्री विशमत्ति 'न [10]पुष्टम्पशु मन्यत' इति तस्माद्राजा पशून्न पुष्यति '[11]शूद्रा यदर्य्यजारा *

(१) शु० य० सं० २३. २६। (२) शु० य० सं० २३. २६। (३) शु० य० सं० २३. २२। (४) शु० य० सं० २३. २२। (५) शु० य० सं० २३. २२।

† 'पस इति पसतेः स्पृशतिकर्मणः' ( निरु० ५. १६ ) इति यास्कः ।

(६) शु० य० सं० २३. २४। (७) शु० य० सं० २३. २४। (८) शु० य० सं० २३. २४। (९) शु० य० सं० २३. ३०।

(१०) शु० य० सं० २३. ३०। (११) शु० य० सं० २३. ३०।

* 'अर्यः स्वामिवैश्ययोः' ( पा० ३. १. १०३ ) इति निपातनादर्यो वैश्यो जार उपपतिर्यस्याः सा अर्यजारा ।

न पोषाय धनायती'ति तस्म्माद्वैशीपुत्त्रन्नाभिषिञ्चति ॥ ८ ॥ अप वा ऽएतेब्भ्यः प्प्राणाः क्क्रामन्ति । ये यज्ञेऽपूतां व्वाचं व्वदन्ति 'दधिक्क्राव्व्णो ऽअकारिष'मिति[3] सुरभिमतीमृचमन्ततोऽन्न्वाहुर्व्वाचमेव पुनते नैब्भ्यः प्प्राणा ऽअपक्क्रामन्ति ॥ ९ ॥

## द्वितीयाध्याये नवमं ब्राह्मणम् ॥ ९ ॥



[ अश्वशरीरे सूचीभिर्वितोदः ]

यदसिपथान्न्कल्प्पयन्ति । सेतुमेव तद्व सङ्क्रमणं य्यजमानः कुरुते स्वर्ग्गस्य लोकस्य समष्ट्यै ॥१॥ सूचीभिः कल्प्पयन्ति । व्विशो वै सूच्च्यो राष्ट्रमश्वमेधो व्विशञ्चैवास्म्मिन्न्राष्ट्रञ्च समीची दधति हिरण्मय्य्यो[4] भवन्ति तस्योक्तम्ब्राह्मणम् ॥ २ ॥ त्रय्यः सूच्च्यो भवन्ति । लोहमय्यो रजता हरिण्ण्यो दिशो वै लोहमय्योऽवान्तरदिशो रजता ऽऊर्द्ध्वा हरिण्ण्यस्ताभिरेवैनङ्कल्प्पयन्ति तिरश्चीभिश्चोर्द्ध्वाभिश्च बहुरूपा भवन्ति तस्म्माद्बहुरूपा दिशो नानारूपा भवन्ति तस्म्मान्नानारूपा दिशः ॥ ३ ॥

## द्वितीयाध्याये दशमं ब्राह्मणम् ॥ १० ॥



( ३ ) शु० य० सं० २३. ३२ ।

( ४ ) 'ग' 'ज' पुस्तकयोः "हिरण्यमय्यो" इति पाठः ।

[ परिपशव्याहुती ]

प्रजापतिरकामयत । महान्म्भूयान्त्स्यामिति स ऽएतावश्श्वमेधे महिमानौ ग्ग्रहावपश्श्यत्तावजुहोत्ततो वै स महान्म्भूयानभवत्स यः कामयेत महान्म्भूयान्त्स्यामिति स ऽएतावश्श्वमेधे महिमानौ ग्ग्रहौ जुहुयान्म्महान्हैव भूयान्म्भवति ॥ १ ॥ वपामभितो जुहोति । यजमानो वा ऽअश्श्वमेधो राजा महिमा राज्ज्येनैवैनमुभयतः परिगृह्णाति पुरस्तात्स्वाहाकृतयो वा ऽअन्न्ये देवा ऽउपरिष्ट्टात्स्वाहाकृतयोऽन्न्ये तानेवैतत्प्रीणाति 'स्वाहा देवेब्भ्यो देवेब्भ्यः स्वाहे'ति राज्ञा वपाम्परियजति ये चैवास्मिँल्लोके देवा य ऽउ चामुष्म्मिँस्तानेवैतत्प्रीणाति त ऽएनमुभये देवाः प्प्रीताः स्वर्ग्गँल्लोकमभिवहन्ति ॥ ३ ॥

द्वितीयाध्याये एकादशं ब्राह्मणम् ॥ ११ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ अश्वस्यावदानम् ]

प्रजापतेरक्ष्यश्श्वयत् । तत्परापतत्ततोऽश्श्वः समभवद्यदश्श्वयत्तदश्श्वस्याश्श्वत्वन्तद्देवा ऽअश्श्वमेधेनैव प्प्रत्यदधुरेष ह वै प्प्रजापतिः सर्व्वङ्करोति योऽश्श्वमेधेन यजते सर्व्व ऽएव भवति सर्व्वस्य वा ऽएषा प्प्रायश्चित्तिः सर्व्वस्य भेषजः सर्व्वं वा ऽएतेन पाप्प्मानन्देवा ऽअतरन्नपि वा ऽएतेन ब्ब्रह्महत्यामतरँस्तरति सर्व्वम्पाप्प्मानन्तरति ब्ब्रह्महत्यां

(१) शु० य० सं० ६. ११ ।

श्वोऽश्वमेधेन यजते ॥ १ ॥ उत्तरं वै तत्प्रजापतेरक्ष्यश्वयत् । तस्मादुत्तरतोऽश्वस्यावद्यन्ति दक्षिणतोऽन्येषाम्पशूनाम् ॥ २ ॥ वैतसः कटो भवति । अप्सुयोनिर्वा ऽअश्वोऽप्सुजा वेतसः स्वयैवैनं योन्या समर्द्धयति ॥ ३ ॥ चतुष्टोम स्तोमो भवति । सरद्धा ऽअश्वस्य सक्क्थ्याबृहत्तद्देवाश्चतुष्टोमेनैव स्तोमेन प्रत्यदधुर्यच्चतुष्टोम स्तोमो भवत्यश्वस्यैव सर्वत्वाय सर्वस्तोमोऽतिरात्र ऽउत्तममहर्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ४ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ वपाप्रचारः ]

परमेण वा ऽएष स्तोमेन जित्वा । चतुष्टोमेन कृतेनायानामुत्तरेऽहन्नेकविंशे प्रतिष्ठायाम्प्रतितिष्ठत्येकविंशात्प्रतिष्ठाया ऽउत्तरमहर्ऋतूनन्वारोहत्यृतवो वै पृष्ठान्यृतवः संवत्सर ऽऋतुष्वेव संवत्सरे प्रतितिष्ठति ॥ १ ॥ शक्वर्यः पृष्ठम्भवन्ति । अन्यदन्यच्छन्दोऽन्येऽन्ये वा ऽअत्र पशव ऽआलभ्यन्त ऽउतेव ग्राम्या ऽउतेवारण्या यच्छक्वर्यः पृष्ठम्भवन्त्यश्वस्यैव सर्वत्वायान्ये पशव ऽआलभ्यन्तेऽन्येऽन्ये हि स्तोमाः क्रियन्ते ॥ २ ॥ तदाहुः । नैते सर्वे पशवो यदजावयश्चारण्याश्चैते वै सर्वे पशवो यद्गव्या ऽइति गव्यानुत्तमेऽहन्नालभत

(१) "गव्या ऽउत्तमे०" इति 'ग' 'ज' पुस्तकयोः पाठः ।

ऽएते वै सर्वे पशवो यद्दव्याः सर्वानेव पशूनालभते वैश्वदेवा भवन्ति वैश्वदेवो वा ऽअश्वोऽश्वस्यैव सर्वत्वाय बहुरूपा भवन्ति तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नानारूपाः पशवः ॥ ३ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—०—

[ यूपैकविंशतिः ]

यत्तिस्रोऽनुष्टुभो भवन्ति । तस्मादश्वस्त्रिभिस्तिष्ठँस्तिष्ठति यच्चतस्रो गायत्र्यस्तस्मादश्वः सर्वैः पद्भिः प्रतिदधत्पलायते परमं वा ऽएतच्छन्दो यदनुष्टुप्परमोऽश्वः पशूनाम्परमश्चतुष्टोम स्तोमानाम्परमेणैवैनम्परमताङ्गमयति ॥ १ ॥ शक्वर्यः पृष्ठम्भवन्ति । अन्यदन्यच्छन्दोऽन्येऽन्ये हि स्तोमाः क्रियन्ते यच्छक्वर्यः पृष्ठम्भवन्त्यश्वस्यैव सर्वत्वाय ॥ १ ॥ एकविंशमग्निष्टोमहर्भवति । असौ वा ऽआदित्य ऽएकविंशः सोऽश्वमेधः स्वेनैवैनꣳ स्तोमेन स्वायान्देवतायाम्प्रतिष्ठापयति ॥ ३ ॥ वामदेव्यम्मैत्रावरुणसाम भवति । प्रजापतिर्वै वामदेव्यम्प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयति ॥४॥ पार्थुरश्मम्ब्रह्मसाम भवति । रश्मिना वा ऽअश्वो यत ऽईश्वरो वा ऽअश्वोऽयतोऽधृतोऽप्रतिष्ठितः परां परावतङ्गन्तोर्यत्पार्थुरश्मम्ब्रह्मसाम भवत्यश्वस्यैव धृत्यै ॥ ५ ॥ सङ्कृत्यच्छावाकसाम भवति । उत्सन्नयज्ञ ऽइव वा ऽएष यदश्वमेधः किं वा ह्येतस्य क्रियते किं वा न यत्स-

ङ्क्त्यच्छावाकसाम भवत्त्यश्श्वस्यैव सर्वत्त्वाय सर्वस्तोमोऽतिरात्र ऽउत्तममहर्ब्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्वमश्श्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ६ ॥ एकविꣳशोऽग्निर्ब्भवति । एकविꣳश स्तोम ऽएकविꣳशतिर्य्यूपा यथा वा ऽऋषभा वा वृषाणो वा सꣳस्फुरेरन्नेवमेते स्तोमाः समृच्छन्ते यदेकविꣳशास्तान्न्यत्त्समर्प्पयेदार्त्तिमाच्छेंद्यजमानो हन्न्येतास्य यज्ञः ॥ ७ ॥ द्वादश ऽएवाग्निः स्यात् । एकादश यूपा यद्द्वादशोऽग्निर्ब्भवति द्वादश मासाः सँवत्सरः सँवत्सरमेव यज्ञमाप्नोति यदेकादश यूपा विराड्वा ऽएषा सम्मीयते यदेकादशिनी तस्यै य ऽएकादश स्तन ऽएवास्यै स दुह ऽएवैनान्तेन ॥ ८ ॥ तदाहुः । यद्द्वादशोऽग्निः स्यादेकादश यूपा यथा स्थूरिणा यायात्तादृक्तदित्येकविꣳश ऽएवाग्निर्ब्भवत्त्येकविꣳश स्तोम ऽएकविꣳशतिर्य्यूपास्तद्यथा प्प्रष्टिभिर्य्यायात्तादृक्तत् ॥ ९ ॥ शिरो वा ऽएतद्यज्ञस्य यदेकविꣳशः । यो वा ऽअश्श्वमेधे त्त्रीणि शीर्षाणि वेद शिरो ह राज्ञाम्भवत्त्येकविꣳशोऽग्निर्ब्भवत्त्येक विꣳश स्तोम ऽएकविꣳशतिर्य्यूपा ऽएतानि वा ऽअश्श्वमेधे त्त्रीणि शीर्षाणि तानि य ऽएवं वेद शिरो ह राज्ञाम्भवति यो वा ऽअश्श्वमेधे तिस्रः ककुदो वेद ककुद्ध राज्ञाम्भवत्त्यकविꣳशोऽग्निर्ब्भवत्त्येकविꣳश स्तोम ऽएकविꣳशतिर्य्यूपा ऽएता वा ऽअश्श्वमेधे तिस्रः ककुदस्ता य ऽएवं वेद ककुद्ध राज्ञाम्भवति ॥ १० ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ अश्वस्य लोहितश्रपणादि ]

सर्वाभ्यो वै देवताभ्योऽश्व ऽआलभ्यते । यत्प्राजापत्यङ्कुर्य्याद्या देवता ऽअपिभागास्ता भागधेयेन व्यर्द्धयेच्छागन्दद्भिरवकान्दन्तमूलैरि(१)त्याज्यमवदाना कृत्वा प्रख्यायन्देवताभ्य ऽआहुतीर्ज्जुहोति या ऽएव देवता ऽअपिभागास्ता भागधेयेन समर्द्धयत्यरण्येऽनूच्यान्हुत्वा द्यावापृथिव्यामुत्तमामाहुतिञ्जुहोति द्यावापृथिव्योर्वै सर्वा देवताः प्रतिष्ठितास्ता ऽएवैतत्प्रीणाति देवासुराः संयत्ता ऽआसन् ॥ १ ॥ तेऽब्रुवन् । अग्नयः स्विष्टकृतोऽश्वस्य वयमुद्धारमुद्धरामहै तेनासुरानभिभविष्याम ऽइति ते लोहितमुदहरन्त भ्रातृव्याभिभूत्यै यत्स्विष्टकृद्भ्यो लोहितञ्जुहोति भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य ऽएवं वेद ॥ २ ॥ गोमृगकण्ठेन प्रथमामाहुतिञ्जुहोति । पशवो वै गोमृगा रुद्रः स्विष्टकृत्पशूनेव रुद्रादन्तर्द्दधाति तस्माद्यत्रैषाश्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः पशूनभिमन्यते ॥ ३ ॥ अश्वशफेन द्वितीयामाहुतिञ्जुहोति । पशवो वा ऽएकशफा रुद्रः स्विष्टकृत्पशूनेव रुद्रादन्तर्द्दधाति तस्माद्यत्रैषाश्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः पशूनभिमन्यते ॥ ४ ॥ अयस्मयेन चरुणा तृतीयामाहुतिञ्जुहोति । आ(२)यास्या वै प्रजा रुद्रः स्विष्टकृत्प्रजा ऽएव रुद्रादन्तर्द्दधाति तस्माद्य-

(१) शु० य० सं० २५. १ ।
(२) "आयस्यो" इति 'ग' 'ज' पुस्तकयोः पाठः ।

त्रैषाऽश्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः प्रजा ऽअभिमन्न्यते ॥ ५ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

—०—

[ अश्वमेधेनापमृत्युनिरासः ]

सर्वेषु वै लोकेषु । मृत्यवोऽन्न्वायत्तास्तेब्भ्यो यदाहुतीर्न्न जुहुयाल्लोके लोक ऽएनम्मृत्युर्व्विन्देद्यन्न्मृत्युब्भ्य ऽआहुतीर्ज्जुहोति लोके लोक ऽएव मृत्युमपजयति ॥ १ ॥ तदाहुः । यदमुष्म्मै स्वाहामुष्म्मै स्वाहेति जुह्वत्सञ्चक्षीत बहुम्मृत्युममित्रङ्कुर्व्वीत मृत्यव ऽआत्मानमपिदध्यादिति 'मृत्यवे[1] स्वाहे'त्येकस्म्मा ऽएवैकामाहुतिञ्जुहोत्येको ह वा ऽअमुष्मिँल्लोके मृत्युरशनायैव तमेवामुष्मिँल्लोकेऽपजयति ॥२॥ [ अर्धः प्रपाठकः कण्डिकाः ५९ ] 'ब्रह्महत्यायै[2] स्वाहे'ति द्वितीयामाहुतिञ्जुहोति । अमृत्युर्ह वा ऽअन्न्यो ब्ब्रह्महत्यायै मृत्युरेष ह वै साक्षान्न्मृत्युर्यद्ब्रह्महत्या साक्षादेव मृत्युमपजयति ॥ ३ ॥ एताᳬ ह वै मुण्डिभ ऽऔदन्न्यः । ब्रह्महत्यायै प्प्रायश्चित्तिं व्विदाञ्चकार यद्ब्रह्महत्याया ऽआहुतिञ्जुहोति मृत्युमेवाहुत्या तर्प्पयित्वा परिपाणङ्कृत्वा ब्ब्रह्मघ्घ्ने भेषजङ्करोति तस्म्माद्यस्यैषाऽश्वमेध ऽआहुतिर्हूयतेऽपि योऽस्यापरीषु प्प्रजायाम्ब्राह्मणᳬ हन्ति तस्म्मै भेषजङ्करोति ॥ ४ ॥

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

—०—

(१) शु० य० सं० ३९.१३। (२) शु० य० सं० ३९.१३।

[ अश्वस्तोमीयहोमः ]

अश्श्वस्य वा ऽआलब्धस्य । मेध ऽउदक्क्रामत्तदश्श्वस्तोमीयमभवद्यदश्श्वस्तोमीयञ्जुहोत्त्यश्श्वमेव मेधसा समर्द्धयति ॥ १ ॥ आज्ज्येन जुहोति । मेधो वा ऽआज्ज्यम्मेधोऽश्श्वस्तोमीयम्मेधसैवास्मिँस्तन्मेधो दधात्त्याज्ज्येन जुहोत्त्येतद्वै देवानाम्प्रियन्धाम यदाज्ज्यम्प्रियेणैवैनान्धाम्म्ना समर्द्धयति ॥ २ ॥ अश्श्वस्तोमीयꣳ हुत्त्वा द्विपदा जुहोति । अश्श्वो वा ऽअश्श्वस्तोमीयम्पुरुषो द्विपदा द्विपाद्वै पुरुषो द्विप्प्रतिष्ठुस्तदेनम्प्रतिष्ठुया समर्द्धयति ॥ ३ ॥ तदाहुः । अश्श्वस्तोमीयम्पूर्वꣳ होतव्व्याꣳ३ द्विपदा३ ऽइति पशवो वा ऽअश्श्वस्तोमीयम्पुरुषो द्विपदा यदश्श्वस्तोमीयꣳ हुत्त्वा द्विपदा जुहोति तस्म्मात्पुरुष ऽउपरिष्ट्टात्पशून्नधितिष्ठुति ॥ ४ ॥ षोडशाश्श्वस्तोमीया जुहोति । षोडशकला वै पशवः सा पशूनाम्मात्त्रा पशूनेव मात्त्रया समर्द्धयति यत्कनीयसीर्व्वा भूयसीर्व्वा जुहुयात्पशून्मात्त्रया व्व्यर्द्धयेत्षोडश जुहोति षोडशकला वै पशवः सा पशूनाम्मात्त्रा पशूनेव मात्त्रया समर्द्धयति नान्न्यामुत्तमामाहुतिञ्जुहोति यदन्न्यामुत्तमामाहुतिञ्जुहुयात्प्रतिष्ठायै च्च्यवेत द्विपदा ऽउत्तमा जुहोति प्प्रतिष्ठा वै द्विपदाः प्प्रत्त्येव तिष्ठति 'जुम्बकाय स्वाहे'त्त्यवभृथ ऽउत्तमामाहुतिञ्जुहोति व्वरुणो वै जुम्बकः साक्षादेव व्वरुणमवयजते शुक्क्लस्य खलतेर्व्विक्क्लिधस्य पिङ्गाक्षस्य मूर्द्धनि जुहोत्त्येतद्वै व्वरुणस्य रूपꣳ

(१) शु० य० सं० २५. ९।

रूपेणैव वरुणमवयजते ॥ ५ ॥ द्वादश ब्रह्मौदनानुत्थाय निर्वपति । द्वादशभिर्वेष्टिभिर्यजते तदाहुर्यज्ञस्य वा ऽएतद्रूपं यदिष्टयो यदिष्टिभिर्यजेतोपनामुक ऽएनं यज्ञः स्यात्पापीयाँस्तु स्याद्यातयामानि वा ऽएतदीजानस्य च्छन्दाᳬसि भवन्ति तानि किमेतावदाशु प्प्रयुञ्जीत सर्वा वै सᳬस्थिते यज्ञे वागाप्यते सात्राप्ता यातयाम्नी भवति क्रूरीकृतेव हि भवत्यरुष्कृता वाग्वै यज्ञस्तस्मान्न प्प्रयुञ्जीतेति ॥ ६ ॥ द्वादशैव ब्रह्मौदनानुत्थाय निर्वपेत् । प्रजापतिर्वा ऽओदनः प्प्रजापतिः सँवत्सरः प्प्रजापतिर्यज्ञः सँवत्सरमेव यज्ञमाप्नोत्युपनामुक ऽएनं यज्ञो भवति न पापीयान्भवति ॥ ७ ॥

तृतीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

---

[ अश्वमेधमहिमा ]

एष वै प्प्रभूर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्प्रभूतम्भवति ॥ १ ॥ एष वै विभूर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव विभूतम्भवति ॥ २ ॥ एष वै व्यष्टिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव व्यष्टम्भवति ॥ ३ ॥ एष वै विधृतिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव विधृतम्भवति ॥ ४ ॥ एष वै व्यावृत्तिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव व्यावृत्तम्भवति ॥ ५ ॥ एष वा ऽऊर्ज्जस्वान्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेवोर्ज्जस्वद्भवति ॥ ६ ॥ एष वै

पयस्वान्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव पयस्वद्भवति ॥ ७ ॥ एष वै ब्ब्रह्मवर्च्चसी नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ ब्ब्राह्मणो ब्ब्रह्मवर्च्चसी जायते ॥ ८ ॥ एष वा ऽअतिव्व्याधी नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ राजन्न्योऽतिव्व्याधी जायते ॥ ९ ॥ एष वै दीर्ग्घो नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ दीर्ग्घारण्ण्यञ्जायते ॥ १० ॥ एष वै क्क्लृप्प्तिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव क्क्लृप्तम्भवति ॥ ११ ॥ एष वै प्प्रतिष्ट्ठा नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्प्रतिष्ट्ठितम्भवति ॥ १२ ॥

तृतीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

—o—

[ अश्वमेधप्रायश्चित्तम् ]

अथातः प्प्रायश्च्चित्तीनाम् । यद्यश्श्वो व्वडवाᳬ स्कन्देद्वायव्व्यम्पयोऽनुनिर्व्वपेद्वायुर्वै रेतसां व्विकर्त्ता प्प्राणो वै व्वायुः प्प्राणो हि रेतसां व्विकर्त्ता रेतसैवास्मिँस्तद्रेतो दधाति ॥ १ ॥ अथ यदि स्त्रामो व्विन्देत् । पौष्ण्णञ्चरुमनुन्निर्व्वपेत्पूषा वै पशूनामीष्ट्टे स यस्यैव पशवो यः पशूनामीष्ट्टे तमेवैतत्प्रीणात्यगदो हैव भवति ॥ २ ॥ अथ यद्यक्षतामयो व्विन्देत् । व्वैश्श्वानरन्द्वादशकपालम्भूमिकपालम्पुरोडाशमनुनिर्व्वपेदियं व्वै व्वैश्श्वानर ऽइमामेवैतत्प्रीणात्यगदो हैव भवति ॥ ३ ॥ अथ यद्यक्ष्यामयो व्विन्देत् । सौर्य्यञ्चरुमनुनिर्व्वपेत्सूर्य्यो वै प्प्रजानाञ्चक्षुर्यदा ह्येवैष ऽउ-

देत्त्यथेदꣳ सर्वञ्चरति चक्षुषैवास्मिँस्तच्चक्षुर्दधाति स यच्च-रुर्भवति चक्षुषा ह्ययमात्मा चरति ॥ ४ ॥ अथ यद्युदके म्म्रियेत । व्वारुणं य्यवमयञ्चरुमनुनिर्व्वपेद्वरुणो वा ऽएतं गृह्णाति योऽप्प्सु म्म्रियते सा यैवैनन्देवता गृह्णाति तामे-वैतत्प्रीणाति सास्स्मै प्प्रीताव्ययमालम्भायानुमन्न्यते तया-नुमतमालभते स यद्यवमयो भवति व्वरुण्ण्या हि यवाः ॥ ५ ॥ अथ यदि नश्श्येत् । त्रिहविषमिष्टिमनुनिर्व्वपेद्-द्यावापृथिव्व्यमेककपालम्पुरोडाशं व्वायव्व्यम्पयः सौर्य्यञ्चरुं यद्वै किञ्च नश्श्यत्त्यन्तरैव तद्द्यावापृथिवी नश्श्यति तद्वायुरुपवात्त्यादित्त्योऽभितपति नैताब्भ्यो देवताब्भ्य ऽऋते किञ्चन नश्श्यति सैषा पृथगेव नष्टवेदनी स यद्यस्याप्प्य-न्न्यन्नश्श्येदेतयैव यजेतानु हैवैनद्विन्दत्त्यथ यद्यमित्त्रा ऽअश्श्वं व्विन्देरन्न्यदि वा म्म्रियेत यदि वाप्प्स्वन्न्यमानीय प्प्रोक्षेयुः सैव तत्र प्प्रायश्चित्तिः ॥ ६ ॥

तृतीयाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥

---

[ अश्वमेधारम्भकालादि ]

प्रजापतिरकामयत । सर्व्वान्न्कामानाप्प्नुयाꣳ सर्व्वा व्व्यष्टीर्व्व्यश्नुवीयेति स ऽएतमश्श्वमेधन्त्रिरात्त्रं यज्ञ-क्क्रतुमपश्श्यत्तमाहरत्तेनायजत तेनेष्ट्वा सर्व्वान्न्कामानाप्प्नो-त्सर्व्वा व्व्यष्टीर्व्व्यश्नुत सर्व्वान्ह वै कामानाप्प्नोति सर्व्वा व्व्यष्टीर्व्व्यश्नुते योऽश्श्वमेधेन यजते ॥ १ ॥ तदाहुः ।

कस्मिन्नृतावभ्यारम्भ इति ग्ग्रीष्मेऽभ्यारभेतेत्यु हैक आहुर्ग्ग्रीष्मो वै क्षत्रियस्यर्त्तुः क्षत्रिययज्ञ उ वा एष यदश्वमेध इति ॥ २ ॥ तद्वै वसन्त एवाभ्यारभेत। वसन्तो वै ब्ब्राह्मणस्यर्त्तुर्य्य उ वै कश्च यजते ब्ब्राह्मणी-भूयेवैव यजते तस्माद्वसन्त एवाभ्यारभेत ॥ ३ ॥ सा यासौ फाल्गुनी पौर्णमासी भवति। तस्यै पुरस्तात्षडहे वा सप्ताहे वर्त्विज उपसमायन्त्यद्ध्वर्य्युश्च होता च ब्ब्रह्मा चोद्गाता चैतान्न्वा अन्न्वन्न्य ऋत्विजः ॥ ४ ॥ तेभ्योऽद्ध्वर्य्युश्चातुष्प्राश्यम्ब्रह्मौदनन्निर्व्वपति। तस्योक्तम्ब्रा-ह्मणञ्चतुरः पात्राँश्चतुरोऽञ्जलीँश्चतुरः प्प्रसृतान्द्वादशविध-न्द्वादश मासाः सँव्वत्सरः सर्व्वः सँव्वत्सरः सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ ५ ॥ तमेते चत्वार ऋत्विजः प्प्राश्नन्ति। तेषामुक्तम्ब्राह्मणन्तेभ्यश्चत्वारि सहस्राणि ददाति सर्व्वं वै सहस्रः सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै चत्वारि च सुवर्ण्णानि शतमानानि हि-रण्ययानि तस्यो एवोक्तम् ॥ ६ ॥ अथास्मा अद्ध्वर्य्यु-र्न्निष्कम्प्रतिमुञ्चन्न्वाचयति *। '[1]तेजोऽसि शुक्रममृत'-मिति तेजो वै शुक्रममृतः हिरण्यन्तेज एवास्मिन्-च्छुक्रममृतन्दधा'[2]त्यायुष्पा आयुर्म्मे पाही'त्यायुरेवा-स्मिन्दधात्यथैनमाह व्वाचं यच्छेति व्वाग्वै यज्ञो यज्ञस्यै-

---

* 'निष्कं प्रतिमुञ्चन्वाचयति तेजोऽसीति' (का० श्रौ० सू० २०. १. ९)। चतुःसुवर्ण-निर्मित आभरणविशेषो निष्कः।

(१) शु० य० सं० २२. १। (२) शु० य० सं० २२. १।

वाभ्यारम्भाय ॥७॥ चतस्रो जाया ऽउपक्कॢप्ता भवन्ति । महिषी[1] वावाता परिवृक्ता पालागली सर्व्वा निष्किंण्यो[2]ऽलङ्कृता मिथुनस्यैव सर्वत्वाय ताभिः सहाग्न्यगारम्प्रपद्यते पूर्व्वया द्वारा यजमानो दक्षिणया पत्न्यः ॥ ८ ॥ सायमाहुत्याᳬं हुतायाम् । जघनेन गार्हपत्यमुदङ्वावातया सह संविशति तदेवापीतराः संविशन्ति सोऽन्तरोरू ऽअसंवर्त्तमानः शेतेऽनेन तपसा स्वस्ति सँवत्सरस्योदृचः समश्नवा ऽइति ॥ ९ ॥ प्रातराहुत्याᳬं हुतायाम् । अद्ध्वर्युः पूर्णाहुतिञ्जुहोति सर्वं वै पूर्णᳬं सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै तस्यां वरेण वाचं विसृजते * वरन्ददामि ब्ब्रह्मण ऽइति सर्वं वै वरः सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ १० ॥ † अथ योऽस्य निष्कः प्रतिमुक्तो भवति । तमद्ध्वर्य्यवे ‡ ददात्यद्ध्वर्य्यवे ददमृतमायुरात्मन्धत्तेऽमृतᳬं ह्यायुर्हिरण्यम् ॥ ११ ॥ अथाग्नेयीमिष्टिन्निर्व्वपति । पथश्च कामाय यज्ञमुखस्य चाच्छम्बट्कारायाथो ऽअग्निमुखा ऽउ वै सर्व्वा देवताः सर्व्वे कामा ऽअश्वमेधे मुखतः सर्व्वान्देवान्प्रीत्वा सर्व्वाङ्कामानाप्नवानीति ॥ १२ ॥ तस्यै पञ्चदश सामिधेन्यो भवन्ति । पञ्चदशो वै वज्रो वीर्यं वज्रो वज्रेणैवैतद्वीर्य्येण यजमानः

(१) महिषी = प्रथमपरिणीता स्त्री । वावाता = वल्लभा । परिवृक्ता=अवल्लभा । पालागली=दूतपुत्री

( २ ) 'निष्किन्न्यो०' इति 'ग' 'ज' पुस्तकयोः पाठः ।

* तथा चोक्तं सूत्रकृता—'आ वरदानाद्वाग्यमनम्' ( का० श्रौ० सू० २०।१।११ ) ।

† शतम् ६६०० ।

‡ 'अध्वर्यवे च प्रतिमुक्तं निष्कम्' ( का० श्रौ० सू० २०।१।२० ) ।

पुरस्तात्पाप्मानमपहते व्वार्त्रघ्नावाज्यभागौ पाप्मा वै व्वृत्रः पाप्मनोऽपहत्या 'ऽअग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाᳬं रेताᳬंसि जिन्वति', 'भुवो यज्ञस्य रजसश्च नेता'ऽइत्युपाᳬंशु हविषो याज्यानुवाक्ये मूर्द्धन्वत्यन्न्या भवति सद्वत्यन्न्यैष वै मूर्द्धा य ऽएष तपत्येतस्यैवावरुद्ध्या ऽअथ यत्सद्वती सदेवावरुन्द्धे विराजौ सँय्याज्ये सर्व्वदेवत्यं व्वा ऽएतच्छन्दो यद्विराट् सर्व्वे कामा ऽअश्वमेधे सर्व्वान्देवान्प्प्रीत्वा सर्व्वान्कामानाप्नवानीति हिरण्यन्दक्षिणा सुवर्ण्णᳬं शतमानन्तस्योक्तम्ब्राह्मणम् ॥ १३ ॥ अथ पौष्णीन्निर्व्वपति । पूषा वै पथीनामधिपतिरश्वायैवैतत्स्वस्त्ययनङ्करोत्यथो ऽइयं व्वै पूषेमामेवास्म्मा ऽएतद्गोप्त्रीङ्करोति तस्य हि नार्त्तिरस्ति न ह्वला यमियमङ्गङ्गोपायतीमामेवास्म्मा ऽएतद्गोप्त्रीङ्करोति ॥ १४ ॥ तस्यै सप्तदश सामिधेन्न्यो भवन्ति । सप्तदशो वै प्प्रजापतिः प्प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै व्वृधन्न्वन्तावाज्यभागौ यजमानस्यैव व्वृद्ध्यै 'पूषँस्तव व्व्रते व्वयम्पथस्पथः परिपतिं व्वचस्या'ऽइत्युपाᳬंशु हविषो याज्यानुवाक्ये व्व्रतवत्यन्न्या भवति पथन्न्वत्यन्न्या व्वीर्य्यं व्वै व्व्रतं व्वीर्य्यस्याप्त्यै व्वीर्य्यस्यावरुद्ध्या ऽअथ यत्पथन्न्वत्यश्वायैवैतत्स्वस्त्ययनङ्करोत्यनुष्टुभौ सँय्याज्ये व्वाग्वा ऽअनुष्टुब्वाग्वै प्प्रजापतिः प्प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै व्वासः शतन्दक्षिणा रूपं व्वा ऽएतत्पुरुषस्य यद्वासस्तस्म्माद्यमेव कञ्च सुवाससमाहुः को न्वयमिति रूपसमृद्धो हि भवति रूपेणैवैनᳬं

(१) शु० य० सं० १३. १४–१५। (२) शु० य० सं० ३४. ४१–४२।

समर्द्धयति शतम्भवति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं वीर्य्यमात्मन्धत्ते ॥ १५ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ ब्राह्मणद्वयेन सावित्र्य इष्टयः, पारिप्लवाशंसनादि च निरूप्यन्ते ]

एतस्यान्तायमानायाम् । अश्श्वन्निक्त्वोदानयन्ति यस्मिन्त्सर्वाणि रूपाणि भवन्ति यो वा जवसमृद्धः सहस्रार्हम्पूर्व्यं रुयो दक्षिणायान्धुर्य्यप्रतिधुरः ॥ १ ॥ तद्यत्सर्वरूपो भवति । सर्वं वै रूपः सर्वमश्श्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्या ऽअथ यज्जवसमृद्धो वीर्य्यं वै जवो वीर्य्यस्याप्त्यै वीर्य्यस्यावरुद्ध्या ऽअथ यत्सहस्रार्हः सर्वं वै सहस्रः सर्वमश्श्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्या ऽअथ यत्पूर्व्य ऽएष वा ऽअपरिमितं वीर्य्यमभिवर्द्धते यत्पूर्व्योऽपरिमितस्यैव वीर्य्यस्यावरुद्ध्या ऽअथ यद्दक्षिणायान्धुर्य्यप्रतिधुर ऽएष वा ऽएष य ऽएष तपति न वा ऽएतङ्कश्चन प्रतिप्रतिरेतस्यैवावरुद्ध्यै ॥ २ ॥ तदु होवाच भाल्लबेयः । द्विरूप ऽएवैषोऽश्श्वः स्यात्कृष्णसारङ्गः प्रजापतेर्वा ऽएषोऽक्ष्णः समभवद्द्विरूपं वा ऽइदञ्चक्षुः शुक्लञ्चैव कृष्णञ्च तदेनᳪ स्वेन रूपेण समर्द्धयतीति ॥ ३ ॥ अथ होवाच सात्ययज्ञिः । त्रिरूप ऽएवैषोऽश्श्वः स्यात्तस्य कृष्णः पूर्वार्द्धः शुक्लोऽपरार्द्धः कृत्तिकाञ्जिः पुरस्तात्तद्यत्कृष्णः पूर्वार्द्धो भवति यदेवेदङ्कृष्णमक्ष्णस्तदस्य तदथ यच्छुक्लोऽपरार्द्धो यदेवेदᳪ शुक्लमक्ष्णस्तदस्य तदथ यत्कृत्ति-

काञ्जिः पुरस्तात्सा कनीनका स ऽएव रूपसमृद्धोऽतो यतमोऽस्योपकल्प्येत बहुरूपो वा द्विरूपो वा त्रिरूपो वा कृत्तिकाञ्जिस्तमालभेत जवेन ह्येव समृद्धः स्यात् ॥ ४ ॥ तस्यैते पुरस्ताद्रक्षितार ऽउपक्लृप्ता भवन्ति । राजपुत्राः कवचिनः शतꣳ राजन्न्या निषङ्गिणः शतꣳ सूतग्ग्रामण्याम्पुत्रा ऽइषुपर्षिणः शतं क्षात्रसङ्ग्रहीतॄणाम्पुत्रा दण्डिनः शतमश्श्वशतन्निरष्टन्निरमणं ह्यस्मिन्नेनमपिसृज्य रक्षन्ति ॥ ५ ॥ अथ सावित्रीमिष्टिन्निर्वपति । सवित्रे प्प्रसवित्रे द्वादशकपालम्पुरोडाशꣳ सविता वै प्प्रसविता सविता म ऽइमं यज्ञम्प्रसुवादिति ॥ ६ ॥ तस्यै पञ्चदश सामिधेन्न्यो भवन्ति । वार्त्रघ्नावाज्यभागौ 'य ऽइमा विश्श्वा जातान्या देवो यातु सविता सुरत्न' ऽइत्युपाꣳशु हविषो याज्यानुवाक्क्ये विराजौ सँय्याज्ये हिरण्यन्दक्षिणा सुवर्णꣳ शतमानन्तस्योक्तम्ब्राह्मणम् ॥ ७ ॥ तस्यै प्प्रयाजेषु तायमानेषु । ब्ब्राह्मणो वीणागाथी दीक्षणत ऽउत्तरमन्द्रामुदाघ्घ्नँस्तिस्रः स्वयꣳ सम्भृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तम्ब्राह्मणम् ॥८॥ अथ द्वितीयान्निर्वपति । सवित्र ऽआसवित्रे द्वादशकपालम्पुरोडाशꣳ सविता वा ऽआसविता सविता म ऽइमं यज्ञमासुवादिति [ ❀ काण्डस्यार्धम् २१६] ॥९॥ तस्यै सप्तदश सामिधेन्न्यो भवन्ति । सद्वन्तावाज्यभागौ सदेवावरुन्द्धे 'विश्श्वानि देव सवितः' 'स घा नो

( १ ) ऋ० सं० ४. ४. २६ ।

* इयं काण्डार्धसंख्याऽत्र 'क' पुस्तक एवास्ति ।

( २ ) ऋ० सं० ४. ४. २६ । ( ३ ) ऋ० सं० ५. ४. १२ ।

देवꣳ सविता सहावे'त्युपाꣳशु हविषो याज्यानुवाक्ये ऽअनुष्टुभौ सँय्याज्ये रजतꣳ हिरण्यन्दक्षिणा नानारूपताया ऽअथो ऽउत्क्रमायानपक्रमाय शतमानम्भवति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते ॥१०॥ तस्यै प्प्रयाजेषु तायमानेषु । ब्ब्राह्मणो व्वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाघ्नँस्तिस्रः स्वयꣳ सम्भृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तम्ब्राह्मणम् ॥ ११ ॥ अथ तृतीयान्निर्व्वपति । सवित्रे सत्यप्प्रसवाय द्वादशकपालम्पुरोडाशमेष ह वै सत्यः प्प्रसवो यः सवितुः सत्येन मे प्प्रसवेनेमं य्यज्ञम्प्रसुवादिति ॥ १२ ॥ तस्यै सप्तदशैव सामिधेन्न्यो भवन्ति । रयिमन्तावाज्यभागौ व्वीर्य्यं व्वै रयिर्व्वीर्य्यस्याप्त्यै व्वीर्य्यस्यावरुद्ध्या '(१)ऽआ विश्वदेवꣳ सत्पति''न्न (२)प्प्रेमिये सवितुर्दैव्व्यस्य तदि'त्युपाꣳशु हविषो याज्यानुवाक्ये नित्ये सँय्याज्ये नेद्यज्ञपथादयानीति क्लृप्त ऽएव यज्ञेऽन्ततः प्प्रातितिष्ठति त्रिष्टुभौ भवत ऽइन्द्रि(३)यं व्वै व्वीर्य्यन्त्रिष्टुबिन्द्रियस्यैव व्वीर्य्यस्यावरुद्ध्यै हिरण्यन्दक्षिणा सुवर्णꣳ शतमानन्तस्योक्तम्ब्राह्मणम् ॥ १३ ॥ तस्यै प्प्रयाजेषु तायमानेषु । ब्ब्राह्मणो व्वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाघ्नँस्तिस्रः स्वयꣳ सम्भृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तम्ब्राह्मणम् ॥ १४ ॥ एतस्याꣳ सꣳस्थितायाम् । उपोत्थायाद्ध्वर्य्युश्च यजमानश्चाश्वस्य

---

( १ ) ऋ० सं० ४. ४. २६ । ( २ ) ऋ० सं० ३. ८. ५ । ( ३ ) 'ग' 'ज' पुस्तकयोः 'इन्द्रे वै' इति पाठः ।

दक्षिणे कर्ण्ण ऽआजपतो 'विभूर्म्मात्रा प्प्रभूः पित्रेति तस्योक्तम्ब्राह्मणमथैनमुदश्वम्प्राञ्चम्प्रसृजत ऽएषा ह्योभयेषान्देवमनुष्ष्याणान्दिग्ग्यदुदीची प्प्राची स्वायामेवैनन्तद्दिशि धत्तो न वै स्व ऽआयतने प्प्रतिष्ठितो रिष्ष्यत्त्यरिष्ट्यै ॥ १५ ॥ स ऽआह 'देवा ऽआशापालाः । एतन्देवेब्भ्योऽश्वम्मेधाय प्प्रोक्षितः रक्षते'त्युक्ता मानुषा ऽआशापाला ऽअथैते देवा ऽआप्प्याः साद्ध्या ऽअन्न्वाद्ध्या मरुतस्तमेत ऽउभये देवमनुष्ष्याः संविदाना ऽअप्प्रत्त्यावर्त्तयन्तः सँव्वत्सरः रक्षन्ति तद्यन्न प्प्रत्त्यावर्त्तयन्त्येष व्वा ऽएष य ऽएष तपति क ऽउ ह्येतमर्हति प्प्रत्त्यावर्त्तयितुं रुयद्धयेनम्प्रत्त्यावर्त्तयेयुः परागेवेदः सर्व्वंᳺ स्यात्तस्म्मादप्प्रत्त्यावर्त्तयन्तो रक्षन्ति ॥ १६ ॥ स ऽआहाशापालाः । ये व्वा ऽएतस्योदृचङ्गमिष्ष्यन्ति राष्ट्रन्ते भविष्ष्यन्ति राजानो भविष्ष्यन्त्यभिषेचनीया ऽअथ य ऽएतस्योदृचन्न गमिष्ष्यन्त्त्यराष्ट्रन्ते भविष्ष्यन्त्यराजानो भविष्ष्यन्ति राजन्न्या व्विशोऽनभिषेचनीयास्तस्म्मान्न्मा प्प्रमदत स्नात्वाच्चैवैनमुदकान्निरुन्धीद्ध्वं व्वडवाब्भ्यश्च ते यद्यद्ब्राह्मणजातमुपनिगच्छेत तत्तत्पृच्छेत ब्ब्राह्मणाः कियद्यूयमश्वमेधस्य वित्थेति ते ये न विद्युर्ज्जिनीयात तान्त्सर्व्वं व्वा ऽअश्वमेधः सर्व्वस्यैष न वेद यो ब्ब्राह्मणः सन्नश्वमेधस्य न वेद सोऽब्ब्राह्मणो ज्येय ऽएव स पानङ्करवाथ खादन्निवपाथाथ यत्किञ्च जनपदे कृतान्नः सर्व्वं

(१) शु० य० सं० २२. १९। (२) शु० य० सं० २२. १९।

वस्तत्सुतन्तेषाᳬं रथकारकुल * ऽएव वो वसतिस्तद्ध्यश्व-
स्यायतनमिति ॥ १७ ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या ॥ ११७ ॥

प्रमुच्याश्वन्दक्षिणेन वेदिम् । हिरण्मयङ्कशिपूप-
स्तृणाति तस्मिन्होतोपविशति दक्षिणेन होतारꣳ हिर-
ण्मये कूर्चे † यजमानो दक्षिणतो ब्रह्मा चोद्गाता च
हिरण्मययोः कशिपुनोः ‡ पुरस्तात्प्रत्यङ्ङध्वर्युर्हिरण्मये
वा कूर्चे हिरण्मये वा फलके ॥ १ ॥ समुपविष्टेष्वध्व-
र्युः सम्प्रेष्यति । होतर्भूतान्याचक्ष्व भूतेष्विमं यज-
मानमध्यूहेति सम्प्रेषितो होताध्वर्युमामन्त्रयते पारिप्लव-
माख्यानमाख्यास्यन्नध्वर्यविति हवै होतरित्यध्वर्युः ॥ २ ॥
मनुर्वैवस्वतो राजेत्याह । तस्य मनुष्या विशस्त ऽइम
ऽआसत ऽइत्यश्रोत्रिया गृहमेधिन ऽउपसमेता भवन्ति
तानुपदिशत्यृचो वेदः सोऽयमित्यृचाᳬं सूक्तं व्याचक्षाण
ऽइवानुद्रवेद्वीणागणगिन ऽउपसमेता भवन्ति तानध्वर्युः
सम्प्रेष्यति वीणागणगिन ऽइत्याह पुराणैरिमं यजमानꣳ
राजभिः साधुकृद्भिः सङ्गायतेति तन्ते तथा सङ्गायन्ति
तद्यदेनमेवꣳ सङ्गायन्ति पुराणैरेवैनन्तद्राजभिः साधुकृद्भिः

---

* 'रथकारगृहवासाश्च' ( का० श्रौ० सू० २०।२।१६ )

† सपादमासनं कूर्चः ।

‡ कशिपुशब्देन मृद्वासनं मसूरक उच्यते ।

सलोकङ्कुर्वन्ति ॥ ३ ॥ सम्प्रेष्ष्याद्ध्वर्ष्युः प्प्रक्रमाञ्जुहोति । अन्न्वाहार्य्यपचने वाश्श्वस्य वा पदम्परिलिख्य यतरथास्य तत्रावृद्भवति पूर्वा त्त्वेव स्त्थितिः ॥ ४ ॥ सावित्र्या ऽएवेष्ट्टेः । पुरस्तादनुद्दुत्त्य सकृदेव रूपाण्णयाहवनीये जुहोत्त्यथ सायन्धृतिषु हूयमानासु राजन्न्यो वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाग्घ्नँस्तिस्रः स्वयथ सम्भृता गाथा गायतीत्त्ययुद्ध्यतेत्त्यमुथ सङ्ग्राममजयदिति तस्योक्तम्ब्राह्मणम् ॥ ५ ॥ अथ श्श्वोभूते द्वितीयेऽहन् । एवमेवैतासु साविन्त्रीष्ष्विष्ट्टिषु सथ्थस्थितास्वेषैवावृदद्ध्वर्ष्यविति हवै होतरित्त्येवाद्ध्वर्ष्युर्य्यमो वैवस्वतो राजेत्त्याह तस्य पितरो विशस्त ऽइम ऽआसत ऽइति स्त्थविरा ऽउपसमेता भवन्ति तानुपदिशति यजूथ्थषि वेदः सोऽयमिति यजुषामनुवाकं व्व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्ष्युः सम्प्रेष्ष्यति न प्प्रक्रमाञ्जुहोति ॥ ६ ॥ अथ तृतीयेऽहन् । एवमेवैतास्त्रिष्ट्टिषु सथ्थस्थितास्वेषैवावृदद्ध्वर्ष्यविति हवै होतरित्त्येवाद्ध्वर्ष्युर्व्वरुण ऽआदित्त्यो राजेत्त्याह तस्य गन्धर्व्वा विशस्त ऽइम ऽआसत ऽइति युवानः शोभना ऽउपसमेता भवन्ति तानुपदिशत्त्यथर्व्वाणो वेदः सोऽयमित्त्यथर्व्वणामेकम्पर्व्व व्व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्ष्युः सम्प्रेष्ष्यति न प्प्रक्रमाञ्जुहोति ॥ ७ ॥ अथ चतुर्त्थेऽहन् । एवमेवैतास्विष्ट्टिषु सथ्थस्थितास्वेषैवावृदद्ध्वर्ष्यविति हवै होतरित्त्येवाद्ध्वर्ष्युः सोमो वैष्णवो राजेत्त्याह तस्याप्प्सरसो विशस्ता ऽइमा ऽआसत ऽइति युवतयः शोभना ऽउपसमेता भवन्ति ता ऽउपदिशत्त्याङ्गिरसो वेदः सोऽयमि-

स्यङ्गिरसामेकम्पर्व्व ँव्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्य्युः सम्प्रेष्ष्यति न प्प्रक्क्रमाञ्जुहोति ॥ ८ ॥ अथ पञ्चमेऽहन् । एवमेवैतास्विष्ट्विषु सꣳस्थितास्वेषैवावृदद्ध्वर्य्यविति हवै होतरित्त्येवाद्ध्वर्य्युरर्ब्बुदः काद्रवेयो राजेत्याह तस्य सर्प्पा व्विशस्त ऽइम ऽआसत ऽइति सर्प्पाश्च सर्प्पविदश्चोपसमेता भवन्ति तानुपदिशति सर्प्पविद्या व्वेदः सोऽयमिति सर्प्पविद्याया ऽएकम्पर्व्व ँव्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्य्युः सम्प्रेष्ष्यति न प्प्रक्क्रमाञ्जुहोति ॥ ९ ॥ अथ षष्ठेऽहन् । एवमेवैतास्विष्ट्विषु सꣳस्थितास्वेषैवावृदद्ध्वर्य्यविति हवै होतरित्त्येवाद्ध्वर्य्युः कुबेरो वैश्रवणो राजेत्याह तस्य रक्षाꣳसि व्विशस्तानीमान्न्यासत ऽइति सेलगाः पापकृत ऽउपसमेता भवन्ति तानुपदिशति देवजनविद्या व्वेदः सोऽयमिति देवजनविद्याया ऽएकम्पर्व्व ँव्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्य्युः सम्प्रेष्ष्यति न प्प्रक्क्रमाञ्जुहोति ॥ १० ॥ अथ सप्तमेऽहन् । एवमेवैतास्विष्ट्विषु सꣳस्थितास्वेषैवावृदद्ध्वर्य्यविति हवै होतरित्त्येवाद्ध्वर्य्युरसितो धान्न्वो राजेत्याह तस्यासुरा व्विशस्त ऽइम ऽआसत ऽइति कुसीदिन ऽउपसमेता भवन्ति तानुपदिशति माया व्वेदः सोऽयमिति काञ्चिन्मायाङ्कुर्य्यादेवमेवाद्ध्वर्य्युः सम्प्रेष्ष्यति न प्प्रक्क्रमाञ्जुहोति ॥ ११ ॥ अथाष्टमेऽहन् । एवमेवैतास्विष्ट्विषु सꣳस्थितास्वेषैवावृदद्ध्वर्य्यविति हवै होतरित्त्येवाद्ध्वर्य्युर्म्मत्स्यः साम्मदो राजेत्याह तस्योदकेचरा व्विशस्त ऽइम ऽआसत ऽइति मत्स्याश्च मत्स्यहनश्चोपसमेता भवन्ति तानुपदिशतीति-

हासो व्वेदः सोऽयमिति कञ्चिदितिहासमाचक्षीतैवमेवा-ध्वर्य्युः सम्प्रेष्यति न प्प्रक्रमाञ्जुहोति ॥ १२ ॥ अथ नवमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदध्वर्य्य-विति हवै होतरित्येवाध्वर्य्युस्ताक्ष्यो व्वैपश्यतो राजेत्याह तस्य व्वयाꣳसि व्विशस्तानीमान्यासत ऽइति व्वयाꣳसि च व्वायोविद्यिकाश्चोपसमेता भवन्ति तानुपदिशति पुराणं व्वेदः सोऽयमिति किञ्चित्पुराणमाचक्षीतैवमेवाध्वर्य्युः स-म्प्रेष्यति न प्प्रक्रमाञ्जुहोति ॥ १३ ॥ अथ दशमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदध्वर्य्यविति हवै हो-तरित्येवाध्वर्य्युर्द्धर्म्म ऽइन्द्रो राजेत्याह तस्य देवा व्विशस्त ऽइम ऽआसत ऽइति श्श्रोत्रिया अप्प्रतिग्ग्राहका ऽउप-समेता भवन्ति तानुपदिशति सामानि व्वेदः सोऽयमिति साम्नान्दशतम्ब्रूयादेवमेवाध्वर्य्युः सम्प्रेष्यति न प्प्रक्रमा-ञ्जुहोतीति ॥ १४ ॥ एतत्पारिप्लवम् । सर्व्वाणि राज्यान्न्या-चष्टे सर्व्वा व्विशः सर्व्वान्न्वेदान्सर्व्वान्देवान्सर्व्वाणि भूतानि सर्व्वेषाꣳ ह वै स ऽएतेषाꣳ राज्यानाꣳ सायुज्यꣳ सलो-कतामश्नुते सर्व्वासां व्विशामैश्वर्य्यमाधिपत्यङ्गच्छति सर्व्वा-न्न्वेदानवरुन्द्धे सर्व्वान्देवान्प्रीत्वा सर्व्वेषु भूतेष्वन्ततः प्प्र-तितिष्ठति यस्यैवंव्विदेतद्धोता पारिप्प्लवमाख्यानमाचष्टे यो वैतदेवं व्वेदैतदेव समानमाख्यानम्पुनः पुनः सँवत्सर-म्परिप्प्लवते तद्यत्पुनः पुनः परिप्प्लवते तस्मात्पारिप्प्लवꣳ षट्त्रिꣳशतन्दशाहानाचष्टे षट्त्रिꣳशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशूनवरुन्द्धे ॥ १५ ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ यूपकाष्ठादि ]

सँवत्सरे पर्य्यवेते दीक्षा । प्प्राजापत्यमालब्भ्योत्सी-दन्तीष्ट्यः पुरोहितस्याग्निषु यजेतेत्यु हैक ऽआहुः किमु दीक्षितो यजेत द्वादश दीक्षा द्वादशोपसदस्तिस्रः सुत्या-स्तत्त्रिणवमभिसम्पद्यते व्वज्ज्रो वै त्रिणवः क्षत्रमश्श्वः क्षत्रꣳ राजन्न्यो व्वज्ज्रेण खलु वै क्षत्रꣳ स्पृतन्तद्व्वज्ज्रेणैव क्षत्रꣳ स्पृणोति ॥ १ ॥ दीक्षणीयायाꣳ सꣳस्थितायाम् । सायं व्वाचि व्विसृष्टायां व्वीणागणगिन ऽउपसमेता भवन्ति तानद्ध्वर्य्युः सम्प्रेष्यति व्वीणागणगिन ऽइत्याह देवैरिमं यजमानꣳ सङ्गायतेति तन्ते तथा सङ्गायन्ति ॥ २ ॥ अह-रहर्व्वाचि व्विसृष्टायाम् । अग्नीषोमीयाणामन्ततः सꣳस्थाया-म्परिहृतासु व्वसतीवरीषु तद्यदेनन्देवैः सङ्गायन्ति देवैरे-वैनन्तत्सलोकङ्कुर्व्वन्ति ॥ ३ ॥ प्रजापतिना सुत्यासु । एव-मेवाहरहः परिहृतास्वेव व्वसतीवरीषूदवसानीयायामन्ततः सꣳस्थितायां तद्यदेनम्प्रजापतिना सङ्गायन्ति प्प्रजापति-नैवैनन्तदन्ततः सलोकङ्कुर्व्वन्ति ॥ ४ ॥ एकविꣳशतिर्य्यूपाः । सर्व्वे ऽएकविꣳशत्यरत्नयो राज्जुदालोऽग्निष्ठो भवति पैतु-दारवावभितः षड्वैल्वास्त्रय ऽइत्थास्त्रय ऽइत्थात्षट् खादि-रास्त्रय ऽएवेत्थास्त्रय ऽइत्थात्षट् पालाशास्त्रय ऽएवेत्थास्त्रय ऽइत्थात् ॥ ५ ॥ तद्यदेत ऽएवं य्यूपा भवन्ति । प्प्रजापतेः प्प्राणेषूत्क्रान्तेषु शरीरꣳ श्वयितुमद्ध्रियत तस्य यः श्लेष्मासीत्तसार्द्धꣳ समवद्रुत्य मद्ध्यतो नस्त ऽउदभि-नत्स ऽएष व्वनस्प्पतिरभवद्रज्जुदालस्तस्मात्स श्लेष्मणः

श्लेष्मणो हि समभवत्तेनैवैनन्तद्रूपेण समर्द्धयति तद्य-त्सोऽग्निष्ठो भवति मद्ध्यं व्वा ऽएतद्यूपानां य्यदग्निष्ठो* मद्ध्यमेतत्प्राणानां य्यन्नासिके स्व ऽएवैनन्तदायतने दधाति ॥ ६ ॥ अथ यदापोमयन्तेज ऽआसीत् । यो गन्धः स सार्द्धं समवद्रुत्य चक्षुष्ट ऽउदभिनत्स ऽएष व्वनस्पति-रभवत्पीतुदारुस्तस्मात्स सुरभिर्ग्गन्धाद्धि समभवत्तस्मादु ज्ज्वलनस्तेजसो हि समभवत्तेनैवैनन्तद्रूपेण समर्द्धयति तद्य-त्तावभितोऽग्निष्ठम्भवतस्तस्मादिमे ऽअभितो नासिकाञ्च-क्षुषी स्व ऽएवैनौ तदायतने दधाति ॥ ७ ॥ अथ यत्कु-न्तापमासीत् । यो मज्जा स सार्द्धं समवद्रुत्य श्श्रोत्रत ऽउदभिनत्स ऽएष व्वनस्पतिरभवद्बिल्वस्तस्मात्तस्यान्तरतः सर्व्वमेव फलमाद्यम्भवति तस्मादु हारिद्र ऽइव भवति हारिद्र ऽइव हि मज्जा तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे पैतुदा-रवौ[1] भवतो बाह्ये बैल्ल्वा ऽअन्तरे हि चक्षुषी बाह्ये श्श्रोत्रे स्व ऽएवैनाँस्तदायतने दधाति ॥ ८ ॥ अस्थिब्भ्य ऽएवास्य खदिरः समभवत् । तस्मात्स दारुणो बहुसारो दारुणमिव ह्यस्थि तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे बैल्ल्वा भवन्ति बाह्ये खादिरा ऽअन्तरे हि मज्जानो बाह्यान्यस्थीनि स्व ऽएवैनाँस्तदायतने दधाति ॥ ९ ॥ माꣳसेब्भ्य ऽएवास्य पलाशः समभवत् । तस्मात्स बहुरसो लोहितरसो लोहि-तमिव हि माꣳसन्तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे खादिरा भवन्ति बाह्ये पालाशा ऽअन्तराणि ह्यस्थीनि बाह्यानि

* अग्निसमीपे तिष्ठतीति-अग्निष्ठः=मध्यमो यूप इत्यर्थः ।

( १ ) 'पैतुदारुवौ' इति 'ग' 'ज' पुस्तकयोः पाठः ।

माᳬंसानि स्व ऽएवैनाँस्तदायतने दधाति ॥ १० ॥ अथ यदेकविᳬंशतिर्ब्भवन्ति । एकविᳬंशत्यरत्नय ऽएकविᳬंशो वा ऽएष य ऽएष तपति द्वादश मासाः पञ्चऽर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविᳬंशः सोऽश्वमेध ऽएष प्प्रजापतिरेवमेतम्प्रजापतिं स्वयजङ्कृत्स्नᳬं संस्कृत्य तस्मिन्नेकविᳬंशतिमग्नीषोमीयान्पशूनालभते तेषाᳬं समानङ्कर्म्मेत्येतत्पूर्व्वेद्युः कर्म्म ॥ ११ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

---

[ सवनीयाः पशवः ]

अथ प्प्रातर्ग्गोतमस्य । चतुरुत्तर स्तोमो भवति तस्य चतसृषु बहिष्प्पवमानमष्टास्वष्टास्वाज्यानि द्वादशसु माध्यन्दिनᳬं पवमानᳬं षोडशसु पृष्ठानि विᳬंशत्यामार्ब्भवᳬं पवमानश्चतुर्विᳬंशत्यामग्निष्टोमसाम* ॥ १ ॥ तस्य हैके । अग्निष्टोमसाम चतुःसाम कुर्व्वन्ति नाग्निष्टोमो नोक्थ्य ऽइति वदन्तस्तद्यदि तथा कुर्य्युᳬं सार्द्धᳬं स्तोत्रियᳬं शस्त्वा सार्द्धमनुरूपᳬं शᳬंसेद्रथन्तरम्पृष्ठᳬं राथन्तरᳬं शस्त्रमग्निष्टोमो यज्ञस्तेनेमँल्लोकमृद्ध्नोति ॥ २ ॥ एकविᳬंशतिᳬं सवनीयाᳬं पशवᳬं । सर्व्वे ऽआग्नेयास्तेषाᳬं समानङ्कर्म्मेत्यु हैक ऽआहुर्द्वे त्वेवैते ऽएकादशिन्यावालभेत य ऽएवैकाद-

---

* येन साम्ना अग्निष्टोमसंस्था समाप्यते तदग्निष्टोमसाम ।

शिनेषु कामस्तस्य कामस्याप्त्यै ॥ ३ ॥ सꣳस्थितेऽग्निष्टोमे । परिहृतासु वसतीवरीष्वध्वर्युरन्नहोमाञ्जुहोति तेषामुक्तम्ब्राह्मणं 'प्राणाय स्वाहापानाय स्वाहे'ति द्वादशभिरनुवाकैर्द्वादश मासाः सँवत्सरः सर्वꣳ सँवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ४ ॥ एकविꣳशम्मद्ध्यममहर्ब्भवति । असौ वा ऽआदित्य ऽएकविꣳशः सोऽश्वमेधः स्वेनैवैनꣳ स्तोमेन स्वायान्देवतायाम्प्रतिष्ठापयति तस्मादेकविꣳशम् ॥ ५ ॥ षड्वेवैकविꣳशम् । एकविꣳशो वै पुरुषो दश हस्त्या ऽअङ्गुलयो दश पाद्या ऽआत्मैकविꣳशस्तदनेनैकविꣳशेनात्मनैतस्मिन्नेकविꣳशे प्प्रतिष्ठायाम्प्रतितिष्ठति तस्मादेकविꣳशम् ॥ ६ ॥ षड्वेवैकविꣳशम् । एकविꣳशो वै स्तोमानाम्प्रतिष्ठा बहु खलु वा ऽएतदेतस्मिन्नहन्युच्चावचमिव कर्म्म क्रियते तद्यदेतदेतस्मिन्नहन्युच्चावचम्बहु कर्म्म क्रियते तदेतस्मिन्नेकविꣳशे प्प्रतिष्ठायाम्प्रतिष्ठितङ्क्रियाता ऽइति तस्माद्वेवैतदेकविꣳशमहः ॥ ७ ॥ तस्य प्प्रातःसवनम् । 'अग्निन्तम्मन्ये यो वसु'रिति होता पाङ्क्तमाज्यꣳ शस्त्वैकाहिकमुपसꣳशꣳसति बार्हतञ्च प्रउगम्माधुच्छन्दसञ्च त्रिचश ऽउभे सꣳशꣳसति यश्च बार्हते प्रउगे कामो य ऽउ च माधुच्छन्दसे तयोरुभयोः कामयोराप्त्यै क्लृप्तम्प्रातःसवनम् ॥ ८ ॥ अथातो माद्ध्यन्दिनꣳ सवनम् । अतिच्छन्दाः प्रतिपन्मरुत्वतीयस्य 'त्रिक-

(१) शु० य० सं० २२. २३। (२) शु० य० सं० १५. ४१। (३) ऋ० सं० २. ६. २८।

द्रुकेषु महिषो यवाशिर'मित्यतिच्छन्दा वा ऽएषा च्छन्दसां यदतिच्छन्दा ऽअतिच्छन्दा ऽअश्वमेधो यज्ञानामश्वमेधस्यै- वाप्त्यै सैषैव त्रिꣳ शस्ता त्रिचꣳ सम्पद्यते तेनो तङ्कामम- प्नोति यस्त्रिच 'ऽइदं वसो सुतमन्ध' ऽइत्यनुचर ऽएष ऽएव नित्य ऽएकाहातान 'ऽइत्था हि सोम ऽइन्मदे'ऽवि- तांसि सुन्वतो व्वृक्तबर्हिष' ऽइति पङ्क्तीश्च षट्पदाश्च शस्त्वैकाहिके निविदन्दधातीति मरुत्वतीयम् ॥ ९ ॥ अथातो निष्केवल्ल्यम् । महानाम्न्यꣳ पृष्ठम्भवन्ति सानुरूपाꣳ सप्प्रगाथाꣳ शꣳसति सर्व्वे वै कामा महानाम्नीषु सर्व्वे कामा ऽअश्वमेधे सर्व्वेषाङ्कामानामाप्त्या 'ऽइन्द्रो मदाय व्वावृधे' 'प्प्रेदम्ब्रह्म व्वृत्रतूर्य्येष्ष्वाविथे'ति पङ्क्तीश्च षट्- पदाश्च शस्त्वैकाहिके निविदन्दधाति क्कॢप्तम्माध्यन्दि- नꣳ सवनम् ॥ १० ॥ अथातस्तृतीयसवनम् । अतिच्छन्दा ऽएव प्प्रतिपद्वैश्वदेवस्या'भि त्यन्देवꣳ सवितारमो- ण्योरि'ति तस्या ऽएतदेव ब्ब्राह्मणं यत्पूर्व्वस्या 'ऽअभि त्वां देव सवित'रित्यनुचरोऽभिवानभिभूत्यै रूप'मुदु ष्य देवꣳ सविता दमूना' ऽइति सावित्रꣳ शस्त्वैकाहिके निविदन्दधाति 'मही द्यावापृथिवी ऽइह ज्येष्ठे' ऽइति चतुर्ऋचन्द्यावापृथिवीयꣳ शस्त्वैकाहिके निविदन्दधा'त्यृभु- र्व्विभ्वा व्वाज ऽइन्द्रो नो ऽअच्छे'त्याभर्वꣳ शस्त्वैकाहिके

(१) ऋ० सं० ५. ७. १७ । (२) ऋ० सं० १. ५. २९ । (३) ऋ० सं० ६. ३. १८ । (४) ऋ० सं० १. ६. ११ । (५) ऋ० सं० ६. ३. १६ । (६) शु० य० सं० ४. २५ । (७) ऋ० सं० १. २. १३ । (८) ऋ० सं० ५. ४. ५ । (९) ऋ० सं० ३. ८. ८ । (१०) ऋ० सं० ३. ७. ३ ।

निविदन्दधाति 'को [1]नु वाम्मित्रावरुणावृताय'न्निति वैश्वदेवꣳ शस्त्वैकाहिके निविदन्दधातीति वैश्वदेवम् ॥ ११ ॥ अथात ऽआग्निमारुतम् । '[2]मूर्द्धानन्दिवो ऽअरतिम्पृथिव्व्या' ऽइति वैश्वानरीयꣳ शस्त्वैकाहिके निविदन्दधा'[3]त्या रुद्रास ऽइन्द्रवन्तः सजोषस' ऽइति मारुतꣳ शस्त्वैकाहिके निविदन्दधाती'[4]मम्मू षु वो ऽअतिथिमुषर्ब्बुध'मिति नवर्च्चञ्जातवेदसीयꣳ शस्त्वैकाहिके निविदन्दधाति तद्यदैकाहिकानि निविद्धानानि भवन्ति प्प्रतिष्ठा वै ज्योतिष्टोमः प्प्रतिष्ठाया ऽअप्प्रच्च्युत्यै ॥ १२ ॥ तस्यैते पशवो भवन्ति । '[5]अश्वस्तूपरो* गोमृग,† ऽइति पञ्चदश पर्य्यङ्ग्यास्तेषामुक्तम्ब्राह्मणमथैत ऽआरण्या '[6]वसन्ताय कपिञ्जलानालभते ग्ग्रीष्म्माय कलविङ्कान्वर्षाब्भ्यस्तित्तिरी'न्निति तेषाम्म्वेवोक्तम् ॥ १३ ॥ अथैतानेकविꣳशतये । चातुर्म्मास्यदेवताब्भ्य ऽएकविꣳशतिमेकविꣳशतिम्पशूनालभत ऽएतावन्तो वै सर्व्वे देवा यावत्यश्चातुर्म्मास्यदेवताः सर्व्वे कामा ऽअश्वमेधे सर्व्वान्देवान्प्रीत्वा सर्व्वान्कामानाप्नवानीति न तथा कुर्य्यात् ॥ १४ ॥ सप्तदशैव पशून्मध्यमे यूप ऽआलभेत । प्प्रजापतिः सप्तदशः सर्व्वꣳ सप्तदशः सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै षोडश षोडशेतरेषु षोडशकलं व्वा ऽइदꣳ सर्व्वꣳ

(१) ऋ॰ सं॰ ४. २. १३। (२) ऋ॰ सं॰ ४. ५. ९। शु॰ य॰ सं॰ ७. २५।३३. ८। (३) ऋ॰ सं॰ ४. ३. २१। (४) ऋ॰ सं॰ ४. ५. १७। (५) शु॰ सं॰ य॰ २४. १।

* 'शृङ्गोत्पत्तिकालेऽतीतेऽपि शृङ्गहीनश्छागः = तूपरः ।

† गोमृगः = गवयः ।

(६) शु॰ य॰ सं॰ २४. २०।

[ संवादः ]

एते ऽउक्त्वा । यदुद्भिगोः परिशिष्टम्भवति तदाह वासोऽधिवासः हिरण्यमित्यश्वायोपस्तृणन्ति तस्मिन्नेनमधि संज्ञपयन्ति संज्ञप्तेषुः पशुषु पत्न्यः पान्नेजनैरुदायन्ति चतस्रश्च जायाः कुमारी पञ्चमी चत्वारि च शतान्यनुचरीणाम् ॥ १ ॥ निष्ठितेषु पान्नेजनेषु । महिषीमश्वायोपनिपादयन्त्यथैनावधिवासेन * सम्प्रोर्णुवन्ति † '[१]स्वर्गे लोके प्रोर्णुवाथा'मित्येष वै स्वर्गो लोको यत्र पशुः संज्ञपयन्ति निरायत्याश्वस्य शिश्नम्महिष्युपस्थे निधत्ते ‡ '[२]वृषा वाजी रेतोधा रेतो दधात्वि'ति मिथुनस्यैव सर्वत्वाय ॥ २ ॥ तयोः शयानयोः । अश्वं यजमानोऽभिमेथ'[३]त्युत्सक्थ्या ऽअव गुदन्धेही'ति तन्न कश्चन प्रत्यभिमेथति नेद्यजमानम्प्रतिप्रातिः कश्चिदसादिति ॥ ३ ॥ अथाद्ध्वर्युः कुमारीमभिमेथति । कुमारि हये हये कुमारि '[४]यकासकौ शकुन्तिके'ति तत्कुमारी प्रत्यभिमेथत्यद्ध्वर्यो हये हयेऽद्ध्वर्यो '[५]यकोऽसकौ शकुन्तक' ऽइति ॥ ४ ॥ अथ ब्रह्मा महिषीमभिमेथति । महिषि हये हये महिषि '[६]माता च ते पिता च तेऽग्रं वृक्षस्य रोहत' ऽइति तस्यै शतः राजपुत्र्योऽनुचर्यो भवन्ति ता ब्रह्माणम्प्रत्यभिमेथ-

---

* अध उपरिष्टाच्चाच्छादनक्षमं वासोऽधिवासः ।

† का॰ श्रौ॰ सू॰ २०. ६. १५ ।

(१) शु॰ य॰ सं॰ २३. २० ।

‡ 'अश्वशिश्नमुपस्थे कुरुते' ( का॰ श्रौ॰ सू॰ २०. ६. १६ ) ।

(२) शु॰ य॰ सं॰ २३ २० । (३) शु॰ य॰ सं॰ २३. २१ । (४) शु॰ य॰ सं॰ २३. २२ । (५) शु॰ य॰ सं॰ २३. २३ । (६) शु॰ य॰ सं॰ २३. २४ ।

न्ति ब्ब्रह्मन्न्हये हये ब्ब्रह्म'न्माता च ते पिता च तेऽग्ग्रे व्वृक्षस्य क्क्रीडत' ऽइति ॥ ५ ॥ अथोद्गाता व्वावातामभिमेथति । व्वावाते हये हये व्वावात 'ऽऊर्द्ध्वामेनामुच्छ्रापये'ति तस्यै शतꣳ राजन्न्या ऽअनुचर्य्यो भवन्ति ता ऽउद्गातारम्प्रत्यभिमेथन्त्युद्गातर्हये हय ऽउद्गात'रूर्द्ध्वमेनमुच्छ्रयता'दिति ॥ ६ ॥ अथ होता परिवृक्तामभिमेथति । परिवृक्ते हये हये परिवृक्ते 'यद्दस्या अꣳहुभेद्या' ऽइति तस्यै शतꣳ सूतग्ग्रामण्यान्दुहितरोऽनुचर्य्यो भवन्ति ता होतारम्प्रत्यभिमेथन्ति होतर्हये हये होत'र्य्यद्देवासो ललामगु'मिति ॥ ७ ॥ अथ क्षत्ता पालागलीमभिमेथति । पालागलि हये हये पालागलि 'यद्धरिणो यवमत्ति न पुष्टम्पशु मन्न्यत' ऽइति तस्यै शतङ्क्षात्त्रसङ्ग्रहीतृणान्दुहितरोऽनुचर्य्यो भवन्ति ताः क्षत्तारम्प्रत्यभिमेथन्ति क्षत्तर्हये हये क्षत्त'र्य्यद्धरिणो यवमत्ति न पुष्टम्बहु मन्न्यत' ऽइति ॥ ८ ॥ सर्व्वाप्तिर्व्वा ऽएषा व्वाचः । यदभिमेथिकाः सर्व्वे कामा ऽअश्श्वमेधे सर्व्वया व्वाचा सर्व्वान्न्कामानाप्नवामेत्युत्थापयन्ति महिषीन्ततस्ता यथेतम्प्रतिपरायन्त्यथेतरे सुरभिमतीमृचमन्ततोऽन्न्वाहु'र्द्दधिक्क्राव्वणो ऽअकारिष'मिति ॥ ९ ॥ [अर्धप्रपाठकः ॥५३॥] अप व्वा ऽएतेब्भ्य ऽआयुर्द्देवताः क्क्रामन्ति । ये यज्ञेऽपूतां व्वाचं व्वदन्ति व्वाचमेवैतत्पुनते देवयज्ज्यायै देवतानामनपक्क्रमाय या च गोमृगे व्वपा भवति या चाजे तूपरे

(१) शु० य० सं० २३. २५। (२) शु० य० सं० २३. २६। (३) शु० य० सं० २३. २७। (४) शु० य० सं० २३. २८। (५) शु० य० सं० २३. २९। (६) शु० य० सं० २३. ३०। (७) शु० य० सं० २३. ३१। (८) शु० य० सं० २३. ३२।

ते ऽअश्वे प्प्रत्यवधायाहरन्ति नाश्वस्य वपास्तीति वदन्तो न तथा कुर्य्यादश्वस्यैव प्प्रत्यक्षम्मेद ऽआहरेत्प्रज्ञाता ऽइतराः ॥ १० ॥ श्रृतासु वपासु । स्वाहाकृतिभिश्चरित्वा प्प्रत्यञ्चः प्प्रतिपरेत्त्य सदसि ब्ब्रह्मोद्यं वदन्ति पूर्व्वया द्वारा प्प्रपद्य यथाधिष्ण्ण्यं व्व्युपविशन्ति ॥ ११ ॥ स होताद्ध्वर्य्युं प्पृच्छति । 'कः[1] स्विदेकाकी चरती'ति तम्प्रत्याह 'सूर्य्य[2] ऽएकाकी चरती'ति ॥ १२ ॥ अथाद्ध्वर्य्युर्होतारम्पृच्छति । 'किं[3] स्वित्सूर्य्यसमञ्ज्योति'रिति तम्प्रत्याह ब्ब्रह्म 'सूर्य्य[4]-समञ्ज्योति'रिति ॥ १३ ॥ अथ ब्ब्रह्मोद्गातारम्पृच्छति । 'पृच्छामि[5] त्वा चितये देवसखे'ति तम्प्रत्याहा'पि तेषु[6] त्रिषु पदेष्ष्वस्म्मी'ति ॥ १४ ॥ अथोद्गाता ब्ब्रह्माणम्पृच्छति । 'केष्ष्वन्तः[7] पुरुष ऽआविवेशे'ति तम्प्रत्याह 'पञ्च[8]स्वन्तः पुरुष ऽआविवेशे'ति ॥ १५ ॥ एतस्यामुक्तायामुत्थाय । सदसोऽधि प्प्राञ्चो यजमानमब्भ्यायन्त्यग्ग्रेण हविर्द्धाने ऽआसीनमेत्त्य यथायतनम्परुपविशन्ति ॥ १६ ॥ स होताद्ध्वर्य्युम्पृच्छति । 'का[9] स्विदासीत्पूर्व्वचित्ति'रिति तम्प्रत्याह 'द्यौरासी[10]त्पूर्व्वचित्ति'रिति ॥ १७ ॥ अथाद्ध्वर्य्युर्होतारम्पृच्छति । 'का[11] ऽईमरे पिशङ्गिले'ति तम्प्रत्याहा'जारे[12] पिशङ्गिले'ति ॥ १८ ॥ अथ ब्ब्रह्मोद्गातारम्पृच्छति । 'कत्यस्य[13]

(१) शु० य० सं० २३. ४५। (२) शु० य० सं० २३. ४६। (३) शु० य० सं० २३. ४७। (४) शु० य० सं० २३. ४८। (५) शु० य० सं० २३. ४९। (६) शु० य० सं० २३. ५०। (७) शु० य० सं० २३. ५१। (८) शु० य० स० २३. ५२। (९) शु० य० सं० २३. ५३। (१०) शु० य० सं० २३. ५४। (११) शु० य० सं० २३. ५५। (१२) शु० य० सं० २३. ५६। (१३) शु० य० सं० २३. ५७।

विष्ट्ठाः कत्यक्षराणी'ति तम्प्रत्याह 'षडस्य विष्ट्ठाः शतमक्षराणी'ति ॥ १९ ॥ अथोद्गाता ब्रह्माणम्पृच्छति । 'को ऽअस्य वेद भुवनस्य नाभि'मिति तम्प्रत्याह 'वेदाहमस्य भुवनस्य नाभि'मिति ॥ २० ॥ अथाध्वर्युं यजमानः पृच्छति । 'पृच्छामि त्वा परमन्तम्पृथिव्या' ऽइति तम्प्रत्याहे'यं वेदिः परो ऽअन्तः पृथिव्या' ऽइति ॥ २१ ॥ सर्वाप्तिर्वा ऽएषा वाचः । यद्ब्रह्मोद्यः सर्वे कामा ऽअश्वमेधे सर्वया वाचा सर्वान्कामानाप्नवामेति ॥ २२ ॥ उदिते ब्रह्मोद्ये । प्रपद्याध्वर्युर्हिरण्मयेन पात्रेण प्राजापत्यम्महिमानङ्गृह्णाति तस्य पुरोरु'ग्घिरण्यगर्भः समवर्त्तताग्र' ऽइत्यथास्य पुरोऽनुवाक्या 'सुभूः स्वयम्भूः प्रथम' ऽइति 'होता यक्षत्प्रजापति'मिति प्रैषः 'प्रजापते न त्वदेतान्यन्य' ऽइति होता यजति वषट्कृते जुहोति 'यस्तेऽहन्त्संवत्सरे महिमा सम्बभूवे'ति नानुवषट्करोति सर्वहुतः हि जुहोति ॥ २३ ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—o—

[ वपाहोमः ]

अथातो वपानाः होमः । नानैव चरेयुरा वैश्वदेवस्य वपायै वैश्वदेवस्य वपायाः हुतायान्तदन्वितरा

(१) शु० य० सं० २३. ५८. । (२) शु० य० सं० २३. ५९ । (३) शु० य० २३. ६० । (४) शु० य० सं० २३. ६१ । (५) शु० य० सं० २३. ६२ । (६) शु० य० सं० २३. १ । (७) शु० य० सं० २३. ६३ । (८) शु० य० सं० २३. ६४ । (९) शु० य० सं० २३. ६५ । (१०) शु० य० सं० २३. २

जुहुयुरिति ह स्माह सत्यकामो जाबालो विश्वे वै सर्वे देवास्तद्देनान्यथादेवतम्प्रीणातीति ॥ १ ॥ ऐन्द्राग्नस्य वपायाᳪ हुतायाम् । तदन्वितरा जुहुयुरिति ह स्माहतुः सौमापौ मानुतन्तव्याविन्द्राग्नी वै सर्वे देवास्तद्दैवैनान्य-थादेवतम्प्रीणातीति ॥ २ ॥ कायस्य वपायाᳪ हुतायाम् । तदन्वितरा जुहुयुरिति ह स्माह शैलालिः प्रजापतिर्वै कः प्रजापतिमु वा ऽअनु सर्वे देवास्तद्दैवैनान्यथादेवत-म्प्रीणातीति ॥ ३ ॥ एकविᳪशतिश्चातुर्मास्यदेवता ऽअ-नुद्रुत्य । एकविᳪशतिधा कृत्वा प्रचरेयुरिति ह स्माह भाल्लवेय ऽएतावन्तो वै सर्वे देवा यावन्त्यश्चातुर्मास्यदेवता-स्तद्दैवैनान्यथादेवतम्प्रीणातीति ॥ ४ ॥ नानैव चरेयुः । इतीन्द्रोतः शौनकः किमुत स्वरेरँस्तद्दैवैनान्यथादेवतम्प्री-णातीत्येतदुह तेषां वचोऽन्या त्वेवात स्थितिः ॥ ५ ॥ अथ होवाच याज्ञवल्क्यः । सकृदेव प्राजापत्याभिः प्र-चरेयुः सकृद्देवदेवत्याभिस्तद्दैवैनान्यथादेवतम्प्रीणात्यञ्जसा यज्ञस्य सᳪस्थामुपैति न ह्वलतीति ॥ ६ ॥ हुतासु वपासु । प्रपद्याद्ध्वर्युः रजतेन पात्रेण प्राजापत्यम्महिमानमुत्तरङ्गृह-ङ्गृह्णाति तस्य पुरोरुग्ग्यः [1]'प्राणतो निमिषतो महित्वे'ति विपर्यस्ते याज्यानुवाक्ये ऽअयातयामताया ऽएष ऽएव प्रैषो वषट्कृते जुहोति [2]'यस्ते रात्रौ सँवत्सरे महिमा सम्बभूवे'ति नानुवषट्करोति तस्योक्तम्ब्राह्मणम् ॥ ७ ॥ नान्येषाम्पशूनान्तेदन्या ऽअवद्यन्ति । अवद्यन्त्यश्वस्य

(१) शु० य० सं० २३. ३। (२) शु० य० सं० २३. ४।

दक्षिणतोऽन्न्येषाम्पशूनामवद्ध्यन्त्युत्तरतोऽश्श्वस्य प्लक्षशाखास्वन्न्येषाम्पशूनामवद्ध्यन्ति वेतसशाखास्वश्श्वस्य ॥ ८ ॥ तदु होवाच सात्त्ययज्ञिः । इतरथैव कुर्युः पथ ऽएव नापोदित्त्यमिति पूर्वां त्वेव स्थितिरुक्क्थ्यो यज्ञस्तेनान्तरिक्षलोकमृद्ध्नोति सर्वस्तोमोऽतिरात्र ऽउत्तममहर्ब्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्वमश्श्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ९ ॥ तस्य त्रिवृद्बहिष्पवमानम् *। पञ्चदशान्न्याज्यानि सप्तदशो माद्ध्यन्दिनः पवमान ऽएकविꣳशानि पृष्ठानि त्रिणवस्तृतीयः पवमानस्त्रयस्त्रिꣳशमग्निष्टोमसामैकविꣳशान्न्युक्क्थान्न्येकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरर्धद्वितीयस्याह्नः पृष्ठ्यस्य षडहस्य तच्छस्त्रमतिरात्रो यज्ञस्तेनामुँल्लोकमृद्ध्नोति ॥ १० ॥ एकविꣳशतिः सवनीयाः पशवः । सर्वे ऽआग्नेयास्तेषाꣳ समानङ्कर्म्मेत्यु हैक ऽआहुश्चतुर्विꣳशतिन्त्वेवैतान्न्गव्यानालभेत द्वादशभ्यो देवताभ्यो द्वादश मासाः संवत्सरः सर्वꣳ संवत्सरः सर्वमश्श्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ११ ॥ †

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

---

* सामगानामुत्तरार्चिके तृचात्मकानि सूक्तान्याम्नातानि ( साम० उ० १. १. १–९ )। तत्र 'उपास्मै' इत्याद्यं सूक्तम् । 'देवि द्युतत्या' इति द्वितीयम् । 'पवमानस्य ते' इति तृतीयम् । प्रातःस्वनानुष्ठाने तेषु त्रिषु सूक्तेषु गायत्रं साम गीयते । तदिदं सूक्तत्रयगानसाध्यं स्तोत्रं बहिष्पवमानमित्युच्यते । तत्र स्थितानामृचां पवमानार्थत्वाद्बहिःसम्बन्धाच्च ।

† शतम् ६७०० ।

[ प्रत्यृतु पश्वालम्भः ]

एतेन हैन्द्रोतो दैवापः शौनकः। जनमेजयम्पारिक्षितं य्याजयाञ्चकार तेनेष्ट्वा सर्व्वाम्पापकृत्त्याᳩं सर्व्वाम्ब्रह्महत्त्यामपजघान सर्व्वाᳩं ह वै पापकृत्त्याᳩं सर्व्वाम्ब्रह्महत्त्यामपहन्ति योऽश्श्वमेधेन यजते ॥ १ ॥ तदेतद्गाथयाभिगीतम्। आसन्दीवति धान्न्यादᳩं रुक्मिणᳩं हरितस्रजम् ॥ अबद्ध्नादश्श्वᳩं सारङ्गन्देवेब्भ्यो जनमेजय ऽइति ॥ २ ॥ एते ऽएव पूर्व्वे ऽअहनी। ज्योतिरतिरात्रस्तेन भीमसेनमेते ऽएव पूर्व्वे ऽअहनी गौरतिरात्रस्तेनोग्ग्रसेनमेते ऽएव पूर्व्वे ऽअहनी ऽआयुरतिरात्रस्तेन श्श्रुतसेनमित्त्येते पारिक्षितीयास्तदेतद्गाथयाभिगीतम्पारिक्षिता यजमाना ऽअश्श्वमेधैः परोऽवरम् ॥ अजहुः कर्म्म पापकम्पुण्ण्याः पुण्ण्येन कर्म्मणेति ॥ ३ ॥ एते ऽएव पूर्व्वे ऽअहनी। अभिजिदतिरात्रस्तेन ह पर ऽआट्णार ऽईजे कौसल्ल्यो राजा तदेतद्गाथयाभिगीतमट्णारस्य परः पुत्रोऽश्श्वम्मेद्ध्यमबन्धयत् ॥ हैरण्ण्यनाभः कौसल्ल्यो दिशः पूर्ण्णा अमᳩंहतेति ॥ ४ ॥ एते ऽएव पूर्व्वे ऽअहनी। विश्श्वजिदतिरात्रस्तेन ह पुरुकुत्सो दौर्ग्गहेणेज ऽऐक्ष्वाको राजा तस्म्मादेतदृषिणाब्भ्यनूक्त'मस्म्माकमत्र पितरस्त ऽआसन्त्सप्त ऽऋषयो दौर्ग्गहे बद्ध्यमान' ऽइति ॥ ५ ॥ एते ऽएव पूर्व्वे ऽअहनी। महाव्रतमतिरात्रस्तेन ह मरुत्त ऽआविक्षित ऽईज ऽआयोगवो राजा तस्य ह ततो मरुतः परिवेष्टारोऽग्ग्निः क्षत्ता विश्श्वे देवाः

(१) ऋ॰ सं॰ ३. ७. १८।

सभासदो बभूवुस्तदेतद्गाथयाभिगीतम्मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे ॥ आविक्षितस्याग्निः क्षत्ता विश्वे देवाः सभासद ऽइति मरुतो ह वै तस्य परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो भवन्ति योऽश्वमेधेन यजते ॥ ६ ॥ एते ऽएव पूर्वे ऽअहनी । अप्तोर्यामोऽतिरात्रस्तेन हैतेन क्रैव्य ऽईजे पाञ्चालो राजा क्रिवय ऽइति ह वै पुरा पञ्चालानाचक्षते तदेतद्गाथयाभिगीतमश्वम्मेध्य-मालभत क्रिवीणामतिपूरुषः ॥ पाञ्चालः परिवक्रायाꣳ सहस्रशतदक्षिणमिति ॥ ७ ॥ अथ द्वितीयया । सहस्रमास-न्नयुता शता च पञ्चविꣳशतिः ॥ दिक्कोदिक्कः पञ्चालाना-म्ब्राह्मणा या विभेजिर ऽइति ॥ ८ ॥ त्रिवृदग्निष्टोमः । पञ्चदश ऽउक्थ्यः सप्तदशन्तृतीयमहः सोक्थकमेकविꣳ-शः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरित्येषोऽनुष्टुप्सम्प-न्नस्तेन हैतेन ध्वसा द्वैतवन ऽईजे मात्स्यो राजा यत्रैत-द्द्वैतवनꣳ सरस्तदेतद्गाथयाभिगीतञ्चतुर्दश द्वैतवनो राजा सङ्ग्रामजिद्धयान् ॥ इन्द्राय वृत्रघ्नेऽबध्नात्तस्माद्द्वैतवनꣳ सर ऽइति ॥ ९ ॥ चतुर्विꣳशाः पवमानाः । त्रिवृदभ्या-वर्त्तञ्चतुश्चत्वारिꣳशाः पवमाना ऽएकविꣳशमभ्यावर्त्तम-ष्टाचत्वारिꣳशाः पवमानास्त्रयस्त्रिꣳशमभ्यावर्त्तमाग्निष्टोम-सामाद्द्वात्रिꣳशान्युक्थान्येकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरिति ॥ १० ॥ एतद्विष्णोः क्रान्तम् । तेन हैतेन भरतो दौःषन्तिरीजे तेनेष्ट्वेमां व्याष्टिं व्यानशे येयम्भरतानान्तदेतद्गाथयाभिगीतमष्टासप्ततिम्भरतो दौः-

षन्तिरूर्यमुनामनु ॥ गङ्गायां वृत्रघ्नेऽबध्नात्पञ्चपञ्चाशतᳬं हयानिति ॥ ११ ॥ अथ द्वितीयया । त्रयस्त्रिᳬंशᳬं शतᳬं राजाऽश्वान्बद्धाय मेध्यान् ॥ सौद्युम्निरत्यष्ठादन्न्यानमायान्मायवत्तर ऽइति ॥ १२ ॥ अथ तृतीयया । शकुन्तला नाडपित्यप्सरा भरतन्दधे ॥ परᳬं सहस्रानिन्द्रायाऽश्वान्मेध्यान्य ऽआहरद्विजित्य पृथिवीᳬं सर्वामिति ॥ १३ ॥ अथ चतुर्थ्यां । महदद्य भरतस्य न पूर्वे नापरे जनाᳬः ॥ दिवम्मर्त्य ऽइव बाहुभ्यान्नोदापुᳬः पञ्च मानवा ऽइति ॥१४॥ एकविᳬंशस्तोमेन ऽऋषभो याज्ञतुर ऽईजे श्विक्नानाᳬं राजा तदेतद्गाथयाभिगीतं ऋयाज्ञतुरे यजमाने ब्रह्माण ऽऋषभे जनाᳬः ॥ अश्वमेधे धनँल्लब्ध्वा विभजन्ते स्म दक्षिणा ऽइति ॥ १५ ॥ त्रयस्त्रिᳬंशस्तोमेन । शोणᳬः सात्रासाह ऽईजे पाञ्चालो राजा तदेतद्गाथयाभिगीतᳬं सात्रासाहे[1] यजमानेऽश्वमेधेन तौर्वशाᳬः ॥ उदीरते त्रयस्त्रिᳬंशाᳬः षट् सहस्राणि वर्म्मिणामिति ॥ १६ ॥ अथ द्वितीयया । षट् षट् षड्ढा सहस्राणि यज्ञे कोकपितुस्तव ॥ उदीरते त्रयस्त्रिᳬंशाᳬः षट् सहस्राणि वर्म्मिणामिति ॥ १७॥ अथ तृतीयया । सात्रासाहे[2] यजमाने पाञ्चाले राज्ञि सुस्रजि ॥ अमाद्यदिन्द्रᳬः सोमेनातृप्यन्ब्राह्मणा धनैरिति ॥ १८ ॥ गोविनतेन शतानीकᳬः । सात्राजित ऽईजे काश्यस्याश्वमादाय ततो हैतद्वर्वाक्काशयोऽग्नीन्नादधत ऽआत्तसोमपीथाᳬः स्म ऽइति वदन्तᳬः ॥ १९ ॥ तस्य विधा चतुर्विᳬंशाᳬः पव-

(१-२) 'सात्रासहे' इति 'ग' 'ज' पुस्तकयोः पाठः ।

मानाः । त्रिवृदभ्यावर्त्तश्चतुश्चत्त्वारिꣳशाः पवमाना ऽएकविꣳशान्याज्यानि त्रिणवान्न्युक्क्थान्न्येकविꣳशानि पृष्ठानि षट्त्रिꣳशाः पवमानास्त्रयस्त्रिꣳशमभ्यावर्त्तमाग्निष्ट्टोमसामादेकविꣳशान्न्युक्क्थान्न्येकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ २० ॥ तदेतद्गाथयाभिगीतम् । शतानीकः समन्तासु मेद्ध्यꣳ सात्राजितो हयम् ॥ आदत्त यज्ञङ्काशीनाम्भरतः सत्त्वतामिवेति ॥ २१ ॥ अथ द्वितीयया । श्वेतꣳ समन्तासु वशञ्चरन्तꣳ शतानीको धृतराष्ट्रस्य मेद्ध्यम् ॥ आदाय सह्वा दशमास्यमश्श्वꣳ शतानीको गोविनतेन हेज ऽइति ॥ २२ ॥ अथ चतुर्थ्या । महदद्य भरतानान्न पूर्वे नापरे जनाः ॥ दिवम्मर्त्य ऽइव पक्षाभ्यान्नोदापुः सप्त मानवा ऽइति ॥ २३ ॥ अथातो दक्षिणानाम् । मद्ध्यम्प्राति राष्ट्रस्य यदन्न्यद्भूमेश्च पुरुषेभ्यश्च ब्राह्मणस्य च वित्तात्प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्प्रतीच्च्यद्ध्वर्य्योरुदीच्च्युद्गातुस्तदेव होतृका ऽअन्न्वाभक्ताः ॥ २४ ॥ उदयनीयायाꣳ सꣳस्थितायाम् । एकविꣳशतिं वशा ऽअनूबन्ध्या ऽआलभते मैत्रावरुणीर्वैश्श्वदेवीर्ब्बार्हस्प्पत्त्या ऽएतासान्देवतानामाप्प्त्यै तद्यद्बार्हस्प्पत्त्या ऽअन्त्या[1] भवन्ति ब्रह्म वै बृहस्प्पतिस्तदु ब्रह्मण्ण्येवान्ततः प्प्रतितिष्ठति ॥ २५ ॥ अथ यदेकविꣳशतिर्भवन्ति । एकविꣳशो वा ऽएष य ऽएष तपति द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳश ऽएतामभिसम्पदम् ॥ २६ ॥ उदवसानीयायाꣳ

(१) 'ग' 'ज' पुस्तकयोः "०स्प्पत्यान्त्या" इति पाठः ।

सꣳस्थितायाम् *। चतस्रश्च जायाः कुमारीम्पञ्चमीञ्च-त्वारि च शतान्न्यनुचरीणां यथासमुदितन्दक्षिणान्ददाति ॥ २७ ॥ अथोत्तरꣳ सँवत्सरमृतुपशुभिर्यजते† । षड्भिरा-ग्नेयैर्वसन्ते षड्भिरैन्द्राग्नैर्ग्रीष्मे षड्भिः पार्जन्न्यैर्वा मारुतैर्वा वर्षासु षड्भिर्म्मैत्रावरुणैः शरदि षड्भिरैन्द्रावैष्णवैर्हेमन्ते षड्भिरैन्द्राबार्हस्पत्यैः शिशिरे षड्ऋतवः सँवत्सर ऽऋतुष्वेव सँवत्सरे प्प्रतितिष्ठति षट्त्रिꣳशदेते पशवो भवन्ति षट्त्रिꣳ-शदक्षरा बृहती बृहत्त्यामधि स्वर्ग्गो लोकः प्प्रतिष्ठितस्तद्व-न्ततो बृहत्त्यैव च्छन्दसा स्वर्ग्गे लोके प्प्रतितिष्ठति ॥२८॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिकासंख्या ॥ १०६ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

---

[ पुरुषमेधः ]

पुरुषो ह नारायणोऽकामयत । अतितिष्ठेयꣳ सर्व्वाणि भूतान्न्यहमेवेदꣳ सर्व्वꣳ स्यामिति स ऽएतम्पुरुषमेधम्प-ञ्चरात्रं यज्ञक्क्रतुमपश्श्यत्तमाहरत्तेनायजत तेनेष्ट्वात्यतिष्ठ-त्सर्व्वाणि भूतानीदꣳ सर्व्वमभवदतितिष्ठति सर्व्वाणि भूता-नीदꣳ सर्व्वम्भवति य ऽएवं विद्वान्पुरुषमेधेन यजते यो वैतदेवं वेद ॥ १ ॥ तस्य त्रयोविꣳशतिर्द्दीक्षाः ‡। द्वा-

* 'उदवसानीयान्ते भार्या ददाति यथासंवादꣳ सानुचरीः' (का० श्रौ०सू०२०.८.२४) इति।

† तथा च सूत्रितं कात्यायनमहर्षिणा 'प्रत्यृतु पशूनालभते षट् षड् वसन्तायाग्नेयानैन्द्रा-न्पार्जन्यान्मारुतान्वा मैत्रावरुणानैन्द्राबार्हस्पत्यान्' ( का० श्रौ० सू० २०. ८. ३० ) इति ।

‡ 'पुरुषमेधस्त्रयोविꣳशतिदीक्षोऽतिष्ठाकामस्य' ( का० श्रौ० सू० २१. १. १ ) इति ।

दशोपसदः पञ्च सुत्याः स ऽएष चत्वारिᳫं॑शद्रात्रः सदीक्षोपसत्कश्चत्वारिᳫं॑शदक्षरा विराट् तद्विराजमभिसम्पद्यते '[1]ततो विराडजायत विराजो ऽअधि पूरुष' ऽइत्येषा वै सा विराडेतस्या ऽएवैतद्विराजो यज्ञम्पुरुषञ्जनयति ॥ २ ॥ ता वा ऽएताः । चतस्रो दशतो भवन्ति तद्यदेताश्चतस्रो दशतो भवन्त्येषाञ्चैव लोकानामाप्त्यै दिशाञ्चेममेव लोकम्प्रथमया दशताप्नुवन्नन्तरिक्षन्द्वितीयया दिवन्तृतीयया दिशश्चतुर्थ्या तथैवैतद्यजमान ऽइममेव लोकम्प्रथमया दशताप्नोत्यन्तरिक्षन्द्वितीयया दिवन्तृतीयया दिशश्चतुर्थ्यैतावद्वा ऽइदᳫं॑ सर्वं यावदिमे च लोका दिशश्च सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ३ ॥ एकादशाग्नीषोमीयाः[2] † पशव ऽउपवसथे । तेषाᳫं॑ समानङ्कर्मैकादश यूपा ऽएकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ ४ ॥ ऐकादशिनाः सुत्यासु पशवो भवन्ति । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ ५ ॥ येद्वैवकादशिना भवन्ति । एकादशिनी वा ऽइदᳫं॑ सर्वम्प्रजापतिर्ह्येकादशिनी सर्वᳫं॑ हि प्रजापतिः सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ६ ॥ स वा ऽएष पुरुषमेधः पञ्चरात्रो यज्ञ-

---

( १ ) शु० य० सं० ३१. ५ ।

( २ ) 'ग' 'ज' पुस्तकयोः "एकादशाग्निषोमीयाः" इति पाठो दृश्यते, स तु प्रामादिक एव, 'ईदग्नेः सोमवरुणयोः' ( पा० ६. ३. २७ ) इति सूत्रेण—ईद्विधानात् ।

† का० श्रौ० सू० २१. १. ५ ।

कृतुर्ब्भवति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्त्तवः सँव्वत्सरो यत्किञ्च पञ्चविधमधिदेवतमद्ध्यात्मन्तदेनेन सर्व्वमाप्नोति ॥ ७ ॥ तस्याग्निष्टोमः प्प्रथममहर्ब्भवति । अथोक्क्थ्योऽथातिरात्रोऽथोक्क्थ्योऽथाग्निष्टोमः स वा ऽएष ऽउभयतोज्ज्योतिरुभयतऽउक्क्थ्यः ॥ ८ ॥ यवमद्ध्यः पञ्चरात्रो भवति । इमे वै लोकाः पुरुषमेध ऽउभयतोज्ज्योतिषो वा ऽइमे लोका ऽअग्निनेत ऽआदित्येनामुतस्तस्म्मादुभयतोज्ज्योतिरन्नमुक्क्थ्य ऽआत्मातिरात्रस्तद्यदेता ऽउक्क्थ्यावतिरात्रमभितो भवतस्तस्म्मादयमात्मान्नेन परिवृढोऽथ यदेष व्वर्षिष्ठोऽतिरात्रोऽहूनाᳫं स मद्ध्ये तस्म्माद्यवमद्ध्यो युते ह वै द्विषन्तम्भ्रातृव्व्यमयमेवास्ति नास्य द्विषन्भ्रातृव्व्य ऽइत्याहुर्य्य ऽएवं व्वेद ॥ ९ ॥ तस्यायमेव लोकः प्प्रथममहः । अयमस्य लोको व्वसन्त ऽऋतुर्य्यदूर्द्ध्वमस्म्माल्लोकादर्व्वाचीनमन्तरिक्षात्तद्द्वितीयमहस्तद्वस्य ग्ग्रीष्म्म ऽऋतुरन्तरिक्षमेवास्य मद्ध्यममहरन्तरिक्षमस्य व्वर्षाशरदावृतू यदूर्द्ध्वमन्तरिक्षादर्व्वाचीनन्दिवस्तच्चतुर्त्थमहस्तद्वस्य हेमन्त ऽऋतुर्द्यौरेवास्य पञ्चममहर्द्यौरस्य शिशिर ऽऋतुरित्यधिदेवतम् ॥ १० ॥ अथाद्ध्यात्मम् । प्रतिष्ठैवास्य प्प्रथममहः प्प्रतिष्ठो ऽअस्य व्वसन्त ऽऋतुर्य्यदूर्द्ध्वम्प्रतिष्ठाया ऽअवाचीनम्मद्ध्यात्तद्द्वितीयमहस्तद्वस्य ग्ग्रीष्म्म ऽऋतुर्म्मद्ध्यमेवास्य मद्ध्यममहर्म्मद्ध्यमस्य व्वर्षाशरदावृतू यदूर्द्ध्वम्मद्ध्यादवाचीनः शीर्ष्णस्तच्चतुर्त्थमहस्तद्वस्य हेमन्त ऽऋतुः शिर ऽएवास्य पञ्चममहः शिरोऽस्य शिशिर ऽऋतु-

रेवमिमे च लोकाः सँवत्सरश्चात्मा च पुरुषमेधमभिसम्पद्यन्ते सर्वं वा ऽइमे लोकाः सर्वꣳ सँवत्सरः सर्वमात्मा सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ११ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ ब्राह्मणादीनामष्टाचत्वारिंशत्संख्यकानामग्निष्ठे यूपे नियोजनादि ]

अथ यस्मात्पुरुषमेधो नाम । इमे वै लोकाः पूरयमेव पुरुषो योऽयम्पवते सोऽस्याम्पुरि शेते तस्मात्पुरुषस्तस्य यदेषु लोकेष्वन्नन्तदस्यान्नम्मेधस्तद्यदस्यैतदन्नम्मेधस्तस्मात्पुरुषमेधोऽथो यदस्मिन्मेध्यान्पुरुषानालभते तस्माद्वेव पुरुषमेधः ॥ १ ॥ तान्वै मद्ध्यमेऽहन्नालभते । अन्तरिक्षं वै मद्ध्यममहरन्तरिक्षमु वै सर्वेषाम्भूतानामायतनमथो ऽअन्नं वा ऽएते पशव ऽउदरम्मद्ध्यममहरुदरे तदन्नन्दधाति ॥ २ ॥ तान्वै दश दशालभते । दशाक्षरा विराड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै ॥ ३ ॥ एकादश दशत ऽआलभते । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानो मद्ध्यतः पाप्मानमपहते ॥ ४ ॥ अष्टाचत्वारिꣳशतम्मद्ध्यमे यूप ऽआलभते । अष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्द्धे ॥५॥ एकादशैकादशेतरेषु । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानोऽभितः पाप्मानमपहते ॥ ६ ॥ अष्टा ऽउत्तमानालभते । अष्टाक्षरा गायत्री ब्रह्म गायत्री तद्ब्रह्मैवैतदस्य

सर्व्वस्योत्तमङ्करोति तस्म्माद्ब्रह्मास्य सर्व्वस्योत्तममित्याहुः ॥ ७ ॥ ते वै प्प्राजापत्या भवन्ति । ब्ब्रह्म वै प्प्रजापतिर्ब्ब्राह्मो हि प्प्रजापतिस्तस्म्मात्प्राजापत्या भवन्ति ॥ ८ ॥ स वै पशूनुपाकरिष्ष्यन् *। एतास्तिस्त्रः सावित्त्रीराहुतीर्ज्जुहोति 'देव सवितस्तत्सवितुर्व्वरेण्ण्यं विश्श्वानि देव सवित'रिति सवितारम्प्रीणाति सोऽस्म्मै प्प्रीत ऽएतान्प्पुरुषान्प्रसौति तेन प्प्रसूतानालभते ॥ ९ ॥ ब्रह्मणे ब्ब्राह्मणमालभते । ब्ब्रह्म वै ब्ब्राह्मणो ब्ब्रह्मैव तद्ब्रह्मणा समर्द्धयति क्षत्त्राय राजन्न्यं क्षत्त्रं वै राजन्न्यः क्षत्त्रमेव तत्क्षत्त्रेण समर्द्धयति मरुद्भ्यो व्वैश्श्यं व्विशो वै मरुतो व्विशमेव तद्विशा समर्द्धयति तपसे शूद्रन्तपो वै शूद्रस्तप ऽएव तत्तपसा समर्द्धयत्येवमेता देवता यथारूपम्पशुभिः समर्द्धयति ता ऽएनः समृद्धाः समर्द्धयन्ति सर्व्वैः कामैः ॥ १० ॥ आज्ज्येन जुहोति । तेजो वा ऽआज्ज्यन्तेजसैवास्मिँस्तत्तेजो दधात्याज्ज्येन जुहोत्येतद्वै देवानाम्प्रियन्धाम यदाज्ज्यम्प्रियेणैवैनान्धाम्म्ना समर्द्धयति त ऽएनं समृद्धाः समर्द्धयन्ति सर्व्वैः कामैः ॥ ११ ॥ नियुक्तान्पुरुषान् । ब्रह्मा दक्षिणतः पुरुषेण नारायणेनाभिष्ष्टौति 'सहस्रशीर्षा[२] पुरुषः सहस्राक्षः सहस्रपा'दित्येतेन षोडशर्च्चेन षोडशकलं व्वा ऽइदं सर्व्वं सर्व्वम्पुरुषमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्या ऽइत्थमसीत्थमसीत्युपस्तौत्येवैनमेतन्महयत्येवाथो यथैष तथैनमेतदाह

* 'पशूनुपाकरिष्यन्नतिरात्रेण देव सवितरिति प्रत्यृचं जुहोति' ( का० श्रौ० सू० २१. १. ६ ) इति ।

( १ ) शु० य० सं० ३० । १–३ । ( २ ) शु० य० सं० ३१. १ ।

तत्पर्य्यग्निकृताः पशवो बभूवुरसंज्ञप्ताः ॥ १२ ॥ अथ हैनं व्वागभ्युवाद । पुरुष मा सन्तिष्ठिपो यदि सᳯस्थापयिष्यसि पुरुष ऽएव पुरुषमत्स्यतीति तान्पर्य्यग्निकृतानेवोदसृजत्तद्देवत्या ऽआहुतीरजुहोत्ताभिस्ता देवता ऽअप्रीणात्ता ऽएनम्प्रीता ऽअप्रीणन्त्सर्व्वैः कामैः ॥ १३ ॥ आज्येन जुहोति । तेजो वा ऽआज्यन्तेजसैवास्मिँस्तत्तेजो दधाति ॥ १४ ॥ ऐकादशिनैः सᳯस्थापयति । एकादशाक्षरा त्रिष्टुब्व्वज्रस्त्रिष्टुब्व्वीर्य्यन्त्रिष्टुब्व्वज्रेणैवैतद्वीर्य्येण यजमानो मद्ध्यतः पाप्मानमपहते ॥ १५ ॥ उदयनीयायाᳯ सᳯस्थितायाम् । एकादश व्वशा ऽअनूबन्ध्या ऽआलभते मैत्रावरुणीर्व्वैश्वदेवीर्ब्बार्हस्पत्या ऽएतासान्देवतानामाप्त्यै तद्यद्बार्हस्पत्या ऽअन्त्या भवन्ति ब्ब्रह्म वै बृहस्पतिस्तदु ब्ब्रह्मण्येवान्ततः प्प्रतितिष्ठति ॥ १६ ॥ अथ यदेकादश भवन्ति । एकादशाक्षरा त्रिष्टुब्व्वज्रस्त्रिष्टुब्व्वीर्य्यन्त्रिष्टुब्व्वज्रेणैवैतद्वीर्य्येण यजमानोऽन्ततः[1] पाप्मानमपहते त्रैधातव्व्युदवसानीयासावेव बन्धुः ॥ १७ ॥ अथातो दक्षिणानाम् । मद्ध्यम्प्राति राष्ट्रस्य यदन्यद्भूमेश्च ब्ब्राह्मणस्य च व्वित्तात्सपुरुषम्प्राची दिग्घोतुर्द्दक्षिणा ब्ब्रह्मणः प्प्रतीच्च्यद्ध्वर्य्योरुदीच्च्युद्गातुस्तदेव होतृका ऽअन्वाभक्ताः ॥१८॥ अथ यदि ब्ब्राह्मणो यजेत । सर्व्ववेदसन्दद्यात्सर्वं व्वै ब्ब्राह्मणः सर्व्वᳯ सर्व्ववेदसᳯ सर्व्वम्पुरुषमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै

(1) 'ग' 'ज' पुस्तकयोः "मध्यतः" इति पाठः ।

॥१९॥ अथात्मन्नग्नी समारोह्य *। उत्तरनारायणेनादित्यमुपस्थायानपेक्षमाणोऽरण्यमभिप्रेयात्तदेव मनुष्येभ्यस्तिरो भवति यद्यु ग्रामे विवत्सेदरण्योरग्नी समारोह्योत्तरनारायणेनैवादित्यमुपस्थाय¹ गृहेषु प्रत्यवस्येदथ तान्यज्ञक्रतूनाहरेत यानभ्याप्नुयात्स वा एष न सर्वस्मा अनुवक्तव्यः सर्वं हि पुरुषमेधो नेत्सर्वस्मा इव सर्वं ब्रवाणीति यो न्वेव ज्ञातस्तस्मै ब्रूयादथ योऽनूचानोऽथ योऽस्य प्रियः स्यान्नेत्त्वेव सर्वस्मा इव ॥ २० ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

—०—

[ सर्वमेधः ]

ब्रह्म वै स्वयम्भु तपोऽतप्यत । तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहम्भूतेष्वात्मानञ्जुहवानि भूतानि चात्मनीति तत्सर्वेषु भूतेष्वात्मानं हुत्वा भूतानि चात्मनि सर्वेषाम्भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यम्पर्यैत्तथैवैतद्यजमानः सर्वमेधे सर्वान्मेधान्हुत्वा ²सर्वेषाम्भूतानां

* का० श्रौ० सू० २१. १. १७। 'गार्हपत्येऽधरारणिमनुप्रहृत्याहवनीय उत्तरारणिमात्मन्यग्नी समारोप्यारण्यं व्रजेत्' इति शाङ्खायनोक्तिः । तथा च मनुः 'आत्मन्यग्निं समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्' ( मनु० ६. ३८ ) इति ।

'त्रैधातव्यन्ते समारोह्यात्मन्नग्नी सूर्यमुपस्थायाद्भ्यः सम्भृत इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा न प्रत्यवेयात्' 'ग्रामे वा विवत्सन्नरण्योः' ( का० श्रौ० सू० २१ । १ । १७–१८ ) इति कात्यायनोक्तिः ।

( १ ) "अद्भ्यः सम्भृतः" इत्यादिषण्णां कण्डिकानामुत्तरनारायणमिति संज्ञा ।

( २ ) 'ग' 'ज' पुस्तकयोः 'सर्व्वेषाम्भूतानाम्' इत्यस्य स्थाने 'सर्व्वाणि भूतानि' इति पाठः समुपलभ्यते ।

श्रैष्ठ्यꣳ स्वाराज्यमाधिपत्यम्पर्य्येति ॥ १ ॥ स वा ऽएष सर्वमेधो दशरात्रो यज्ञक्रतुर्भवति । दशाक्षरा विराड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै तस्मिन्नग्निम्पराद्ध्यर्ञ्चिनोति परमो वा ऽएष यज्ञक्रतूनां यत्सर्वमेधः परमेणैवैनम्परमताङ्गमयति ॥ २ ॥ तस्याग्निष्टुदग्निष्टोमः प्रथममहर्भवति । अग्निर्वा ऽअग्निष्टुदग्निष्टोमोऽग्निमुखा ऽउ वै सर्वे देवाः सर्वेषान्देवानामाप्त्यै तस्याग्नेया ग्ग्रहा भवन्त्याग्नेय्यः पुरोरुचः सर्वमाग्नेयमसदिति ॥ ३ ॥ इन्द्रस्तुदुक्थ्यो द्वितीयमहर्भवति । इन्द्रो वै सर्वे देवाः सर्वेषान्देवानामाप्त्यै तस्यैन्द्रा ग्ग्रहा भवन्त्यैन्द्र्यः पुरोरुचः सर्वमैन्द्रमसदिति ॥ ४ ॥ सूर्य्यस्तुदुक्थ्यस्तृतीयमहर्भवति । सूर्यो वै सर्वे देवाः सर्वेषान्देवानामाप्त्यै तस्य सौर्या ग्ग्रहा भवन्ति सौर्य्यः पुरोरुचः सर्वꣳ सौर्यमसदिति ॥ ५ ॥ वैश्वदेवश्चतुर्थमहर्भवति । विश्वे वै सर्वे देवाः सर्वेषान्देवानामाप्त्यै तस्य[२] वैश्वदेवा ग्ग्रहा भवन्ति वैश्वदेव्यः पुरोरुचः सर्वं वैश्वदेवमसदिति ॥ ६ ॥ आश्वमेधिकम्मद्ध्यमम्पञ्चममहर्भवति । तस्मिन्नश्वम्मेद्ध्यमालभतेऽश्वमेधस्यैवाप्त्यै ॥ ७ ॥ पौरुषमेधिकम्मद्ध्यमꣳ षष्ठमहर्भवति । तस्मिन्नमेद्ध्यान्पुरुषानालभते पुरुषमेधस्यैवाप्त्यै ॥ ८ ॥ अप्तोर्य्यामः सप्तममहर्भवति । सर्वेषां यज्ञक्रतूनामाप्त्यै तस्मिन्त्सर्वान्मेद्ध्यानालभते यच्च प्राणि यच्चाप्राणं वपा वपावताञ्जुहोति

( १-२ ) 'ग' 'ज' पुस्तकयोः 'तस्य' इति पाठो नोपलभ्यते ।

श्च ऽउत्कृत्तमवपाकानाᳫं संᳫंश्च मोषधिवनस्पतीनाम्प्र- किरन्ति शुष्काणाञ्चार्द्राणाञ्चान्नमन्नञ्जुहोत्यन्नस्यान्नस्याप्त्यै सर्वञ्जुहोति सर्वस्मै जुहोति सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै प्प्रातःसवने हुतासु वपास्वेवमेव तृतीयसवने हुतेषु हविःषु ॥ ९ ॥ त्रिणवमष्टममहर्ब्भवति । वज्रो वै त्रिणवो वज्रेण खलु वै क्षत्रᳫं स्पृतन्तद्वज्रेणैव क्षत्रᳫं स्पृणोति ॥ १० ॥ त्रयस्त्रिᳫंशन्नवममहर्ब्भवति । प्प्रतिष्ठा वै त्रय- स्त्रिᳫंशः प्प्रतिष्ठित्यै ॥ ११ ॥ विश्वजित्सर्वपृष्ठोऽति- रात्रो दशममहर्ब्भवति । सर्वं वै विश्वजित्सर्वपृष्ठोऽति- रात्रः सर्वᳫं सर्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ १२ ॥ अथातो दक्षिणानाम् । मद्ध्यम्प्रति राष्ट्रस्य यदन्यद्ब्रा- ह्मणस्य वित्तात्सभूमि सपुरुषम्प्राची दिग्घोतुर्द्दक्षिणा ब्रह्मणः प्प्रतीच्च्यद्ध्वर्य्योरुदीच्च्युद्गातुस्तदेव होतृका ऽअन्वाभक्ताः ॥ १३ ॥ तेन हैतेन विश्वकर्म्मा भौवन ऽईजे । तेनेष्ट्वात्यतिष्ठत्सर्वाणि भूतानीदᳫं सर्वमभवदति- तिष्ठति सर्वाणि भूतानीदᳫं सर्वम्भवति य ऽएवं विद्वा- न्त्सर्वमेधेन यजते यो वैतदेवं वेद ॥ १४ ॥ तᳫं ह कश्यपो याजयाञ्चकार । तदपि भूमिः श्लोकञ्जगौ न मा मर्त्यः कश्चन दातुमर्हति विश्वकर्म्मन्भौवन मन्द ऽआसिथ ॥ उपमङ्क्ष्यति स्या सलिलस्य मद्ध्ये मृषैष ते सङ्गरः कश्यपायेति ॥ १५ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

[ ब्राह्मणचतुष्टयेन पितृमेधनिरूपणम् ]

* अथास्म्मै श्म्मशानङ्कुर्वन्ति । गृहान्न्वा प्प्रज्ञानं वा यो वै कश्च म्म्रियते स शवस्तस्म्मा ऽएतदन्नङ्करोति तस्म्माच्छ-वान्नꣳ शवान्नꣳ ह वै तच्छ्मशानमित्याचक्षते परोक्षꣳ श्मशा ऽउ हैव नाम पितृणामत्तारस्ते हामुष्मिँल्लोकेऽकृतश्म्मशानस्य साधुकृत्यामुपदम्भयन्ति तेब्भ्य ऽएतदन्नङ्करोति तस्म्मा-च्छ्मशान्नꣳ श्मशान्नꣳ ह वै तच्छ्मशानमित्याचक्षते परोऽक्षम् ॥ १ ॥ तद्वै न क्षिप्प्रङ्कुर्य्यात् । नेन्नवमघङ्कर-वाणीति चिर ऽएव कुर्य्यादघमेव तत्तिरꣳ करोति यत्र समा नानु चन स्म्मरेयुरश्रुतिमेव तदघङ्गमयति यद्यनु-स्म्मरेयुꣳ ॥ २ ॥ अयुङ्क्षु सँव्वत्सरेषु कुर्य्यात् । अयुक्क्ꣳ हि पितृणामेकनक्षत्र ऽएकनक्षत्रꣳ हि पितृणाममावास्या-याममावास्या वा ऽएकनक्षत्रमेको हि यद्वेताꣳ रात्रिꣳ सर्व्वाणि भूतानि सँव्वसन्ति तेनो तङ्काममाप्नोति यꣳ सर्व्वेषु नक्षत्रेषु ॥ ३ ॥ शरदि कुर्य्यात् । स्वधा वै शरत्स्वधो वै पितृणामन्नन्तदेनमन्ने स्वधायान्दधाति माघे वा मा नोऽघ-मभूदिति निदाघे वा नि नोऽघन्धीयाता ऽइति ॥४॥ [अर्ध-प्रपाठकः ॥५०॥] चतुꣳस्त्रक्ति । देवाश्चासुराश्चोभये प्प्राजापत्या दिक्ष्वस्प्पर्द्धन्त ते देवा ऽअसुरान्त्सपत्नान्भ्रातृव्यान्दिग्भ्योऽनुदन्त तेऽदिक्काꣳ पराभवँस्तस्म्माद्या दैव्यꣳ प्प्रजा-

---

* अत्राध्यायारम्भे 'अथास्मै कल्याणङ्कुर्व्वन्ति' इत्यधिकः पाठः 'ग' 'ज' पुस्तकयोरुप-लभ्यते । स तु प्रामादिक एव प्रतीयते, प्राचीनतमहस्तलिखितपुस्तकेष्वदर्शनात् ।

श्चतुःस्रक्तीनि ताः श्मशानानि कुर्वतेऽथ या ऽआसुर्य्यः प्प्राच्च्यास्त्वद्ये त्त्वत्परिमण्डलानि तेऽनुदन्त ह्येनान्दिग्भ्य ऽउभे दिशावन्तरेण व्विदधाति प्प्राचीञ्च दक्षिणाञ्चैत-स्याᳬं ह दिशि पितृलोकस्य द्वारन्द्वारैवैनम्पितृलोकम्प्रपाद-यति स्रक्तिभिर्द्दिक्षु प्प्रतितिष्ठतीतरेणात्मनावान्तरदिक्षु तदेनᳬ सर्व्वासु दिक्षु प्प्रतिष्ठापयति ॥ ५ ॥ अथातो भूमिजोषणस्य । उदीचीनप्प्रवणे करोत्युदीची वै मनु-ष्ष्याणान्दिक्तदेनम्मनुष्ष्यलोक ऽआभजत्त्येतद्ध वै पितरो मनुष्ष्यलोक ऽआभक्ता भवन्ति यदेषाम्प्रजा भवति प्प्रजा हास्य श्श्रेयसी भवति ॥ ६ ॥ दक्षिणाप्प्रवणे * कुर्य्या-दित्याहुः । दक्षिणाप्प्रवणो वै पितृलोकस्तदेनम्पितृलोक ऽआभजतीति न तथा कुर्य्यादामीवद्ध नाम तच्छ्मशान-करणङ्क्षिप्प्रे हैषामपरोऽनुप्प्रैति ॥ ७ ॥ दक्षिणाप्प्रवणस्य प्प्रत्त्यर्षे कुर्य्यादित्यु हैक ऽआहुः । तत्प्रत्युच्छ्रितमघम्भव-तीति नो ऽएव तथा कुर्य्याद्यद्वा ऽउदीचीनप्प्रवणे करोति तदेव प्प्रत्युच्छ्रितमघम्भवति ॥ ८ ॥ यस्यैव समस्य सतः । दक्षिणतः पुरस्तादाप ऽएत्त्य सᳬंस्थायाप्प्रग्घ्नत्त्य ऽएता-न्दिशमभिनिष्प्पद्याक्षय्या ऽअपोऽपिपद्येरँस्तत्कुर्य्यादन्नं वा ऽआपोऽन्नाद्यमेवास्म्मा ऽएतत्परस्तात्प्रत्त्यग्गदधात्त्यमृतमु वा ऽआप ऽएषो ह जीवानान्दिगन्तरेण सप्तऽर्षीणाञ्चो-दयनमादित्त्यस्य चास्तमयनममृतमेव तज्जीवेषु दधाति तद्धैतत्प्रतिमीवन्नाम श्मशानकरणञ्जीवेभ्यो हितं य्यद्वाव

* 'दक्षिणाप्रवण एके' ( का० श्रौ० सू० २१. ३. १७ )।

जीवेभ्यो हितन्तत्पितृभ्यः ॥ ९ ॥ कम्वति * कुर्य्यात् । कम्मेऽसदित्यथो शम्वति शम्मेऽसदिति नाधिपथङ्कुर्य्यान्नाकाशे नेदाविरघङ्करवाणीति ॥ १० ॥ गुहा सद्वतापि स्यात् । तद्यद्गुहा भवत्यघमेव तद्गुहा करोत्यथ यद्वताप्प्यसौ वा ऽआदित्यः पाप्पनोऽपहन्ता स ऽएवास्म्मात्पाप्पानमपहन्त्यथो ऽआदित्यज्ज्योतिषमेवैनङ्करोति ॥११॥ न तस्मिन्न्कुर्य्यात् । यस्येत्थादनूकाशः स्याद्याचमानह्ह नाम तद्दिक्षिप्प्रे हैषामपरोऽनुप्प्रैति ॥ १२ ॥ चित्रम्पश्चात्स्यात् । प्रजा वै चित्रश्चित्रह्ह हास्य प्प्रजा भवति यदि चित्रन्न स्याद्वापः पश्चाद्वोत्तरतो वा स्युरापो ह्येव चित्रश्चित्रह्ह हैवास्य प्प्रजा भवति ॥ १३ ॥ ऊषरे करोति । रेतो वा ऽऊषाः प्प्रजननन्तदेनम्प्रजनन ऽआभजत्येतद्ध वै पितरः प्प्रजनन ऽआभक्ता भवन्ति यदेषाम्प्रजा भवति प्प्रजा हास्य श्श्रेयसी भवति ॥ १४ ॥ समूले समूलह्ह हि पितृणां वीरिणमिश्[1]श्र ऽएतद्धास्याः पित्र्यमनतिरिक्तमथो ऽअघमेव तद्बद्धं करोति ॥ १५ ॥ न भूमिपाशमभिविदध्यात् । न शरन्नाश्म्मगन्धान्नाध्याण्डान्न पृश्निपर्णीन्नाश्वत्थस्यान्तिकङ्कुर्य्यान्न विभीतकस्य न तिल्वकस्य न स्फूर्ज्जकस्य न हरिद्रोर्न्न न्यग्ग्रोधस्य ये चान्न्ये पापनामानो मङ्गलोपेप्सया नाम्म्नामेव परिहाराय ॥ १६ ॥ अथात ऽआवृदेव । अग्निविधयाग्निचितः श्मशानङ्करोति

* 'शम्वति कम्वति वा' ( का० श्रौ० सू० २१. ३. २२. ) इति ।

( १ ) 'वीरिणमिश्रमेतद्धास्याः' इति 'ग' पुस्तके । 'वीरिणमिश्रमेतमेतद्धास्याः' इति च 'ज' पुस्तके ।

यद्वै यजमानोऽग्निञ्चिनुतेऽमुष्मै तल्लोकाय यज्ञेनात्मानꣳ संस्कुरुत ऽएतदु ह यज्ञियङ्कर्म्मासꣳस्थितमा श्मशान-करणात्तंयदग्निविधयाग्निचितꣳ श्मशानङ्करोत्यग्निचित्यामेव तत्सꣳस्थापयति ॥१७॥ तद्वै न महत्कुर्यात् । नेन्महदघङ्कर-वाणीति यावानपक्षपुच्छोऽग्निस्तावत्कुर्यादित्यु हैक ऽआहुꣳ समानो ह्यस्यैष ऽआत्मा यथैवाग्नेस्तथेति ॥ १८ ॥ पुरुष-मात्रन्त्वेव कुर्यात् । तथापरस्म्मा ऽअवकाशन्न करोति पश्चाद्वरीयꣳ प्प्रजा वै पश्चात्प्रजामेव तद्वरीयसीङ्कुरुत ऽउत्तरतो व्वर्षीयꣳ प्प्रजा वा ऽउत्तराꣳ प्प्रजामेव तद्वर्षीयसी-ङ्कुरुते तद्विधायापसलविसृष्टाभि स्पन्द्याभिꣳ पर्य्यातनो-त्यपसलवि पित्र्यꣳ हि कर्म्म ॥ १९ ॥ अथोद्धन्तवा ऽआह । स यावत्येव निवप्स्यन्त्स्यात्तावदुद्धन्न्यात्पुरुषमात्रन्त्वेवो-द्धन्न्यात्तथापरस्म्मा ऽअवकाशन्न करोत्यथो ऽओषधिलोको वै पितर ऽओषधीनाꣳ ह मूलान्न्युपसर्प्पन्त्यथो नेदस्या ऽअन्तर्हितोऽसदिति ॥ २० ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—o—

अन्तर्द्धायो हैके न्निवपन्ति । देवाश्चासुराश्चोभये प्प्राजापत्या ऽअस्मिँल्लोकेऽस्पर्द्धन्त ते देवा ऽअसुरान्त्स-पत्नान्भ्रातृव्व्यानस्म्माल्लोकादनुदन्त तस्म्माद्या दैव्व्यꣳ प्प्रजा ऽअनन्तर्हितानि ताꣳ श्मशानानि कुर्वतेऽथ या ऽआसुर्य्यꣳ प्प्राच्च्यास्त्वद्ये त्वदन्तर्हितानि ते चम्वान्त्वद्य-स्मिँस्त्वत् ॥ १ ॥ अथैनत्परिश्रिद्भिꣳ परिश्रयति ।

या ऽएवामूः परिश्रितस्ता ऽएता यजुषा ताः परिश्रयति तूष्णीमिमा देवश्चैव तत्पितृँश्च व्याकरोत्यपरिमिता-भिरपरिमितो ह्यसौ लोकः ॥ २ ॥ अथैनत्पलाशशाखया व्युदूहति *। यदेवादो व्युदूहनन्तदेत'दपेतो यन्तु पणयोऽसुम्ना देवपीयव, ऽइति पणीनेवैतदसुम्नान्देव-पीयूनसुररक्षसान्यस्माल्लोकादपह'न्त्यस्य[2] लोकः सुतावत' ऽइति सुतवान्हि य ऽईजानो 'द्युभिरहोभिरक्तुभिर्व्यक्त'-मिति तदेनमृतुभिश्चाहोरात्रैश्च सलोकङ्करोति ॥ ३ ॥ 'यमो[4] ददात्ववसानमस्मा' ऽइति। यमो ह वा ऽअस्या-मवसानस्येष्टे तमेवास्मा ऽअस्यामवसानं याचति तान्द-क्षिणोदस्यत्युदगितरान्देवश्चैव तत्पितृँश्च व्याकरोति ॥ ४ ॥ अथ दक्षिणतः सीरं युनक्ति। उत्तरत ऽइत्यु हैक ऽआहुः स यथा कामयेत तथा कुर्याद्युङ्क्तेति सम्प्रेष्याभिमन्त्रयते 'सविता[5] ते शरीरेभ्यः पृथिव्याँ-ल्लोकमिच्छत्वि'ति सवितैवास्यैतच्छरीरेभ्यः पृथिव्याँ-ल्लोकमिच्छति 'तस्मै[6] युज्यन्तामुस्त्रिया' ऽइत्येतस्मा ऽउ हि कर्म्मण ऽउस्त्रिया युज्यन्ते ॥ ५ ॥ षड्गवम्भवति। षड्ऋतवः संवत्सर ऽऋतुष्वेवैनमेतत्संवत्सरे प्रतिष्ठाया-म्प्रतिष्ठापयति तदपसलवि पर्य्याहृत्योत्तरतः प्रतीचीम्प्र-थमाञ्सीताङ्कृषति 'वायुः[7] पुनात्वि'ति 'सविता[8]

* का० श्रौ० सू० २१. १. ३१।

(१) शु० य० सं० ३५. १। (२) शु० य० सं० ३५. १। (३) शु० य० ३५. १। (४) शु० य० सं० ३५. १। (५) शु० य० सं० ३५. २। (६) शु० य० सं० ३५. २। (७) शु० य० सं० ३५. ३। (८) शु० य० सं० ३५. ३।

पुनात्त्वि'ति जघनार्द्धेन दक्षिणा'ग्नेर्[1]भ्राजसे'ति दक्षिणा-
र्द्धेन प्प्राचीᳫं 'सूर्य्यस्य[2] वर्च्चसे'त्यग्ग्रेणोदीचीम् ॥ ६ ॥ *
चतस्रः सीता यजुषा कृषति †। तद्यच्चतसृषु दिक्ष्वन्नन्त-
स्म्मिन्नेवैनमेतत्प्रतिष्ट्ठापयति तद्वै यजुषाद्धा वै तद्यद्यजुरद्धो
तद्यदिमा दिशः ॥ ७ ॥ अथाश्मानं विकृषति । तद्यदेव
सँवत्सरेऽन्नन्तस्म्मिन्नेवैनमेतत्प्रतिष्ट्ठापयति तूष्णीमपरि-
मिताभिरपरिमितो ह्यसौ लोकः ॥ ८ ॥ अथैनद्विमुञ्चति ।
कृत्वा तत्कर्म्म यस्म्मै कर्म्मण ऽएनद्युङ्क्ते 'विमुच्यन्ता[3]-
मुस्रिया' ऽइत्येतस्म्मा ऽउ हि कर्म्मण ऽउस्रिया युज्यन्ते
तद्दक्षिणोदस्यत्युदगितरद्वेवञ्चैव तत्पित्र्यञ्च ऽव्याकरोति ॥९॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—०—

अथ सर्व्वौषधं वपति । यद्वेवादः सर्व्वौषधन्तदेतद्बह्वी-
भिस्तद्रूपत्येकयेदन्द्वेवञ्चैव तत्पित्र्यञ्च ऽव्याकरो'त्यश्वत्त्थे[4]
वो निषदनम्पर्ण्णे वो वसतिष्कृते'ति ज्योग्ग्जीवातुमेवैभ्य
ऽएतदाशास्ते तथो हैषामेकैकोऽपरो जरसानुप्प्रैति ॥ १ ॥
अथैनन्निवपति । इयं वै पृथिवी प्प्रतिष्ठास्यामेवैनमेतत्प्रति-
ष्ट्ठायाम्प्रतिष्ट्ठापयति पुरादित्यस्योदयात्तिर ऽइव वै पितर-
स्तिर ऽइव रात्रिस्तिर ऽएव तत्करोति यथा कुर्व्वतोऽभ्यु-

(१) शु० य० सं० ३५. ३ । (२) शु० य० सं० ३५. ३
* अत्र शतम् ६८०० ।
† का० श्रौ० सू० २१. ४. १ ।
(३) शु० य० सं० ३५. ३ । (४) शु० य० सं० ३५. ४ ।

दियात्तदेनमुभयोरहोरात्रयोः प्रतिष्ठापयति ॥२॥ 'सविता[1] ते शरीराणि। मातुरुपस्थ ऽआवपतु'ति सवितैवास्यैतच्छ‍रीराण्यस्यै पृथिव्यै मातुरुपस्थ ऽआवपति 'तस्यै[2] पृथिवि शम्भवे'ति यथैवास्म्मा ऽइयꣳ शꣳ स्यादेवमेतदाह 'प्रजापतौ[3] त्वा देवतायामुपोदके लोके निदधाम्म्यसा'विति नाम गृह्णात्ययं वै लोक ऽउपोदकस्तदेनम्प्रजापतौ देवतायामुपोदके लोके निदधाति ॥ ३ ॥ अथ कश्चिदाह। एतान्दिशमनवानन्त्स्त्वा कुम्भम्प्रक्षीयानपेक्षमाण ऽएहीति तत्र जपति 'परम्[4] मृत्यो ऽअनु परेहि पन्थां यस्ते ऽअन्य ऽइतरो देवयानात् ॥ चक्षुष्म्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳ रीरिषो मोत वीरा'निति ज्योग्ग्जीवातुमेवैभ्य ऽएतदाशास्ते तथो हैषामेकैकोऽपरो जरसानुप्रैति ॥ ४ ॥ अथैनं यथाङ्कल्प्पयति। 'शं[5] वातः शꣳ हि ते घृणिः शन्ते भवन्त्विष्टकाः॥ शन्ते भवन्त्वग्न्नयः पार्त्थिवासो मा त्वाभिशूशुचन्' ॥ 'कल्पन्तान्ते[6] दिशस्तुभ्यमापः शिवतमास्तुभ्यम्भवन्तु सिन्धवः ॥ अन्तरिक्षꣳ शिवन्तुभ्यङ्कल्प्पन्तान्ते दिशः सर्वा' ऽइत्येतदेवास्म्मै सर्वङ्कल्प्पयत्येतदस्म्मै शिवङ्करोति ॥ ५ ॥ अथ त्रयोदश पादमात्र्य ऽइष्टका ऽअलक्षणाः कृता भवन्ति। या ऽएवामूरग्ग्नाविष्टकास्ता ऽएता यजुषा ता ऽउपदधाति तूष्णीमिमा दैवञ्चैव तत्पित्र्यञ्च व्याकरोति ॥ ६ ॥ त्रयोदश भवन्ति। त्रयोदश मासाः

(१) शु० य० सं० ३५.५। (२) शु० य० सं० ३५.५। (३) शु० य० सं० ३५.६। (४) शु० य० सं० ३५.७। (५) शु० य० सं० ३५.८। (६) शु० य० सं० ५३.९।

सँवत्सर ऽऋतुष्ष्वेवैनमेतत्संवत्सरे प्प्रतिष्ट्ठायाम्प्रतिष्ट्ठापयति ॥ ७ ॥ पादमात्र्यो भवन्ति । प्प्रतिष्ट्ठा वै पादः प्प्रतिष्ट्ठामेवास्म्मै करोत्यलक्षणा भवन्ति तिर ऽइव वै पितरस्तिर ऽइव तद्यदलक्षणन्तिर ऽएव तत्तिरः करोति ॥ ८ ॥ तासामेकाम्मद्ध्ये प्प्राचीमुपदधाति । स ऽआत्मा तिस्रः पुरस्तान्म्मूर्द्धसꣳहितास्तच्छिरस्तिस्रो दक्षिणतः स दक्षिणः पक्षस्तिस्र ऽउत्तरतः स ऽउत्तरः पक्षस्तिस्रः पश्चात्तत्पुच्छꣳ सोऽस्यैष पक्षपुच्छवानात्मा यथैवाग्नेस्तथा ॥ ९ ॥ अथ प्प्रदरात्पुरीषमाहर्त्तवा ऽआह । एतद्ध्यास्याः पित्र्यमनतिरिक्तमथो ऽअघमेव तद्बहु करोत्यस्मिन्नु हैकेऽवान्तरदेशे कर्षून्खात्वा ततोऽभ्याहारङ्कुर्वन्ति परिकृषन्त्यु हैके दक्षिणतः पश्चादुत्तरतस्ततोऽभ्याहारङ्कुर्वन्ति स यथा कामयेत तथा कुर्य्यात् ॥ १० ॥ तद्वै न महत्कुर्य्यात् । नेन्महदघङ्करवाणीति यावानुद्बाहुः पुरुषस्तावत्क्षत्रियस्य * कुर्य्यान्मुखदघ्नम्ब्राह्मणस्योपस्थदघ्नꣳ स्त्रिया ऽऊरुदघ्नं वैश्यस्याष्ठीवद्दघ्नꣳ शूद्रस्यैवं वीर्य्या ह्येत ऽइति ॥ ११ ॥ अधोजानु त्वेव कुर्य्यात् । तथापरस्म्मा ऽअवकाशन्न करोति तस्य क्रियमाणस्य तेजनीमुत्तरतो धारयन्ति प्प्रजा ह सा प्प्रजामेव तदुत्तरतो धारयन्ति तान्न न्न्यस्येद्धृत्वा वैनामूढ्वा वा गृहेषूच्छ्रयेत्प्रजामेव तद्गृहेषूच्छ्रयति ॥ १२ ॥ कृत्वा यवान्न्वपति । अघम्मे यवयानित्त्यवकाभिः प्प्रच्छादयति कम्मेऽसदिति दर्ब्भैः प्प्रच्छादयत्त्यरूक्षतायै ॥ १३ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

अथैनञ्छङ्कुभिः परिणिहन्ति । पालाशम्पुरस्ताद्ब्रह्म वै पलाशो ब्रह्मपुरोगवमेवैनᳬं स्वर्गँल्लोकङ्गमयति शमीमयमुत्तरतः शम्मेऽसदिति व्वारणम्पश्चादघम्मे व्वारयाता ऽइति व्वृत्रशङ्कुन्दक्षिणतोऽघस्यैवानत्ययाय ॥ १ ॥ अथ दक्षिणतः परिवक्के खनन्ति । ते क्षीरेण चोदकेन च पूरयन्ति ते हैनममुष्मिँल्लोकेऽक्षिते कुल्ल्ये ऽउपधावतः सप्तोत्तरतस्ता ऽउदकेन पूरयन्ति न ह वै सप्त स्रवन्तीरघमत्येतुमर्हत्यघस्यैवानत्ययाय ॥ २ ॥ अश्मनस्त्रींस्त्रीन्प्रकिरन्ति । ता ऽअभ्युत्तरन्त्य[1]'श्मन्वती रीयते सᳬंरभध्वमुत्तिष्ठत प्रतरता सखायः ॥ अत्रा जहीमोऽशिवा ये ऽअसञ्छिवान्वयमुत्तरेमाभि व्वाजा'निति यथैव यजुस्तथा बन्धुः ॥ ३ ॥ अपामार्गैरपमृजते । अघमेव तदुपमृजतेऽ'[2]पाघमप किल्बिषमप कृत्यामपो रपः ॥ अपामार्ग त्वमस्मदप दुःष्वप्न्यᳬं सुवे'ति यथैव यजुस्तथा बन्धुः ॥ ४ ॥ यत्रोदकम्भवति तत्स्नान्ति । '[3]सुमित्रिया न ऽआप ऽओषधयः सन्त्वि'त्यञ्जलिनाप ऽउपाचति व्वज्रो वा ऽआपो व्वज्रेणैवैतन्मित्रधेयङ्कुरुते '[4]दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च व्वयन्द्विष्म' ऽइति यामस्य दिशन्द्वेष्यः स्यात्तान्दिशम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ ५ ॥ स यदि स्थावरा ऽआपो भवन्ति । स्थापयन्त्येषाम्पाप्मानमथ यदि व्वहन्ति व्वहन्त्येवैषाम्पाप्मानᳬं स्नात्वाहतानि व्वा-

* 'उरः क्षत्रियस्योर्ध्वबाहु वा' ( का० श्रौ० सू० २१. ४. १३ ) इति ।

( १ ) शु० य० सं० ३५. १० । ( २ ) शु० य० सं० ३५. ११ । ( ३ ) शु० य० सं० ३५. १२ । ( ४ ) शु० य० सं० ३५. १२ ।

साᳫंसि परिधायानडुहः पुच्छमन्न्वारभ्भ्यायन्त्याग्नेयो वा ऽअनड्वानग्निमुखा ऽएव तत्पितृलोकाज्जीवलोकमभ्भ्यायन्त्यथो ऽअग्निर्वै पथोऽतिवोढा स ऽएनानतिवहति ॥ ६ ॥ '[1]उद्वयन्तमसस्प्परी'ति । एतामृचञ्जपन्तो यन्ति तत्तमसः पितृलोकादादित्यञ्ज्योतिरभ्भ्यायन्ति तेभ्भ्य ऽआगतेभ्भ्य ऽआञ्जनाभ्भ्यञ्जने प्प्रयच्छन्त्येष ह मानुषोऽलङ्कारस्तेनैव तम्मृत्युमन्तर्द्दधते ॥ ७ ॥ अथ गृहेष्ष्वग्निᳪ समाधाय । वारणान्न्परिधीन्न्परिधाय वारणेन स्रुवेणाग्नय ऽआयुष्ष्मत ऽआहुतिञ्जुहोत्त्यग्निर्व्वा ऽआयुष्ष्मानायुष ऽईष्ष्टे तमेवैभ्भ्य ऽआयुर्ष्याचत्त्य'[2]ग्न ऽआयूᳫंषि पवस' ऽइति पुरोऽनुवाक्क्याभाजनम् ॥ ८ ॥ अथ जुहोति । '[3]आयुष्ष्मानग्ग्ने हविषा व्वृधानो घृतप्प्रतीको घृतयोनिरेधि ॥ घृतम्पीत्त्वा मधु चारु गव्व्यम्पितेव पुत्त्रमभिरक्षतादिमान्त्स्वाहे'ति यथैवैनानभिरक्षेद्यथाभिगोपायेदेवमेतदाह ॥ ९ ॥ तस्य पुराणोऽनड्वान्दक्षिणा * । पुराणा यवाः पुराण्ण्यासन्दी सोपबर्हणैषा न्न्वादिष्टा दक्षिणा कामं ऽयथाश्रद्धम्भूयसीर्द्दद्यादिति न्न्वग्निचितः ॥ १० ॥ अथानग्निचितः । एतदेव भूमिजोषणमेतत्समानङ्कर्म्म यदन्न्यदग्निकर्म्मणः कुर्य्यादाहिताग्नेः शर्करा ऽइत्त्यु हैक ऽआहुर्य्या ऽएवामूरग्ग्न्याधेयशर्क्करास्ता ऽएता ऽइति न कुर्य्यादित्त्येक ऽईश्वरो हैता ऽअनग्निचितᳪ सन्तप्प्तोरिति स यथा कामयेत तथा

(१) शु० य० सं० ३५. १४। (२) शु० य० सं० ३५. १६। (३) शु० य० सं० ३५. १७।

* तथा च कात्यायनः "आसन्दी सोपधाना दक्षिणाऽनड्वान्यवाश्च सर्वं पुराणम् ( का० श्रौ० सू० २१. ४. २९ ) इति।

कुर्य्यात् ॥ ११ ॥ मर्य्यादाया ऽएव लोष्टमाहृत्य । अन्तरेण निदधाती'मञ्जीवेभ्यः परिधिन्दधामि मैषान्नु गादपरो ऽअर्त्थमेतम् ॥ शतञ्जीवन्तु शरदः पुरूचीरन्तर्म्मृत्युन्दधताम्पर्व्वतेने'ति जीवेभ्यश्चैवैताम्पितृभ्यश्च मर्य्यादाङ्करोत्यसम्भेदाय तस्मादु हैतज्जीवाश्च पितरश्च न सन्दृश्यन्ते ॥ १२ ॥

अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ॥१००॥

इत्यऽष्टमोऽध्यायः ॥ ८ ॥

अश्वमेधनाम त्रयोदशं काण्डं † समाप्तम् ॥ १३ ॥



(१) शु० य० सं० ३५. १५।

† अस्मिन्काण्डे कण्डिकासंख्या ४३२ ।

# अथोपनिषन्नाम * चतुर्दशं काण्डम्

—— ० ——

काण्डेऽस्मिन्प्रतिपाद्या विषयाः—घर्मः, प्रवर्ग्यः, महावीरः, प्रवर्ग्योत्सादनम्' प्रवर्ग्यकर्तृनियमः, बृहदारण्यकम्, काम्यहवनादि, गर्भाधानादि, जातकर्म, वंशब्राह्मणमिति ।

[ घर्मोपक्रमः ]

॥ ओ३म् ॥ देवा ह वै सत्रन्निषेदुः । अग्निरिन्द्रः सोमो मखो विष्णुर्विश्वे देवा ऽअन्यत्रैवाश्विभ्याम् ॥ १ ॥ तेषाङ्कुरुक्षेत्रन्देवयजनमास । तस्मादाहुः कुरुक्षेत्रन्देवानान्देवयजनमिति तस्माद्यत्र क्व च कुरुक्षेत्रस्य निगच्छति तदेव मन्यत ऽइदन्देवयजनमिति तद्धि देवानान्देवयजनम् ॥ २ ॥ त ऽआसत । श्रियङ्गच्छेम यशः स्यामान्नादाः स्यामेति तथो ऽएवेमे सत्रमासते ये[1] सत्रमासते श्रियङ्गच्छेम यशः स्यामान्नादाः स्यामेति ॥३॥ ते होचुः । यो नः श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिर्यज्ञस्योदृचम्पूर्वोऽवगच्छात्स नः श्रेष्ठोऽसत्तदु नः सर्वेषाᳪं सहेति तथेति ॥ ४ ॥ तद्विष्णुः प्रथमः प्राप । स देवानाᳪं श्रेष्ठोऽभवत्तस्मादाहुर्विष्णुर्देवानाᳪं श्रेष्ठ ऽइति ॥ ५ ॥ स यः स विष्णुर्यज्ञः स । स यः स यज्ञोऽसौ स ऽआदित्यस्तद्धेदं यशो विष्णुर्न्न शशाक सँयन्तुन्तदिद-

* उपनिषच्छब्देन मुख्यया वृत्त्या ब्रह्मविद्यैवोच्यते । उप समीपस्थं प्रत्यगात्मैकत्वं नीति निश्चितं सत् तत्पराणं सहेतुं संसारं सादयतीत्युपनिषदिति व्युत्पत्तेः । ग्रन्थस्तु विद्यासमर्थकत्वेनोपचारादुपनिषदित्युच्यते ।

( १ ) "ये सत्रमासते" इति पाठः 'ग' 'ज' पुस्तकयोर्न दृश्यते ।

मप्प्येतर्हि नैव सर्व्व ऽइव यशः शक्क्नोति सँरुधन्तुम् ॥ ६ ॥ स तिस्रधन्वमादायापचक्राम । स धनुरार्त्न्या शिर ऽउपस्तभ्य तस्थौ तन्देवा ऽअनभिधृष्णुवन्तः समन्तम्परिण्यविशन्त ॥ ७ ॥ ता ह वम्म्र्य ऽऊचुः । इमा वै वम्म्र्यो यदुपदीका यो ऽस्य ज्यामप्प्यद्यात्किमस्म्मै प्प्रयच्छेतेत्यन्नाद्यमस्म्मै प्प्रयच्छेमापि धन्वन्नपो ऽधिगच्छेत्तथास्म्मै सर्व्वमन्नाद्यम्प्रयच्छेमेति तथेति ॥ ८ ॥ तस्योपपरासृत्य । ज्यामपिजक्षुस्तस्याच्छिन्नायान्धनुरार्त्न्यौ विष्फुरन्त्यौ विष्णोः शिरः प्प्रचिच्छिदतुः ॥ ९ ॥ तद्घृङ्ङिति पपात । तत्पतित्वासावादित्यो ऽभवदथेतरः प्प्राङेव प्प्रावृज्यत तद्यद्घृङ्ङित्यपतत्तस्म्माद्घर्म्मो ऽथ यत्प्रावृज्यत तस्म्मात्प्रवर्ग्यः ॥ १० ॥ ते देवा ऽअब्रुवन् । महान्वत नो वीरो ऽपादीति तस्म्मान्महावीरस्तस्य यो रसो व्यक्षरत्तम्पाणिभिः सम्ममृजुस्तस्म्मात्सम्राट् ॥ ११ ॥ तन्देवा ऽअभ्यमृज्यन्त । यथा वित्तिं वेत्स्यमाना ऽएवन्तमिन्द्रः प्प्रथमः प्प्राप तमन्वङ्गमनुन्यपद्यत तम्पर्य्यगृह्णात्तम्परिगृह्येदं यशो ऽभवद्यदिदमिन्द्रो यशो यशो ह भवति य ऽएवं वेद ॥ १२ ॥ स ऽउ ऽएव मखः स विष्णुः । तत ऽइन्द्रो मखवानभवन्मखवान्ह वै तम्मघवानित्याचक्षते परो ऽक्षम्परो ऽक्षकामा हि देवाः ॥ १३ ॥ ताभ्यो वम्म्रीभ्यो ऽन्नाद्यम्प्रायच्छन् । आपो वै सर्व्वमन्नन्ताभिर्हीदमभिक्क्नूयमिवादन्ति यदिदङ्किञ्चा[1]दन्ति ॥ १४ ॥ अथेमं विष्णुं यज्ञन्त्रेधा व्यभजन्त ।

(१) ग' 'ज' पुस्तकयोः "किम्वदन्ति" इति ।

वसवः प्प्रातःसवनꣳ रुद्रा माद्ध्यन्दिनꣳ सवनमादित्त्या-स्तृतीयसवनम् ॥ १५ ॥ अग्निः प्प्रातःसवनम् । इन्द्रो माद्ध्यन्दिनꣳ सवनं विश्श्वे देवास्तृतीयसवनम् ॥ १६ ॥ गायत्री प्प्रातःसवनम् । त्रिष्टुम्माद्ध्यन्दिनꣳ सवनञ्जगती तृतीयसवनन्तेनापशीर्ष्ण्णा यज्ञेन देवा ऽअर्च्चन्तः श्राम्म्यन्तश्चेरुः ॥ १७ ॥ दद्ध्यङ् ह वा ऽआथर्वणः । एतꣳ शुक्र-मेतं ऽयज्ञं विदाञ्चकार यथा यथैतद्यज्ञस्य शिरः प्प्रति-धीयते यथैष कृत्स्नो यज्ञो भवति ॥ १८ ॥ स हेन्द्रेणोक्त ऽआस । एतञ्चेदन्न्यस्म्मा ऽअनुब्ब्रूयास्तत ऽएव ते शिरश्छिन्द्यामिति ॥ १९ ॥ तदु हाश्श्विनोरनुश्श्रुतमास । दद्ध्यङ्ङु ह वा ऽआथर्वण ऽएतꣳ शुक्रमेतं ऽयज्ञं वेद यथा यथैतद्यज्ञस्य शिरः प्प्रतिधीयते यथैष कृत्स्नो यज्ञो भवतीति ॥ २० ॥ तौ हेत्त्योचतुः । उप त्त्वायावेति किमनुवक्ष्यमाणा-वित्त्येतꣳ शुक्रमेतं ऽयज्ञं ऽयथा यथैतद्यज्ञस्य शिरः प्प्रति-धीयते यथैष कृत्स्नो यज्ञो भवतीति ॥ २१ ॥ स होवाच । इन्द्रेण वा ऽउक्तोऽस्म्म्येतञ्चेदन्न्यस्म्मा ऽअनुब्ब्रूयास्तत ऽएव ते शिरश्छिन्द्यामिति तस्म्माद्वै बिभेमि यद्वै मे स शिरो न च्छिन्द्यान्न वामुपनेष्ष्य ऽइति ॥ २२ ॥ तौ होचतुः । आवान्त्वा तस्म्मात्त्रास्यावेहे ऽइति कथम्मा त्त्रास्येथे ऽइति यदा ना ऽउपनेष्ष्यसेऽथ ते शिरश्छित्त्वान्न्यत्त्राप-निधास्यावोऽथाश्श्वस्य शिर ऽआहृत्त्य तत्ते प्प्रतिधास्या-वस्तेन नावनुवक्ष्यसि स यदा नावनुवक्ष्यस्यथ ते तदिन्द्रः

(१) "भवति" इति 'ग' 'ज' पुस्तकयोः । (२) 'ग' 'ज' पुस्तकयोः "व्वह" इति ।

शिरश्छेत्स्यत्यथ ते स्वꣳ शिर ऽआहृत्य तत्ते प्रतिधास्याव ऽइति तथेति ॥२३॥ तौ होपनिन्न्ये । तौ यदोपनिन्न्येऽथास्य शिरश्छित्त्वान्न्यत्रापनिदधतुरथाश्वस्य शिर ऽआहृत्य तद्धास्य प्रतिदधतुस्तेन हाभ्यामनूवाच स यदाभ्यामनूवाचाथास्य तदिन्द्रः शिरश्चिच्छेदाथास्य स्वꣳ शिर ऽआहृत्य तद्धास्य प्रतिदधतुः ॥२४॥ तस्मादेतदृषिणाभ्यनूक्तम् । दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेत्त्ययतन्तदुवाचेति हैव तदुक्तम् ॥ २५ ॥ तन्न सर्वस्मा ऽअनुब्ब्रूयात् । एनस्यꣳ हि तदुथो नेन्म ऽइन्द्रः शिरश्छिनददिति यो न्वेव ज्ञातस्तस्मै ब्ब्रूयादुथ योऽनूचानोऽथ योऽस्य प्प्रियः स्यान्न त्वेव सर्वस्मा ऽइव ॥ २६ ॥ सँव्वत्सरवासिनेऽनुब्ब्रूयात् । एष वै सँव्वत्सरो य ऽएष तपत्त्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मात्सँव्वत्सरवासिनेऽनुब्ब्रूयात् ॥ २७ ॥ तिस्रो रात्रीर्व्रतञ्चरति । त्रयो वा ऽऋतवः सँव्वत्सरस्य सँव्वत्सर ऽएष य ऽएष तपत्त्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मात्तिस्रो रात्रीर्व्रतञ्चरति ॥२८॥ तप्तमाचामति । तपस्व्यनुब्ब्रवा ऽइत्त्यमाꣳसाश्यनुब्ब्रूते तपस्व्यनुब्ब्रवा ऽइति ॥ २९ ॥ अमृन्न्मयपायी । अस्ति वा ऽअस्याꣳ सꣳसृष्टमिव यदस्यामनृतं व्वदति तस्मादमृन्न्मयपायी ॥ ३० ॥ अशूद्रोच्छिष्टी । एष वै घर्म्मो य ऽएष तपति सैषा श्रीः सत्यञ्ज्योतिरनृतꣳ स्त्री शूद्रः श्वा कृष्णः शकुनिस्तानि न प्प्रेक्षेत नेच्छ्रियञ्च पाप्प्मानञ्च नेज्ज्योतिश्च तमश्च नेत्सत्यानृते सꣳसृजा-

नीति ॥ ३१ ॥ अथैष वाव यशः । य ऽएष तपति तद्य-त्तदादित्यो यशो यज्ञो हैव तद्यशस्तद्यत्तद्यज्ञो यशो यज-मानो हैव तद्यशस्तद्यत्तद्यजमानो यश ऽऋत्विजो हैव तद्यशस्तद्यत्तदृत्विजो यशो दक्षिणा हैव तद्यशस्तस्माद्या-मस्मै दक्षिणामानयेयुर्न्न ताᳩं[1] सद्योऽन्न्यस्मा ऽअति-दिशेन्नेद्यन्मेदं स्यश आगँस्तत्सद्योऽन्न्यस्मा ऽअतिदिशा-नीति श्वो वैव भूते द्व्यहे वा तदात्मन्न्येवैतद्यशः कृत्वा यदेव तद्भवति तत्स ददाति हिरण्यङ्गां वासोऽश्वं वा ॥ ३२ ॥ अथैतद्वै[2] । आयुरेतज्ज्योतिः प्प्रविशति य ऽएत-मनु वा ब्ब्रूते भक्षयति वा तस्य व्व्रतचर्य्या नातपति प्प्रच्छादयेत नेदेतस्मात्तिरोऽसानीति नातपति निष्ठी-वेन्नेदेतमभिनिष्ठीवानीति नातपति प्प्रस्रावयेत नेदेतमभि-प्प्रस्रावया ऽइति यावद्वा ऽएष ऽआतपति तावानेष नेदेत-मेतैर्हिनसानीत्यवज्योत्य रात्रावश्नीयात्तदेतस्य[3] रूपङ्क्रियते य ऽएष तपति तदु होवाचासुरिरेकः ह वै देवा व्व्रतञ्च-रन्ति यत्सत्यन्तस्मादु सत्यमेव व्वदेत् ॥ ३३ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ प्रवर्ग्यः * ]

स वै सम्भारान्त्सम्भरति । स यद्वा ऽएनानित्थाच्चे-त्थाच्च सम्भरति तत्सम्भाराणाᳩं सम्भारत्वः स वै यत्र

( १ ) "ता ऽइत्सद्यो॰" इति 'ग' 'ज' पुस्तकयोः ।

( २ ) "अथैतद्वा" इति 'ग' 'ज' पुस्तकयोः ।

( ३ ) "॰तदस्य" इति 'ग' 'ज' पुस्तकयोः पाठः ।

* तप्ते घृते पयःप्रक्षेपादिना प्रणीयते 'घर्मः' खाद्यविशेषः । स एव प्रक्षेपः प्रवृञ्जन-

यत्र यज्ञस्य न्न्यक्रन्ततस्ततः सम्भरति ॥ १ ॥ कृष्णाजिने सम्भरति । यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैनमेतत्सम्भरति लोमतश्छन्दाꣳसि वै लोमानि च्छन्दःस्वेवैनमेतत्सम्भरत्युत्तरत ऽउदीची हि मनुष्याणान्दिक्प्राचीनग्ग्रीवे तद्धि देवत्रा ॥ २ ॥ अब्भ्र्या । वज्रो वा ऽअभ्रिर्व्वीर्य्यं वै वज्रो व्वीर्य्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥ औदुम्बरी भवति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ४ ॥ अथो वैकङ्कती । प्प्रजापतिर्य्याम्प्रथमामाहुतिमजुहोत्स हुत्वा यत्र न्न्यमृष्ट ततो व्विकङ्कतः समभवद्यज्ञो वा ऽआहुतिर्य्यज्ञो व्विकङ्कतो यज्ञेनैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ५ ॥ अरत्निमात्री भवति । बाहुर्व्वा ऽअरत्निर्ब्बाहुना वै व्वीर्य्यं क्रियते व्वीर्य्यसम्मितैव तद्भवति व्वीर्य्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ६ ॥ तामादत्ते । 'देवस्य[2] त्वा सवितुः प्प्रसवेऽश्विनोर्ब्बाहुब्भ्याम्पूष्णो हस्ताब्भ्यामाददे नारिरसी'त्यसावेव बन्धुः ॥ ७ ॥ ताꣳ सव्व्ये पाणौ कृत्वा । दक्षिणेनाभिमृश्य जपति 'युञ्जते[3] मन ऽउत युञ्जते धियो व्विप्प्रा व्विप्प्रस्य बृहतो व्विपश्चितः । वि होत्रा दधे वयुनाविदेक ऽइन्न्मही देवस्य सवितुः परिष्टुति'रित्यसावेव बन्धुः ॥ ८ ॥ अथ मृत्पिण्डं

---

मुच्यते । तादृशप्रवृञ्जननिबन्धनैवास्य कर्मणः समाख्या प्रवर्ग्य इति । तत्र घर्मपाकाय मृन्निर्मित उलूखलाकारपात्रविशेषो महावीरः । गौण्या तु वृत्त्या घर्मः, प्रवर्ग्यः, महावीरः' इति त्रीण्येव पदानि समानार्थानीति विवेकः । (तै० साय० भा० ५. ११. १. । शत० ब्रा० १४. १. १–११)

(१) 'ग' 'ज' पुस्तकयोः '' ०जिनꣳ स० '' इति पाठः ।

(२) शु० य० सं० ३७. १ । (३) शु० य० सं० ३७. २ ।

परिगृह्णाति *। अब्भ्र्या च दक्षिणतो हस्तेन च हस्तेनैवोत्तरतो 'देवी[1] द्यावापृथिवी' ऽइति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स ऽइमे द्यावापृथिवी ऽअगच्छद्यन्मृदियन्तद्यदापोऽसौ तन्मृदश्चापाश्च महावीराः कृता भवन्ति तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति तस्मादाह देवी द्यावापृथिवी ऽइति 'मखस्य[2] वामद्य शिरो राध्यास'मिति यज्ञो वै मखो यज्ञस्य वामद्य शिरो राध्यासमित्येवैतदाह 'देवयजने[3] पृथिव्या' ऽइति देवयजने हि पृथिव्यै सम्भरति 'मखाय[4] त्वा मखस्य त्वा शीर्ष्णे' ऽइति यज्ञो वै मखो यज्ञाय त्वा यज्ञस्य त्वा शीर्ष्णे ऽइत्येवैतदाह ॥ ९ ॥ अथ वल्मीकवपाम् । 'देव्यो[5] वम्र्य' ऽइत्येता वा ऽएतदकुर्वत यथा यथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति 'भूतस्य[6] प्रथमजा' ऽइतीयं वै पृथिवी भूतस्य प्रथमजा तदनयैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति 'मखस्य[7] वोऽद्य शिरो राध्यासन्देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुः ॥ १० ॥ अथ वराहविहतम् । 'इयत्यग्र[8] ऽआसी'दितीयती ह वा ऽइयमग्रे पृथिव्यास प्रादेशमात्री तामेमूष ऽइति वराह ऽउज्जघान सोऽस्याः पतिः प्रजापतिस्तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्द्धयति कृत्स्नङ्करोति 'मखस्य[9] तेऽद्य शिरो राध्यासन्देवयजने

* 'मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी' ( का० श्रौ० सू० २६. १. ४ ) इति।

(१) शु० य० सं० ३७. ३। (२) शु० य० सं० ३७. ३। (३) शु० य० सं० ३७. ३। (४) शु० य० सं० ३७. ३। (५) शु० य० सं० ३७. ४। (६) शु० य० सं० ३७. ४। (७) शु० य० सं० ३७. ४। (८) शु० य० सं० ३७. ५। (९) शु० य० सं० ३७. ५।

'च्छो वीरन्नर्ध्यम्पङ्क्ति राधस'मित्युपस्तौत्येवैनमेतन्महयत्येव 'देवां यज्ञन्नयन्तु न' ऽइति सर्वानेवास्मा ऽएतद्देवानभिगोप्तॄन्करोति ॥ १५ ॥ परिश्रितम्भवति । एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्मा ऽएताम्पुरम्पर्य्यश्रयँस्तथैवास्मा ऽअयमेताम्पुरम्परिश्रयति ॥ १६ ॥ अथ खरे सादयति । 'मखायँ त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरथ प्रयौति मखाय त्वा मखस्य त्वा शीर्ष्णे ऽइत्यसावेव बन्धुरथ मृत्पिण्डमुपादाय महावीरङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुः प्रादेशमात्रम्प्रादेशमात्रमिव हि शिरो मद्ध्ये सङ्गृहीतम्मद्ध्ये सङ्गृहीतमिव हि शिरोऽथास्योपरिष्टात्त्र्यङ्गुलम्मुखमुन्नयति नासिकामेवास्मिन्नेतद्दधाति तन्निष्ठितमभिमृशति 'मखस्य शिरोऽसी'ति मखस्य ह्येतत्सौम्यस्य शिर ऽएवमितरौ तूष्णीम्पिन्वने तूष्णीꣳ रौहिणकपाले ॥ १७ ॥ प्रजापतिर्वा ऽएष यज्ञो भवति । उभयं वा ऽएतत्प्रजापतिर्न्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति यदेवास्य निरुक्तम्परिमितꣳ रूपन्तदस्य तेन संस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्तमपरिमितꣳ रूपन्तदस्य तेन संस्करोति स ह वा ऽएतꣳ सर्वङ्कृत्स्नम्प्रजापतिꣳ संस्करोति य ऽएवं विद्वानेतदेवङ्करोत्यथोपशयायै पिण्डम्परिशिनष्टि प्रायश्चित्तिभ्यः ॥ १८ ॥ अथ गवेधुकाभिर्हिन्वति ।

(१) शु० य० सं० ३७. ७। (२) शु० य० सं० ३७. ७। (३) शु० य० ३७. ७। (४) शु० य० सं० ३७. ८। (५) शु० य० सं० ३७. ८।

यज्ञस्य शीर्षंच्छिन्नस्य रसो व्यक्षरत्तत ऽएता ऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णी-म्पिन्न्वने तूष्णीᳪं रौहिणकपाले ॥ १९ ॥ अथैनान्धूपयति । 'अश्वस्य त्वा वृष्णः शक्ना धूपयामी'ति वृषा वा ऽअश्वो वीर्य्यं वै वृषा वीर्य्येणैवैनमेतत्समर्द्धयति कृत्स्न-ङ्करोति 'देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्न्वने तूष्णीᳪं रौहिणकपाले ॥२०॥ अथैनाञ्छ्रपयति । शृतः हि देवानामिष्टकाभिः श्रपयन्त्येता वा ऽएतदकुर्वत यथा यथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति तदु यैनैव सुशृताः स्युस्तेन श्रपयेदथ पचनमवधाय महावीरमवदधाति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्न्वने तूष्णीᳪं रौहिणकपाले तान्दिवैवोपवपेद्दिवोद्वपेदुहहि देवानाम् ॥ २१ ॥ स ऽउद्वपति । 'ऋजवे त्वे'त्यसौ वै लोक ऽऋजुः सत्यᳪं ह्यृजुः सत्यमेष य ऽएष तपत्येष ऽउ प्रथमः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाहऽर्जवे त्वेति ॥ २२ ॥ 'साधवे त्वे'ति । अयं वै साधुर्योऽयम्पवत ऽएष हीमाँल्लोकान्त्सिद्धोऽनुपवत ऽएष ऽउ द्वितीयः प्रव-र्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह साधवे त्वेति ॥ २३ ॥

(१) शु० य० सं० ३७. ८। (२) शु० य० सं० ३७. ९। (३) शु० य० सं० ३७. ९ । (४) शु० य० सं० ३७. ९। (५) शु० य० सं० ३७. १०। (६) शु० य० सं० ३७. १०।

'सुक्षित्यै त्वे'ति । अयं वै लोकः सुक्षितिरस्मिन्हि लोके सर्वाणि भूतानि क्षियन्त्यथो ऽअग्निर्वै सुक्षितिरग्निर्ह्येवास्मिँल्लोके सर्वाणि भूतानि क्षियन्त्येष ऽउ तृतीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सुक्षित्यै त्वेति तूष्णीम्पिन्वने तूष्णीꣳ रौहिणकपाले ॥ २४ ॥ अथैनानाच्छृणत्ति । अजायै पयसा 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्वने तूष्णीꣳ रौहिणकपाले ॥ २५ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्या या सृष्टौ ॥ २६ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—०—

[ महावीरसंस्काराः ]

स यदैतदातिथ्येन प्रचरति । अथ प्रवर्ग्येण चरिष्यन्पुरोपसदोऽग्रेण गार्हपत्यम्प्राचः कुशान्त्सꣳस्तीर्य द्वन्द्वम्पात्राण्युपसादयत्युपयमनीम्महावीरम्परीशासौ पिन्वने रौहिणकपाले रौहिणहवन्यौ स्रुचौ यदु चान्यद्भवति तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयत्यथ यद्द्वन्द्वन्द्वन्द्वं वै वीर्यं यदा वै द्वौ सꣳरभेते ऽअथ तौ वीर्यङ्कुरुतो द्वन्द्वं वै मिथुनम्प्रजननम्मिथुनेनैवैनमेतत्प्रजननेन समर्द्धयति कृत्स्नङ्करोति ॥ १ ॥ अथाद्भुर्युः । प्रोक्षणीरादायोपोत्तिष्ठन्नाह

( १ ) शु० य० सं० ३७. १० । ( २ ) शु० य० सं० ३७. १० ।

ब्ब्रह्मन्प्रचरिष्ष्यामो होतरभिष्टुहीति ब्ब्रह्मा वै यज्ञस्य दक्षिणत ऽआस्तेऽभिगोप्ता तमेवैतदाहाप्प्रमत्त ऽआस्स्व यज्ञस्य शिरः प्प्रतिधास्याम ऽइति होतरभिष्टुहीति यज्ञो वै होता तमेवैतदाह यज्ञस्य शिरः प्प्रतिधेहीति प्प्रतिपद्यते होता ॥ २ ॥ 'ब्रह्म[1] जज्ञानम्प्रथमम्पुरस्तादि'ति । असौ वा ऽआदित्यो ब्ब्रह्माहरहः पुरस्ताज्जायत ऽएष ऽउ प्प्रवर्ग्यस्त-देतमेवैतत्प्रीणाति तस्म्मादाह ब्ब्रह्म जज्ञानम्प्रथमम्पुरस्ता-दित्यथ प्प्रोक्षत्यसावेव बन्धुः ॥ ३ ॥ स प्प्रोक्षति । 'यमाय[2] त्वे'त्येष वै यमो य ऽएष तपत्येष हीदꣳ सर्वं य्यमयत्येतेनेदꣳ सर्वं य्यतमेष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्री-णाति तस्म्मादाह यमाय त्वेति ॥ ४ ॥ 'मखाय[3] त्वे'ति । एष वै मखो य ऽएष तपत्येष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्री-णाति तस्म्मादाह मखाय त्वेति ॥ ५ ॥ 'सूर्यस्य[4] त्वा तपस' ऽइति । एष वै सूर्यो य ऽएष तपत्येष प्प्रवर्ग्यस्त-देतमेवैतत्प्रीणाति तस्म्मादाह सूर्यस्य त्वा तपस ऽइति ॥ ६ ॥ पूर्वया द्वारा स्त्थूणान्निर्हृत्य । दक्षिणतो निमि-न्न्वन्ति यथैनाꣳ होताभिष्टुवन्नपरापश्श्येद्यज्ञो वै होता स ऽएवास्यामेतद्यज्ञम्प्रतिदधाति तथैषा घर्म्मम्पिन्न्वते ॥ ७ ॥ [अर्धः प्रपाठकः ॥६६॥] अग्ग्रेणाहवनीयꣳ सम्म्राडासन्दीम्परर्य्या-हृत्य दक्षिणतः प्प्राचीमासादयत्युत्तराꣳ राजासन्द्यै ॥ ८ ॥ औदुम्बरी भवति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन स-मर्द्धयति कृत्स्नङ्करोति ॥९॥ अꣳसदघ्ना भवति । अꣳसयोर्वा

(१) शु० य० सं० १२. ३ । (२) शु० य० सं० ३७. ११ । (३) शु० य० सं० ३७. ११ । (४) शु० य० सं० ३७. ११ ।

ऽइदᳬं शिरᳬ प्प्रतिष्ठितन्तदुᳬसयोरेवैतच्छिरᳬ प्प्रतिष्ठापयति ॥ १० ॥ बाल्वजीभी रज्जुभिर्व्व्युता भवति । यज्ञस्य शीर्षच्छिन्नस्य रसो व्व्यक्षरत्तत ऽएता ऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ११ ॥ अथ यदुत्तरत ऽआसादयति । यज्ञो वै सोमᳬ शिरᳬ प्प्रवर्ग्ग्य ऽउत्तरं व्वै शिरस्तस्म्मादुत्तरत ऽआसादयत्यथो राजा वै सोमᳬ सम्म्राट् प्रवर्ग्ग्य ऽउत्तरं व्वै राज्यात्साम्म्राज्यन्तस्म्मादुत्तरत ऽ(१)आसादयत्युत्तरो वै प्प्रजा तस्म्मादुत्तरत ऽआसादयति ॥ १२ ॥ स यत्रैताᳬं होतान्न्वाह । '(२)अञ्जन्ति यम्प्रथयन्तो न व्विप्प्रा' ऽइति तदेतम्प्रचरणीयम्महावीरमाज्येन समनक्ति '(३)देवस्त्वा सविता मद्ध्वानक्त्वि'ति सविता वै देवानाम्प्रसविता सर्वं व्वा ऽइदम्मधु यदिदङ्किञ्च तदेनमनेन सर्व्वेण समनक्ति तदस्म्मै सविता प्प्रसविता प्प्रसौति तस्म्मादाह देवस्त्वा सविता मद्ध्वानक्त्विति ॥ १३॥ * अथोत्तरतᳬ सिकता ऽउपकीर्ण्णा भवन्ति । तद्रजतᳬ हिरण्ण्यमधस्तादुपास्यति '(४)पृथिव्व्याᳬ सᳬस्पृशस्प्पाही'त्येतद्वै देवा ऽअबिभयुर्य्यद्वै न ऽइममधस्ताद्रक्षाᳬसि नाष्ट्रा न हन्न्युरित्त्यग्ग्नेर्व्वा ऽएतद्रेतो यद्धिरण्ण्यन्नाष्ट्राणाᳬ रक्षसामपहत्त्या ऽअथो पृथिव्व्यु ह व्वा ऽएतस्म्माद्बिभयाञ्चकार यद्वै मायन्तप्तᳬ शुशुचानो न

---

(१) "आसादयत्त्युत्तरो वै प्प्रजा तस्म्मादुत्तरत" इति पाठः 'ग' 'ज' पुस्तकयोर्न दृश्यते ।
(२) ऋ० सं० ४. २. २१ । (३) शु० य० सं० ३७. ११ ।
* शतम् ६६०० ।
(४) शु० य० सं० ३७ ११ ।

हिᳫंस्यादिति तदेवास्या ऽएतदन्तर्द्दधाति रजतम्भवति रजतेव हीयम्पृथिवी ॥ १४ ॥ स यत्रैताᳫं होतान्न्वाह । 'सᳩसीदस्व महाँ२॥ ऽअसी'ति तदुभयत ऽआदीप्ता मौञ्जाᳩ प्प्रलवा भवन्ति तानुपास्य तेषु प्प्रवृणक्ति यज्ञस्य शीर्षच्छिन्नस्य रसो ऽव्यक्षरत्तत ऽएता ऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ १५ ॥ अथ यदुभयत ऽआदीप्ता भवन्ति । सर्व्वाभ्य ऽएवैतद्दिग्भ्यो रक्षाᳫंसि नाष्ट्रा ऽअपहन्ति तस्मिन्प्रवृज्यमाने पत्नी शिरᳩ प्प्रोर्णुते तप्तो वा ऽएष शुशुचानो भवति नेन्मेऽयन्तप्तᳩ शुशुचानश्चक्षुᳩ प्प्रमुष्णादिति ॥ १६ ॥ स प्प्रवृणक्ति । 'अर्च्चिरसि शोचिरसि तपोऽसी'त्येष वै घर्म्मो य ऽएष तपति सर्व्वं व्वा ऽएतदेष तदेतमेवैतत्प्रीणाति तस्मादाहार्च्चिरसि शोचिरसि तपोऽसीति ॥ १७ ॥ अथास्यामाशिष ऽआशास्ते । इयं व्वै यज्ञोऽस्यामेवैतदाशिष ऽआशास्ते ता ऽअस्मा ऽइयᳩ सर्व्वाᳩ समर्द्धयति ॥ १८ ॥ 'अनाधृष्टा पुरस्ता'दिति । अनाधृष्टा ह्येषा पुरस्ताद्रक्षोभिर्न्नाष्ट्राभि'रग्नेराधिपत्य' ऽइत्यग्निमेवास्या ऽअधिपतिङ्करोति नाष्ट्राणाᳫं रक्षसामपहत्या 'ऽआयुर्म्मे दा' ऽइत्यायुरेवात्मन्धत्ते तथो ह सर्व्वमायुरेति ॥ १९ ॥ 'पुत्रवती दक्षिणत' ऽइति । नात्र तिरोहितमिवास्ती'न्द्रस्याधिपत्य' ऽइतीन्द्रमेवास्या ऽअधिपतिङ्करोति

(१) ऋ० सं० १. ३. ९। (२) शु० य० सं० ३७. ११। (३) शु० य० सं० ३७. १२। (४) शु० य० सं० ३७. १२। (५) शु० य० सं० ३७. १२। (६) शु० य० सं० ३७. १२। (७) शु० य० सं० ३७. १२।

नाष्ट्राणाᳶ रक्षसामपहत्यै 'प्रजाम्मे दा' ऽइति प्रजामेव पशूनात्मन्धत्ते तथो ह पुत्री पशुमान्भवति ॥ २० ॥ 'सुषदा पश्चा'दिति । नात्र तिरोहितमिवास्ति 'देवस्य सवितुराधिपत्य' ऽइति देवमेवास्यै सवितारमधिपतिङ्करोति नाष्ट्राणाᳶ रक्षसामपहत्यै 'चक्षुर्म्मे दा' ऽइति चक्षुरेवात्मन्धत्ते तथो ह चक्षुष्मान्भवति ॥ २१ ॥ 'आश्रुतिरुत्तरत' ऽइति । आश्रावयन्नुत्तरत ऽइत्येवैतदाह 'धातुराधिपत्य' ऽइति धातारमेवास्या ऽअधिपतिङ्करोति नाष्ट्राणाᳶ रक्षसामपहत्यै 'रायस्पोषम्मे दा' ऽइति रयिमेव पुष्टिमात्मन्धत्ते तथो ह रयिमान्पुष्टिमान्भवति ॥ २२ ॥ 'विधृतिरुपरिष्टा'दिति । विधारयन्नुपरिष्टादित्येवैतदाह 'बृहस्पतेराधिपत्य' ऽइति बृहस्पतिमेवास्या ऽअधिपतिङ्करोति नाष्ट्राणाᳶ रक्षसामपहत्या 'ऽओजो मे दा' ऽइत्योज ऽएवात्मन्धत्ते तथौजस्वी बलवान्भवति ॥ २३ ॥ अथ दक्षिणत ऽउत्तानेन पाणिना निह्नुते । 'विश्वाभ्यो मा नाष्ट्राभ्यस्पाही'ति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्येवैतदाह यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छत्त्रया वै पितरस्तैरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ २४ ॥ अथेमामभिमृश्य जपति । 'मनोरश्वासी'त्यश्वा ह

(१) शु० य० सं० ३७. १२। (२) शु० य० सं० ३७. १२। (३) शु० य० सं० ३७. १२। (४) शु० य० सं० ३७. १२। (५) शु० य० सं० ३७ १२। (६) शु० य० सं० ३७. १२। (७) शु० य० सं० ३७. १२। (८) शु० य० सं० ३७. १२। (९) शु० य० सं० ३७. १२। (१०) शु० य० सं० ३७. १२। (११) शु० य० सं० ३७. १२।

* अत्र "रसो व्यक्षरत्स" इत्यधिकः पाठः। 'ग' 'ज' पुस्तकयोः [ ] इति चिह्नान्तर्गत उपलभ्यते।

(१२) शु० य० सं० ३७. १२।

वा ऽइयम्भूत्वा मनुमुवाह सोऽस्याः पतिः प्प्रजापति-
स्तेनैवैनमेतन्न्मिथुनेन प्प्रियेण धाम्म्ना समर्द्धयति कृत्स्न-
ङ्करोति ॥ २५ ॥ अथ वैकङ्कतौ शकलौ परिश्श्रयति
प्प्राञ्चौ । '[1]स्वाहा मरुद्भिः परिश्श्रीयस्वे'त्त्यवरथं स्वाहाकारङ्क-
रोति परान्देवतामेष वै स्वाहाकारो य ऽएष तपत्त्येष
ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्त्प्रीणाति तस्म्मादवरथं स्वाहाकार-
ङ्करोति परान्देवताम् ॥ २६ ॥ मरुद्भिः परिश्श्रीयस्वेति ।
विशो वै मरुतो विशैवैतत्क्षत्रम्परिबृंहति तदिदङ्क्षत्रमु-
भयतो विशा परिबृढन्तूष्णीमुदञ्चौ तूष्णीम्प्राञ्चौ तूष्णी-
मुदञ्चौ तूष्णीम्प्राञ्चौ ॥ २७ ॥ त्रयोदश सम्पादयति ।
त्रयोदश वै मासाः सँवत्सरस्य सँवत्सर ऽएष य ऽएष तपत्त्येष
ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्त्प्रीणाति तस्म्मात्त्रयोदश सम्पादयति
॥ २८ ॥ अथ सुवर्ण्णं हिरण्यमुपरिष्टान्निदधाति ।
'[2]दिवं सथंस्पृशस्पाही'त्त्येतद्वै देवा ऽअबिभयुर्य्यद्वै न
ऽइममुपरिष्टाद्रक्षाथंसि नाष्ट्रा न हन्न्युरित्त्यग्न्नेर्वा ऽएत-
द्रेतो यद्धिरण्यन्नाष्ट्राणाथं रक्षसामपहत्त्या ऽअथो द्यौर्ह
वा ऽएतस्म्माद्विभयाञ्चकार यद्वै मायन्तप्प्तः शुशुचानो न
हिथंस्यादिति तदेवास्या ऽएतदन्तर्द्दधाति हरितम्भवति
हरिणीव हि द्यौः ॥ २९ ॥ अथ पवित्त्रैराधूनोति । '[3]मधु
मद्धि'ति त्त्रिः प्प्राणो वै मधु प्प्राणमेवास्म्मिन्नेतद्दधाति त्त्रीणि
भवन्ति त्त्रयो वै प्प्राणाः प्प्राण ऽउदानो ऽव्यानस्तानेवा-

(१) शु० य० सं० ३७. १३। (२) शु० य० सं० ३७. १३। (३) शु० य० सं० ३७. १३।

स्मिन्नेतद्दधाति ॥ ३० ॥ अथापसलवि त्रिर्द्धून्वन्ति । यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्नया वै पितरस्तैरेवै-नमेतत्समीरयति ॥ ३१ ॥ अप वा ऽएतेभ्यः प्राणाः क्रामन्ति । ये यज्ञे धुवनन्तन्वते पुनः प्रसलवि त्रिर्द्धून्वन्ति षट् सम्पद्यन्ते षड्वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्द-धाति श्रपयन्ति रौहिणौ स यदार्च्चिर्ज्जायतेऽथ हिरण्य-मादत्ते ॥ ३२ ॥ स यत्रैताᳬं होतान्न्वाह । 'अप्नस्वतीम-श्विना व्वाचमस्मे' ऽइति तदद्ध्वर्य्युरुपोत्तिष्ठन्नाह रुचितो घर्म्म ऽइति स यदि रुचितः स्याच्छ्रेयान्यजमानो भविष्य-तीति व्विद्यादथ यद्यरुचितः पापीयान्भविष्यतीति व्विद्या-दथ यदि नैव रुचितो नारुचितो नैव श्रेयान्न पापी-यान्भविष्यतीति व्विद्याद्यथा त्वेवै रुचितः स्यात्तथा धवितव्व्यम् ॥३३॥ अथैतद्वै । आयुरेतज्ज्योतिः प्रविशति य ऽएतमनुवा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥३४॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

—————०—————

स यदैतदद्ध्वर्य्युः । उपोत्तिष्ठन्नाह रुचितो घर्म्म ऽइति तदुपोत्थायावकाशैरुपतिष्ठन्ते प्राणा वा ऽअवकाशाः प्राणानेवास्मिन्नेतद्दधाति षडुपतिष्ठन्ते षड्वा ऽइमे शीर्ष-न्प्राणास्तानेवास्मिन्नेतद्दधाति ॥ १ ॥ 'गर्भो देवाना'मिति।

* अत्र "रसो व्व्यक्षरत्स" इत्यधिकः पाठः [ ] इति चिह्नान्तर्गतः 'ग' 'ज' पुस्तकयो-रुपलभ्यते ।

(१) शु० य० सं० ३४. २९ । (२) "न्वेव" इति 'ग' 'ज' पुस्तकयोः । (३) "धवितव्व्यः" इति 'ग' 'ज' पुस्तकयोः । (४) शु० य० सं० ३७. १४ ।

एष वै गर्ब्भो देवानां य ऽएष तपत्त्येष हीदꣳ सर्व्वङ्गृह्णा[1]-
त्येतेनेदꣳ सर्व्वङ्गृभीतमेष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति
तस्मादाह गर्ब्भो देवानामिति ॥ २ ॥ '[2]पिता मतीना'-
मिति । पिता ह्येष मतीना'[3]म्पतिः प्प्रजाना'मिति पतिर्ह्येष
प्प्रजानाम् ॥ ३ ॥ '[4]सन्देवो देवेन सवित्रा गते'ति सꣳ हि
देवो देवेन सवित्रा गत '[5]सꣳ सूर्य्येण रोचत' ऽइति सꣳ
हि सूर्य्येण रोचते ॥ ४ ॥ '[6]समग्निरग्निना गते'ति । सꣳ
ह्यग्निरग्निना गत '[7]सन्दैवेन सवित्रे'ति सꣳ हि दैवेन
सवित्रा गत '[8]सꣳ सूर्य्येणारोचिष्टे'ति सꣳ हि सूर्य्येणारो-
चिष्ट ॥ ५ ॥ '[9]स्वाहा समग्निस्तपसा गते'ति सꣳ
ह्यग्निस्तपसा गतावरꣳ स्वाहाकारङ्करोति परान्देवतामसा-
वेव बन्धुः '[10]सन्दैव्व्येन सवित्रे'ति सꣳ हि दैव्व्येन सवि-
त्रा गत '[11]सꣳ सूर्य्येणारूरुचते'ति सꣳ हि सूर्य्येणारूरुचत
॥ ६ ॥ ते वा ऽएते त्रयोऽवकाशा भवन्ति । त्रयो वै
प्प्राणाः प्प्राण ऽउदानो व्व्यानस्ता[12]नेवास्मिन्नेतद्दधाति
॥ ७ ॥ '[13]धर्त्ता दिवो विभाति तपसस्पृथिव्व्या'मिति । धर्त्ता
ह्येष दिवो विभाति तपसस्पृथिव्व्या'[14]न्धर्त्ता देवो देवानाम-
मर्त्यस्तपोजा' ऽइति धर्त्ता ह्येष देवो देवानाममर्त्यस्तपोजा
'[15]वाचमस्मे नियच्छ देवायुव'मिति यज्ञो वै वाग्यज्ञमस्म-

(१) "गृह्णा०" इति 'ग' 'ज' पुस्तकयोः। (२) शु० य० सं० ३७. १४। (३) शु० य० सं० ३७. १४। (४) शु० य० सं० ३७. १४। (५) शु० य० सं० ३७. १४। (६) शु० य० सं० ३७. १५। (७) शु० य० सं० ३७. १५। (८) शु० य० सं० ३७. १५। (९) शु० य० सं० ३७. १५। (१०) शु० य० सं० ३७. १५। (११) शु० य० सं० ३७. १५। (१२) "०स्तेनै" इति 'ग' 'ज' पुस्तकयोः। (१३) शु० य० सं० ३७. १६। (१४) शु० य० सं० ३७. १६। (१५) शु० य० सं० ३७. १६।

ब्भ्यम्प्रयच्छ येन देवान्प्रीणामेत्येवैतदाह ॥ ८ ॥ '[1]अपश्श्य-ङ्गोपामनिपद्यमान'मिति । एष वै गोपा स ऽएष तपत्येष हीदꣳ सर्व्वङ्गोपायत्यथो न निपद्यते तस्मादाहापश्श्यङ्गोपा-मनिपद्यमानमिति ॥ ९ ॥ '[2]आ च परा च पथिभिश्चरन्त'-मिति । आ च ह्येष परा च देवैः पथिभिश्चरति '[3]स सध्रीचीः स विषूचीर्व्वसान' ऽइति सध्रीचीश्च ह्येष विषू-चीश्च दिशो वस्तेऽथो रश्मी'[4]नावरीवर्त्ति भुवनेष्ष्वन्त'रिति पुनः पुनर्ह्येष ऽएषु लोकेषु वरीवर्त्यमानश्चरति ॥ १० ॥ '[5]विश्श्वासाम्भुवाम्पते । विश्श्वस्य मनसस्पते विश्श्वस्य वचसस्पते सर्व्वस्य वचसस्पत' ऽइत्येतस्य सर्व्वस्य पत ऽइत्येत'[6]देवश्श्रुत्त्वन्देव घर्म्म देवो देवान्नपाही'ति नात्र तिरोहितमिवास्ति ॥ ११ ॥ '[7]अत्र प्प्रावीरनु वान्देववीतय' ऽइति । अश्श्विनावेवैतदाहाश्श्विनौ वा ऽएतद्यज्ञस्य शिरः प्प्रत्त्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहात्र प्प्रावीरनु वान्दे-ववीतय ऽइति ॥ १२ ॥ '[8]मधु माध्वीब्भ्याम्मधु माधूचीब्भ्या'-मिति । दध्यङ् ह वा ऽआब्भ्यामाथर्व्वणो मधु नाम ब्ब्राह्म-णमुवाच तदेनयोः प्प्रियन्धाम तदेवैनयोरेतेनोपगच्छति तस्मादाह मधु माध्वीब्भ्याम्मधु माधूचीब्भ्यामिति ॥ १३ ॥ '[9]हृदे त्त्वा मनसे त्त्वा दिवे त्त्वा सूर्य्याय त्त्वा । ऊर्द्ध्वो ऽअध्वरन्दिवि देवेषु धेही'ति नात्र तिरोहितमि-

( १ ) शु० य० सं० ३७. १७ । ( २ ) शु० य० सं० ३७. १७ । ( ३ ) शु० य सं० ३७. १७ । ( ४ ) शु० य० सं० ३७. १७ । ( ५ ) शु० य० सं० ३७. १८ । ( ६ ) शु० य० सं० ३७. १८ । ( ७ ) शु० य० सं० ३७. १८ । ( ८ ) शु० य० सं० ३७. १८ । ( ९ ) शु० य० सं० ३७. १९ ।

वास्ति ॥ १४ ॥ 'पिता नोऽसि पिता नो बोधी'ति । एष वै पिता य ऽएष तपत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह पिता नोऽसि पिता नो बोधीति 'नमस्ते ऽअस्तु मा मा हिᳫंसी'रित्याशिषमेवैतदाशास्ते ॥ १५ ॥ अथ पत्न्यै शिरोऽपावृत्य । महावीरमीक्षमाणां वाचयति 'त्वष्टृमन्तस्त्वा सपेमे'ति वृषा वै प्रवर्ग्यो योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥ १६ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्या या सृष्टौ ॥ १७ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

—o—

[ रौहिणहोमः, महावीरेषु अजापयस आसेकश्च ]

अथातो रौहिणौ जुहोति । 'अहः केतुना जुषताᳫं सुज्योतिर्ज्योतिषा स्वाहे'त्युभावेतेन यजुषा प्रातः 'रात्रिः केतुना जुषताᳫं सुज्योतिर्ज्योतिषा स्वाहे'त्युभावेतेन यजुषा सायम् ॥ १ ॥ तद्यद्रौहिणौ जुहोति । अग्निश्च ह वा ऽआदित्यश्च रौहिणावेताभ्याᳫं हि देवताभ्यां यजमानाः स्वर्गं लोकᳫं रोहन्ति ॥ २ ॥ अथो ऽअहोरात्रे वै रौहिणौ । आदित्यः प्रवर्ग्योऽमुन्तदादित्यमहोरात्राभ्या-

(१) शु० य० सं० ३७. २० । (२) शु० य० सं० ३७. २० । (३) "०प०" इति 'ग' 'ज' पुस्तकयोः । (४) शु० य० सं० ३७. २० । (५) शु० य० सं० ३७ २१ । (६) शु० य० सं० ३७, २१ ।

म्परिगृह्णाति तस्म्मादेषोऽहोरात्राब्भ्याम्परिगृहीतः ॥ ३ ॥ अथो ऽइमौ वै लोकौ रौहिणौ आदित्यः प्प्रवर्ग्योऽमुन्तदादित्यमाब्भ्याँल्लोकाब्भ्याम्परिगृह्णाति तस्म्मादेष ऽआब्भ्याँल्लोकाब्भ्याम्परिगृहीतः ॥ ४ ॥ अथो चक्षुषी वै रौहिणौ। शिरः प्प्रवर्ग्यः शीर्षस्तँच्चक्षुर्दधाति ॥५॥ अथ रज्जुमादत्ते। 'देवस्य त्वा सवितुः प्प्रसवेऽश्विनोर्ब्बाहुब्भ्याम्पूष्णो हस्ताब्भ्यामाददेऽदित्यै[1] रास्नासी'त्यसावेव बन्धुः ॥६॥ अथ गामाह्वयति। जघनेन गार्हपत्यं स्थ'न्निडे[3] ऽएह्यदित ऽएहि सरस्वत्येही'तीडा हि गौरदितिर्हि गौः सरस्वती हि गौरथोचैं[4]राह्वयति नाम्म्ना'सावेह्यसावेही'ति त्रिः ॥ ७ ॥ तामागतामभिदधाति। 'अदित्यै[6] रास्नासीन्द्राण्या ऽउष्णीष' ऽइतीन्द्राणी ह वा ऽइन्द्रस्य प्प्रिया पत्नी तस्या ऽउष्णीषो विश्श्वरूपतमः सोऽसीति तदाह तमेवैनमेतत्करोति ॥ ८ ॥ अथ वत्समुपार्ज्जति। 'पूषासी'त्ययं वै पूषा योऽयम्पवत ऽएष हीदँ सर्व्वम्पुष्यत्येष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह पूषासीति ॥ ९ ॥ अथोन्नयति। 'घर्म्मायै दीष्वे'त्येष वा ऽअत्र घर्म्मो रसो भवति यमेषा पिन्न्वते तस्यै दयस्वेत्येवैतदाह ॥ १० ॥ अथ पिन्न्वने पिन्न्वयति। 'अश्विब्भ्याम्पिन्न्वस्वे'त्यश्विनावेवैतदाहाश्विनौ वा ऽएतद्यज्ञस्य शिरः प्प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्म्मादाहा-

(१) शु० य० सं० ३८. १। (२) 'ग' 'ज' पुस्तकयोः ''ऽदित्यै'' इति पाठो न दृश्यते। (३) शु० य० सं० ३८. २। (४) ''तै'' इति 'ग' 'ज' पुस्तकयोः। (५) शु० य० सं० ३८. २। (६) शु० य० ३८. ३। (७) शु० य० सं० ३८. ३। (८) शु० य० सं० ३८. ३। (९) शु० य० सं० ३८. ४।

श्विवब्भ्याम्पिन्न्वस्वेति ॥ ११ ॥ 'सरस्वत्यै पिन्न्वस्वे'ति। वाग्वै सरस्वती वाचा वा ऽएतदश्विनौ यज्ञस्य शिरः प्प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाह सरस्वत्यै पिन्न्वस्वेति ॥ १२ ॥ 'इन्द्राय पिन्न्वस्वे'ति। इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतदश्विनौ यज्ञस्य शिरः प्प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहेन्द्राय पिन्न्वस्वेति ॥ १३ ॥ अथ विप्प्रुषोऽभिमन्त्रयते। 'स्वाहेन्द्रवत्स्वाहेन्द्रव'दितीन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणाति तस्मादाह स्वाहेन्द्रवत्स्वाहेन्द्रवदिति त्रिष्कृत्व ऽआह त्रिवृद्धि यज्ञोऽवरथं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १४ ॥ अथास्यै स्तनमभिपद्यते। 'यस्ते स्तनः शशयो यो मयोभू'रिति यस्ते स्तनो निहितो गुहायामित्येवैतदाह 'यो रत्नधा वसुविद्यः सुदत्र' ऽइति यो धनानान्दाता वसुवित्पणाऽय ऽइत्येवैतदाह 'येन विश्वा पुष्यसि वार्य्याणी'ति येन सर्वान्देवान्त्सर्वाणि भूतानि बिभर्षीत्येवैतदाह 'सरस्वति तमिह धातवेऽक'रिति वाग्वै सरस्वती सैषा घर्म्मदुघा यज्ञो वै वाग्यज्ञमस्मभ्यम्प्रयच्छ येन देवान्प्रीणामेत्येवैतदाहाथ गार्हपत्यस्यार्द्धमे'त्युर्वन्तरिक्षमन्न्वेमी'त्यसावेव बन्धुः ॥ १५ ॥ अथ शफावादत्ते। 'गायत्रञ्छन्दोऽसि त्रैष्टुभञ्छन्दोऽसी'ति गायत्रेण चैवैना-

(१) शु० य० सं० ३८.४। (२) शु० य० सं० ३८.४। (३) शु० य० सं० ३८.४। (४) शु० य० सं० ३८.५। (५) शु० य० सं० ३८.५। (६) शु० य० सं० ३८.५। (७) शु० य० सं० ३८.५। (८) शु० य० सं० ३८.५। (९) शु० य० सं० ३८.६।

वेतत्त्रैष्टुभेन च च्छन्दसादत्ते 'द्यावापृथिवीभ्यान्त्वा परिगृह्णामी'तीमे वै द्यावापृथिवी परीशासावादित्यः प्प्रवर्ग्योऽमुन्तदादित्यमाभ्यान्द्यावापृथिवीभ्याम्परिगृह्णात्यथ मौञ्जेन वेदेनोपमाष्टर्यसावेव बन्धुः ॥ १६ ॥ अथोपयमन्न्योपगृह्णणाति । 'अन्तरिक्षेणोपयच्छामी'त्यन्तरिक्षं वा ऽउपयमन्न्यन्तरिक्षेण हीदꣳ सर्वमुपयतमथो ऽउदरं वा ऽउपयमन्न्युदरेण हीदꣳ सर्वमन्नाद्यमुपयतन्तस्म्मादाहान्तरिक्षेणोपयच्छामीति ॥ १७ ॥ अथाजाक्षीरमानयति । तप्तो वा ऽएष शुशुचानो भवति तमेवैतच्छमयति तस्मिमञ्छान्ते गोक्षीरमानयति ॥ १८ ॥ 'इन्द्राश्विने'ति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणात्यश्विनेत्यश्विनावेवैतदाहाश्विनौ वा ऽएतद्यज्ञस्य शिरः प्प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्म्मादाहेन्द्राश्विनेति ॥ १९ ॥ 'मधुर्नꣳ सारघस्ये'ति । एतद्वै मधु सारघ'ङ्घर्म्मम्पाते'ति रसम्पातेत्त्येवैतदाह 'वसवं' ऽइत्त्येते वै वसव ऽएते हीदꣳ सर्वं वासयन्ते 'यजँत वा'ड़िति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति ॥ २० ॥ 'स्वाहा सूर्य्यस्य रश्म्मये व्वृष्टिवनय' ऽइति। सूर्य्यस्य ह वा ऽएको रश्मिम्मर्व्वृष्टिवनिर्न्नाम येनेमाः सर्वाः प्प्रजा बिभर्त्ति तमेवैतत्प्रीणाति तस्म्मादाह स्वाहा सूर्य्यस्य रश्म्मये व्वृष्टिवनय ऽइत्त्यवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥२१॥ अथैतद्वै । आयुरेतज्ज्योतिः

(१) शु० य० सं० ३८. ६ । (२) शु० य० सं० ३८. ६। (३) शु० य० सं० ३८. ६। (४) शु० य० सं० ३८. ६। (५) शु० य० सं० ३८. ६। (६) शु० य० सं० ३८. ६। (७) शु० य० सं० ३८. ६। (८) शु० य० सं० ३८. ६।

प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ २२ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ १३२ ॥

—— ० ——

[ प्रवर्ग्यानुष्ठानम् ]

स यत्रैताꣳ होतान्न्वाह । 'प्रैतु[1] ब्रह्मणस्पतिः प्र देव्व्येतु सूनृते'ति तदद्ध्वर्य्युः प्राङुदायन्न्वातनामानि जुहोत्त्येतद्धै देवा ऽअबिभयुर्य्यद्वै न ऽइममन्तरा रक्षाꣳसि नाष्ट्रा न हन्न्युरिति तमेतत्पुरैवाहवनीयात्स्वाहाकारेणाजुहवुस्तꣳ हुतमेव सन्तमग्ग्नावजुहवुस्तथो ऽएवैनमेष ऽएतत्पुरैवाहवनीयात्स्वाहाकारेण जुहोति तꣳ हुतमेव सन्तमग्ग्नौ जुहोति ॥ १ ॥ 'समुद्राय[2] त्वा व्वाताय स्वाहे'ति । अयं व्वै समुद्रो योऽयम्पवत ऽएतस्म्माद्वै समुद्रात्सर्व्वे देवाः सर्व्वाणि भूतानि समुद्रवन्ति तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाह समुद्राय त्वा व्वाताय स्वाहा ॥ २ ॥ 'सरिराय[3] त्वा व्वाताय स्वाहे'ति । अयं व्वै सरिरो योऽयम्पवत ऽएतस्म्माद्वै सरिरात्सर्व्वे देवाः सर्व्वाणि भूतानि सहेरते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाह सरिराय त्वा व्वाताय स्वाहा ॥ ३ ॥ 'अनाधृष्ष्याय[4] त्वा व्वाताय स्वाहा प्रातिधृष्ष्याय त्वा

(१) शु० य० सं० ३७. ७ । (२) शु० य० सं० ३८. ७ । (३) शु० य० सं० ३८. ७ । (४) शु० य० सं० ३८. ७ ।

व्राताय स्वाहे॑ति । अयं व्वा ऽअनाधृष्ष्योऽप्प्रतिधृष्ष्यो योऽ-यम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाहानाधृष्ष्याय त्वा व्राताय स्वाहा प्प्रतिधृष्ष्याय त्वा व्राताय स्वाहेति ॥ ४ ॥ '[1]अवस्यवे त्वा व्राताय स्वाहाशिमिदाय त्वा व्राताय स्वाहे॑ति । अयं व्वा ऽअवस्युरशिमिदो योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाहावस्यवे त्वा व्राताय स्वाहा-शिमिदाय त्वा व्राताय स्वाहेति ॥ ५ ॥ '[2]इन्द्राय त्वा व्वसुमते रुद्रवते स्वाहे॑ति । अयं व्वा ऽइन्द्रो योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाहेन्द्राय त्वेति व्वसु-मते रुद्रवत ऽइति तदिन्द्रमेवानु व्वसूँश्च रुद्राँश्चाभजत्त्यथो प्प्रातःसवनस्य चैवैतन्माद्ध्यन्दिनस्य च सवनस्य रूप-ङ्क्रियते ॥ ६ ॥ '[3]इन्द्राय त्वादित्यवते स्वाहे॑ति । अयं व्वा ऽइन्द्रो योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मा-दाहेन्द्राय त्वेत्यादित्यवत ऽइति तदिन्द्रमेवान्वादित्याना-भजत्त्यथो तृतीयसवनस्यैवैतद्रूपङ्क्रियते ॥ ७ ॥ '[4]इन्द्राय त्वाभिमातिघ्ने स्वाहे॑ति । अयं व्वा ऽइन्द्रो योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाहेन्द्राय त्वेत्यभिमातिघ्न ऽइति सपत्नो व्वा ऽअभिमातिरिन्द्राय त्वा सपत्नघ्न ऽइत्त्येवैतदाह सोऽस्योद्धारो यथा श्रेष्ठस्योद्धार ऽएवमस्यैष ऽऋते देवेभ्यः ॥ ८ ॥ '[5]सवित्रे त्व ऽऋभुमते व्विभुमते व्वाजवते स्वाहे॑ति । अयं व्वै सविता योऽयम्पवते तस्म्मा

---

(१) शु० य० सं० ३८. ७ । (२) शु० य० सं० ३८. ८ । (३) शु० य० सं० ३८. ८ । (४) शु० य० सं० ३८. ८ । (५) शु० य० सं० ३८. ८ ।

ऽएवैनञ्जुहोति तस्म्मादाह सवित्रे त्वेत्त्यृभुमते विभुमते वाजवत ऽइति तदस्म्मिन्विश्श्वान्देवानन्न्वाभजति ॥ ९ ॥ 'बृहस्प्पतये[1] त्वा विश्श्वदेव्व्यावते स्वाहे'ति । अयं वै बृहस्प्पतिर्य्योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाह बृहस्प्पतये त्वेति विश्श्वदेव्व्यावत ऽइति तदस्म्मिन्विश्श्वान्त्सर्व्वान्देवानन्न्वाभजति ॥ १० ॥ 'यमाय[2] त्वाङ्गिरस्वते पितृमते स्वाहे'ति । अयं वै यमो योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाह यमाय त्वेत्त्यङ्गिरस्वते पितृमत ऽइति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छत्त्रया वै पितरस्तानेवैतदन्न्वाभजति ॥ ११ ॥ द्वादशैतानि नामानि भवन्ति । द्वादश वै मासाः सँव्वत्सरस्य सँव्वत्सर ऽएष य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्माद्द्वादश भवन्ति ॥ १२ ॥ अथोपयमन्न्या महावीर ऽआनयति । 'स्वाहा[3] घर्म्मायेत्त्येष वै घर्म्मो य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह स्वाहा घर्म्मायेत्त्यवरथं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १३ ॥ आनीते जपति । 'स्वाहा[4] घर्म्मः पित्र' ऽइति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छत्त्रया वै पितरस्तानेवैतत्प्रीणात्त्यवरथं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १४ ॥ नानुवाक्क्या-

(१) शु० य० सं० ३८. ८ । (२) शु० य० सं० ३८. ९ ।
* अत्र "रसो व्व्यक्षरत्त्स" इत्यधिकः पाठः 'ग' 'ज' पुस्तकयोः [ ] इति चिह्नान्तर्गत उपलभ्यते ।
(३) शु० य० सं० ३८. ९ । (४) शु० य० सं० ३८. ६ ।

मन्न्वाह । सकृदु ह्येव पराञ्चः पितरस्तस्मान्नानुवाक्क्या-मन्न्वाहातिक्रम्म्याश्राव्याह घर्म्मस्य यजेति वषट्कृते जुहोति ॥ १५ ॥ 'विश्वा[1] ऽआशा दक्षिणस'दिति । सर्व्वा ऽआशा दक्षिणसदित्येवैतदाह 'विश्वान्[2]देवानयाडिहे'ति सर्व्वान्देवानयाक्षीदिहेत्येवैतदाह 'स्वाहा[3]कृतस्य घर्म्मस्य मधोः पिबतमश्विने'त्यश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणात्यवरार्ध्यं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १६ ॥ अथ हुत्वोर्द्ध्वमुत्कम्पयति । 'दिवि धा[4] ऽइमं यज्ञमिमं यज्ञन्दिवि धा' ऽइत्यसौ वा ऽआदित्यो घर्म्मो यज्ञो दिवि वा ऽएष हितो दिवि प्रतिष्ठितस्तमेवैतत्प्रीणाति तस्मादाह दिवि धा ऽइमं यज्ञमिमं यज्ञन्दिवि धा ऽइत्यनुवषट्कृते जुहोति ॥ १७ ॥ 'स्वाहा[5]ग्नये यज्ञियाये'ति । तत्स्विष्टकृद्भाजनमग्निर्हि स्विष्टकृ'च्छं[6] यजुर्भ्य' ऽइति यजुर्भिर्ह्येषोऽस्मिँल्लोके प्रतिष्ठितस्तान्येवैतत्प्रीणात्यवरार्ध्यं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १८ ॥ अथ ब्रह्मानुमन्त्रयते । ब्रह्मा वा ऽऋत्विजाम्भिषक्तमस्तद्य ऽएवऽर्त्विजाम्भिषक्तमस्तेनैवैतं[7] यज्ञम्भिषज्यति ॥ १९ ॥ 'अ[8]श्विना घर्म्मम्पात'मिति । अश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति ॥ २० ॥

---

(१) शु० य० सं० ३८. १० । (२) शु० य० सं० ३८. १० । (३) शु० य० सं० ३८. १० । (४) शु० य० सं० ३८. ११ । (५) शु० य० सं० ३८. ११ । (६) शु० य० सं० ३८. ११ । (७) "स्तेनैवैनमेत०" इति 'ग' 'ज' पुस्तकयोः पाठः । (८) शु० य० सं० ३८. १२ ।

'हार्द्दानिमहार्द्दिवाभिरूतिभि'रिति । अनिरुक्तमनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्भिषज्यति ॥ २१ ॥ 'तन्त्रायिणे' ऽइति । एष वै तन्त्रायी य ऽएष तपत्येष हीमाँल्लोकाँस्तन्त्रमिवानुसञ्चरत्येष ऽउ प्रवर्ग्य-स्तदेतमेवैतत्प्रीणाति तस्मादाह तन्त्रायिणे ऽइति ॥ २२ ॥ 'नमो द्यावापृथिवीभ्या'मिति । तदाभ्यान्द्यावापृथिवीभ्यान्निह्नुते ययोरिदꣳ सर्वमधि ॥ २३ ॥ अथ यजमानः । यज्ञो वै यजमानो यज्ञेनैवैतद्यज्ञम्भिषज्यति ॥२४॥ 'अपातामश्विना घर्म्म'मिति । अश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति ॥ २५ ॥ 'अनु द्यावापृथिवी ऽअमꣳसाता'मिति । तदिमे द्यावा-पृथिवी ऽआह ययोरिदꣳ सर्वमधी'हैव रातयः सन्त्विती-हैव नो धनानि सन्त्वित्येवैतदाह ॥ २६ ॥ अथ पिन्वमानमनुमन्त्रयते *। 'इषे पिन्वस्वे'ति वृष्ट्यै तदाह यदाहेषे पिन्वस्वेत्यू'र्ज्जे पिन्वस्वे'ति यो वृष्टादूर्ग्रसो जायते तस्मै तदाह 'ब्रह्मणे पिन्वस्वे'ति तद्ब्रह्मण ऽआह 'क्षत्राय पिन्वस्वे'ति तत्क्षत्रायाह 'द्यावापृथिवीभ्याम्पिन्व-स्वे'ति तदाभ्यान्द्यावापृथिवीभ्यामाह ययोरिदꣳ सर्वमधि ॥ २७ ॥ स यदूर्द्ध्वः पिन्वते । तद्यजमानाय पिन्वते

---

(१) शु० य० सं० ३८. १२। (२) शु० य० सं० ३८. १२। (३) शु० य० सं० ३८. १२। (४) शु० य० सं० ३८. १३। (५) शु० य० सं० ३८. १३। (६) शु० य० सं० ३८. १३।

* का० श्रौ० सू० २६. ६. ८।

(७) शु० य० सं० ३८. १४। (८) शु० य० सं० ३८. १४। (९) शु० य० सं० ३८. १४। (१०) शु० य० सं० ३८. १४। (११) शु० य० सं० ३८. १४।

यत्प्राङ् तद्देवेभ्यो यद्दक्षिणा तत्पितृभ्यो यत्प्रत्यङ् तत्पशुभ्यो यदुदङ् तत्प्रजाया ऽअनपराद्धन्त्वेवं[1] यजमानस्योर्द्ध्वो ह्येव पिन्विन्वत्त्वाथ[2] यान्दिशम्पिन्न्वते ताम्पिन्न्वते यदा शाम्म्यन्ति विप्प्रुषः ॥ २८ ॥ अथ प्प्राङिवोदङ्ङुत्क्रामति*। 'धर्म्मासि सुधर्म्मे'[3]त्येष वै धर्म्मो य ऽएष तपत्येष हीदꣳ सर्व्वन्धारयत्येतेनेदꣳ सर्व्वन्धृतमेष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह धर्म्मासि सुधर्म्मेति ॥ २९ ॥ अथ खरे सादयति । 'अमेन्न्यस्म्मे[4] नृम्म्णानि धारये'त्यक्रुद्ध्यन्नो धनानि धारयेत्येवैतदाह 'ब्रह्म[5] धारय क्षत्रन्धारय विशन्धारये'त्येतत्सर्व्वन्धारयेत्त्येवैतदाह ॥३०॥ अथ शाकलैर्ज्जुहोति । प्प्राणा वै शाकलाः प्प्राणानेवास्मिन्नेतद्दधाति ॥ ३१ ॥ 'स्वाहा[6] पूष्णे शरस' इति । अयं वै पूषा योऽयम्पवत ऽएष हीदꣳ सर्व्वम्पुष्यत्येष ऽउ प्प्राणः प्प्राणमेवास्मिन्नेतद्दधाति तस्म्मादाह स्वाहा पूष्णे शरस ऽइत्यवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुर्हुत्त्वा मद्ध्यमे परिधा ऽउपश्श्रयति ॥ ३२ ॥ 'स्वाहा[7] ग्ग्रावभ्य' ऽइति । प्प्राणा वै ग्ग्रावाणः प्प्राणानेवास्मिन्नेतद्दधाति हुत्त्वा मद्ध्यमे परिधा ऽउपश्श्रयति ॥ ३३ ॥ 'स्वाहा[8] प्प्रतिरवेभ्य' ऽइति । प्प्राणा वै प्प्रतिरवाः प्प्राणान्हीदꣳ सर्व्वम्प्रतिरत-

(१) "न्त्वेव" इति 'ग' 'ज' पुस्तकयोः । (२) "पिन्न्वत्त्याथ" इति 'ग' 'ज' पुस्तकयोः ।
* 'धर्म्मासीत्युत्क्रामत्युत्तरपूर्वार्द्धम्' का० श्रौ० सू० २६. ६. ९ ) इति ।
( ३ ) शु० य० सं० ३८. १४ । ( ४ ) शु० य० सं० ३८. १४ । ( ५ ) शु० य० सं० ३८. १४ । ( ६ ) शु० य० सं० ३८. १५ ।
(७) शु० य० सं० ३८. १५ । ( ८ ) शु० य० सं० ३८. १५ ।

न्प्राणानेवास्मिन्नेतद्दधाति हुत्वा मद्ध्यमे परिधा ऽउपश्श्रयति ॥ ३४ ॥ 'स्वाहा पितृब्भ्य ऽऊर्द्ध्वबर्हिब्भ्यो घर्म्मपावब्भ्य' ऽइति । अहुत्वैवोदङ्ङीक्षमाणो दक्षिणार्द्धे बर्हिष ऽउपगूहति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छत्रया वै पितरस्तानेवैतत्प्रीणात्यथ यन्न प्प्रेक्षते सकृदु ह्येव पराञ्चः पितरः ॥ ३५ ॥ 'स्वाहा द्यावापृथिवीब्भ्या'मिति । प्प्राणोदानौ वै द्यावापृथिवी प्प्राणोदानावेवास्मिन्नेतद्दधाति हुत्वा मद्ध्यमे परिधा ऽउपश्श्रयति ॥ ३६ ॥ 'स्वाहा व्विश्श्वेब्भ्यो देवेब्भ्य ऽइति । प्प्राणा वै व्विश्श्वे देवाः प्प्राणानेवास्मिन्नेतद्दधाति हुत्वा मद्ध्यमे परिधा ऽउपश्श्रयति ॥ ३७ ॥ 'स्वाहा रुद्राय रुद्रहूतय' ऽइति । अहुत्वैव दक्षिणेक्षमाणः प्प्रतिप्प्रस्त्थात्रे प्प्रयच्छति तः स ऽउत्तरतः शालाया ऽउदङ्ङ्निरस्यत्त्येषा ह्येतस्य देवस्य दिक्स्वायामेवैनमेतद्दिशि प्प्रीणात्यथ यन्न प्प्रेक्षते नेन्मा रुद्रो हिनसदिति ॥ ३८ ॥ सप्तैता ऽआहुतयो भवन्ति । सप्त वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति ॥ ३९ ॥ अथ महावीरादुपयमन्न्यामप्रत्यानयति । 'स्वाहा सञ्ज्योतिषा ज्ज्योति'रिति ज्ज्योतिर्वा ऽइतरस्मिन्न्पयो भवति ज्ज्योतिरितरस्यान्ते ह्येतदुभे ज्ज्योतिषी सङ्गच्छेते ऽअवरं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः

* अत्र "रसो व्यक्षरत्त्स" इत्यधिकः पाठः 'ग' 'ज' पुस्तकयोः [ ] इति चिह्नान्तर्गत उपलभ्यते ।

( १ ) शु० य० सं० ३८. १५ । ( २ ) शु० य० सं० ३८. १५ । ( ३ ) शु० य० सं० ३८. १५ । ( ४ ) शु० य० सं० ३८. १६ । ( ५ ) शु० य० सं० ३८. १६ ।

॥ ४० ॥ * अथ रौहिणौ जुहोति । 'अहः[1] केतुना जुषताꣳ सुज्ज्योतिर्ज्ज्योतिषा स्वाहे'त्यसावेव बन्धू 'रात्रिः[2] केतुना जुषताꣳ सुज्ज्योतिर्ज्ज्योतिषा स्वाहे'त्यसावेव बन्धुः ॥ ४१ ॥ अथ यजमानाय घर्म्मोच्छिष्टम्प्रयच्छति । स ऽउपहवमिष्ट्वा भक्षयति 'मधु[3] हुतमिन्द्रतमे ऽअग्नावि'ति मधु हुतमिन्द्रियवत्तमेऽग्नाविर्त्येवैतदाहा'श्याम[4] ते देव घर्म्म नमस्ते ऽअस्तु मा मा हिꣳसी'रित्याशिषमेवैतदाशास्ते ॥ ४२ ॥ अथ दक्षिणतः सिकता ऽउपकीर्ण्णा भवन्ति । तन्मार्ज्जयन्ते य ऽएव मार्ज्जालीये बन्धुः सोऽत्रानुप्रहरति शाकलानथोपसदा चरन्त्येतदु यज्ञस्य शिरः संस्कृतं यथा यथैनन्तदश्विनौ प्प्रत्यधत्ताम् ॥ ४३ ॥ तन्न प्प्रथमयज्ञे प्प्रवृञ्ज्यात् । एनस्यꣳ हि तदथो नेन्न्म ऽइन्द्रः शिरश्छिनददिति द्वितीये वैव तृतीये वापशीर्ष्णा ह्येवाग्ग्रे यज्ञेन देवा ऽअर्च्चन्तः श्राम्म्यन्तश्चेरुस्तस्म्माद्द्वितीये वैव तृतीये वाथो तप्तो वा ऽएष शुशुचानो भवति ॥ ४४ ॥ तं यत्प्रथमयज्ञे प्प्रवृञ्ज्यात् । एषोऽस्य तप्तः शुशुचानः प्प्रजाश्च पशूँश्च प्प्रदहेदथो ऽआयुः प्प्रमायुको यजमानः स्यात्तस्म्माद्द्वितीये वैव तृतीये वा ॥ ४५ ॥ तन्न सर्व्वस्म्मा ऽइव प्प्रवृञ्ज्यात् । सर्वं वै प्प्रवर्ग्यो नेत्सर्व्वस्म्मा ऽइव सर्व्वङ्करवाणीति यो न्न्वेव ज्ञातस्तस्म्मै प्प्रवृञ्ज्याद्यो वास्यप्प्रियः स्याद्यो वानूचानोऽनूक्तेनैनम्प्राप्प्नुयात् ॥ ४६ ॥

* अत्र शतम् ७००० ।

(१) शु० य० सं० ३८. १६ । (२) शु० य० सं० ३८. १६ । (३) शु० य० सं० ३८. १६ । (४) शु० य० सं० ३८. १६ ।

सहस्रे प्प्रवृञ्ज्यात् । सर्व्वं वै सहस्रꣳ सर्व्वमेष सर्व्व-वेदसे प्प्रवृञ्ज्यात्सर्व्वं वै सर्व्ववेदसꣳ सर्व्वमेष विश्श्व-जिति सर्व्वपृष्ठे प्प्रवृञ्ज्यात्सर्व्वं वै विश्श्वजित्सर्व्वपृष्ठꣳ सर्व्वमेष व्वाजपेये राजसूये प्प्रवृञ्ज्यात्सर्व्वꣳ हि तत्सत्त्रे प्प्रवृञ्ज्यात्सर्व्वं वै सत्त्रꣳ सर्व्वमेष ऽएतान्न्यस्य प्प्रवर्ज्जना-न्न्यतो नान्न्यत्र ॥ ४७ ॥ तदाहुः । यदुपशिरा ऽअप्प्रव-र्ग्ग्योऽथ केनास्याग्निहोत्त्रꣳ शीर्षण्वद्भवतीत्याहवनीयेनेति ब्रूयात्कथन्दर्शपूर्ण्णमासावित्याज्येन च पुरोडाशेन चेति ब्रूयात्कथञ्चातुर्म्मास्यानीति पयस्ययेति ब्रूयात्कथम्पशु-बन्ध ऽइति पशुना च पुरोडाशेन चेति ब्रूयात्कथꣳ सौम्म्योऽद्ध्वर ऽइति हविर्द्धानेनेति ब्रूयात् ॥ ४८ ॥ अथो ऽआहुः । यज्ञस्य शीर्षच्छिन्नस्य शिर ऽएतद्देवाः प्प्रत्य-दधुर्य्यदातिथ्यन्न ह वा ऽअस्यापशीर्ष्ण्णा केन चन यज्ञेनेष्टम्भवति य ऽएवमेतद्वेद ॥ ४९ ॥ तदाहुः । यत्प्रणीताः प्प्रणयन्ति यज्ञेऽथ कस्म्मादत्त्र न प्प्रणयतीति शिरो वा ऽएतद्यज्ञस्य यत्प्रणीताः शिरः प्प्रवर्ग्ग्यो नेच्छिरसा शिरो-ऽभ्यारोहयाणीति ॥ ५० ॥ तदाहुः । यत्प्रयाजानुयाजा ऽअन्न्यत्र भवन्त्यथ कस्म्मादत्त्र न भवन्तीति प्प्राणा वै प्प्रयाजानुयाजाः प्प्राणा ऽअवकाशाः प्प्राणाः शाकला नेत्प्राणैः प्प्राणानभ्यारोहयाणीति ॥ ५१ ॥ तदाहुः । यदाज्ज्यभागावन्न्यत्र जुह्वत्यथ कस्म्मादत्त्र न जुहोतीति चक्षुषी वा ऽएते यज्ञस्य यदाज्ज्यभागौ चक्षुषी रौहिणौ नेच्चक्षुषा चक्षुरभ्यारोहयाणीति ॥ ५२ ॥ तदाहुः । यद्वा-

नस्पपत्यैर्देवेभ्यो जुह्वत्यथ कस्मादेतम्मृन्मयेनैव जुहोतीति यज्ञस्य शीर्षच्छिन्नस्य रसो ऽव्यक्षरत्स ऽइमे द्यावापृथिवी ऽअगच्छद्यन्मृदियन्तद्यदापोऽसौ तन्मृदश्चापाश्च महावीराः कृता भवन्ति तेनैवेनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ५३ ॥ स यद्वानस्पत्यः स्यात् । प्रदह्येत यद्धिरण्मयः स्यात्प्रलीयेत यल्लोहमयः स्यात्प्रसिच्च्येत यदयस्मयः स्यात्प्रदहेत्परीशासात्तथैष ऽएवैतस्मा ऽअतिष्ठत तस्मादेतम्मृन्मयेनैव जुहोति ॥ ५४ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्या या सृष्टौ ॥ ५५ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥

—o—

[ प्रवर्ग्योत्सादनम् ]

स वै तृतीयेऽहन् । षष्ठे वा द्वादशे वा प्प्रवर्ग्योपसदौ समस्य प्प्रवर्ग्यमुत्सादयत्युत्सन्नमिव हीदꣳ शिरस्तद्यदेतमभितो भवति तत्सर्वꣳ समादायाग्रेण शालामन्तर्वेद्युपसमायन्ति ॥ १० ॥ अथाग्नीध्रः । आहवनीये* त्रीञ्छालाकानुपकल्पयते तेषामेकमुज्वलरुय मुखदघ्ने धारयमाणो जुहोति यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्सेमाँ-

* तथा च कात्यायनः—'आहवनीये त्रीञ्छालाकान्प्रदीप्य प्रदीप्याग्नीध्रो धारयति शतरुद्रियवत्प्रतिलोमं प्रमाणेषु' ( का० श्रौ० सू० २६. ७. ३ ) इति ।

ह्लोकानाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ २ ॥ अथ यन्मुखदघ्ने । उपरीव वै तद्यन्मुखदघ्न-मुपरीव तद्यदसौ लोकस्तद्यामुँल्लोकꣳ शुगाविशत्तयैवैनमे-तच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥ '(१)या ते घर्म्म दिव्या शु'गिति । यैव दिव्या शु'(२)ग्या गायत्र्याꣳ हवि-र्द्धान' इति यैव गायत्र्याꣳ हविर्द्धाने 'सा त(३) ऽआप्या-यतान्निष्ट्यायतान्तस्यै ते स्वाहे'ति नात्र तिरोहितमिवास्ति ॥ ४ ॥ अथ द्वितीयमुज्वलय्य । नाभिदघ्ने धारयमाणो जुहोति मध्यमिव वै तद्यन्नाभिदघ्नम्मध्यमिवान्तरिक्षलोक-स्तद्यान्तरिक्षलोकꣳ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ५ ॥ '(४)या ते घर्म्मान्तरिक्षे शु'गिति । यैवा-न्तरिक्षे शु'(५)ग्या त्रिष्टुभ्याग्नीध्र' ऽइति यैव त्रिष्टुभ्याग्नीध्रे '(६)सा त ऽआप्यायतान्निष्ट्यायतान्तस्यै ते स्वाहे'ति नात्र तिरो-हितमिवास्ति ॥६॥ [अर्धः प्रपाठकः ॥ ६१ ॥] अथ तृतीयम-भ्याधाय। तस्मिन्नासीनो जुहोत्यध ऽइव वै तद्यदासीनोऽध ऽइव तद्यदयँल्लोकस्तद्येमँल्लोकꣳ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ७ ॥ '(७)या ते घर्म्म पृथिव्याꣳ शु'गिति । यैव पृथिव्याꣳ शु'(८)ग्या जगत्याꣳ सदस्ये'ति यैव जगत्याꣳ सदस्या '(९)सा त ऽआप्यायतान्निष्ट्यायता-न्तस्यै ते स्वाहे'ति नात्र तिरोहितमिवास्ति ॥ ८ ॥ अथो-

(१) शु० य० सं० ३८. १८। (२) शु० य० सं० ३८. १८। (३) शु० य० सं० ३८. १८। (४) शु० य० सं० ३८. १८। (५) शु० य० सं० ३८. १८। (६) शु० य० सं० ३८. १८। (७) शु० य० सं० ३८. १८। (८) शु० य० सं० ३८. १८। (९) शु० य० सं० ३८. १८।

पनिष्क्रामति । 'क्षत्रस्य त्वा परस्पाये'[1] त्येतद्वै दैवं क्षत्रं यऽ एष तपत्यस्य त्वा मानुषस्य क्षत्रस्य परस्पर्वायेत्येवैतदाह[2] 'ब्रह्मणस्तन्वम्पाही'[3] ति ब्रह्मण ऽआत्मानङ्गोपायेत्येवैतदाह 'विशस्त्वा धर्म्मणा वय'[4] मिति यज्ञो वै विड्यज्ञस्य त्वारिष्ट्या ऽइत्येवैतदाह।'नुक्रामाम सुविताय नव्यस' ऽइति यज्ञस्य-त्वारिष्ट्या ऽअह्वलाया ऽइत्येवैतदाह ॥ ९ ॥ अथाह साम गायेति । साम ब्रूहीति वा गायेति त्वेव ब्रूयाद्गायन्ति हि साम तद्यत्साम गायति नेदिमाद्बहिर्द्धा यज्ञाच्छरीरान्नाष्ट्रा रक्षाथंसि हिनसन्निति साम हि नाष्ट्राणाथं रक्षसामपहन्ता ॥ १० ॥ आग्नेय्याङ्गायति । अग्निर्हि रक्षसामपहन्तातिच्छन्दसि गायत्त्येषा वै सर्व्वाणि छन्दाथंसि यदु-तिच्छन्दास्तस्मादुतिच्छन्दसि गायति ॥ ११ ॥ स गायति। अग्निष्टपति प्प्रतिदहत्त्यहावोऽहाव ऽइति तन्नाष्ट्रा ऽएवै-[6]तद्रक्षाथंस्यतोऽपहन्ति ॥ १२ ॥ त ऽउदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्ग्रेणाग्नीद्ध्रमेषा हि यज्ञस्य द्वाः स यस्यान्ततो दिश्यापो भवन्ति तद्यन्ति ॥ १३ ॥ तं वै परिष्यन्द ऽउत्सादयेत् । तप्तो वा ऽएष शुशुचानो भवति तं यदस्यामुत्सादयेदिमामस्य शुगृच्छेद्यदप्प्सूत्सा-दयेदपोऽस्य शुगृच्छेदथ यत्परिष्यन्द ऽउत्सादयति तथो ह नैवापो हिनस्ति नेमां यदहाप्प्सु न प्प्रास्यति तेनापो न हिनस्त्यथ यत्समन्तमापः परियन्ति शान्तिर्वा ऽआप-

(१) शु० य० सं० ३८. १९ । (२) "परस्पाये०" इति 'ग' 'ज' पुस्तकयोः । (३) शु० य० सं० ३८. १९ । (४) शु० य० सं० ३८. १९ । (५) शु० य० सं० ३८. १९ । (६) "वै तद्र०" इति 'ग' 'ज' पुस्तकयोः ।

स्तेनो ऽइमान्न हिनस्ति तस्मात्परिष्ष्यन्द ऽउत्सादयेत् ॥ १४ ॥ उत्तरवेदौ त्त्वेवोत्सादयेत् । यज्ञो व्वा ऽउत्तरवेदिः शिरः प्प्रवर्ग्यो यज्ञ ऽएवैतच्छिरः प्प्रतिदधाति ॥ १५ ॥ उत्तरनाब्भ्या सꣳस्पृष्टम् । प्रथमम्प्रवर्ग्यमुत्सादयति व्वाग्ग्वा ऽउत्तरनाभिः शिरः प्प्रवर्ग्यः शीर्षंस्तद्वाचन्दधाति ॥ १६ ॥ '[1]चतुःस्रक्ति'रिति । एष वै चतुःस्रक्तिर्य्य ऽएष तपति दिशो ह्येतस्य स्रक्तयस्तस्मादाह चतुःस्रक्तिरिति ॥ १७ ॥ '[2]नाभिर्ऋतस्य सप्प्रथा' ऽइति । सत्यं व्वा ऽऋतꣳ सत्यस्य नाभिः सप्प्रथा ऽइत्त्येवैतदाह '[3]स नो व्विश्वायुः सप्प्रथा' ऽइति स नः सर्व्वायुः सप्प्रथा ऽइत्त्येवैतदाह ॥ १८ ॥ '[4]अप द्वेषो ऽअप ह्वर' ऽइति । नात्र तिरोहितमिवास्त्य'[5]न्यव्व्रतस्य सश्चिमे'त्त्यन्यद्वा ऽएतस्य व्रतमन्त्यन्मनुष्याणान्तस्मादाहान्यव्व्रतस्य सश्चिमेत्त्यवमितरौ प्प्राञ्चौ तत्त्रिवृत्त्रिवृद्धीदꣳ शिरः ॥ १९ ॥ पुरस्तादुपशयाम्मृदम् । माꣳसमेवास्मिन्नेतद्दधाति तदभितः परीशासौ * बाहू ऽएवास्मिन्नेतद्दधात्त्यभितः परे रौहिणहवन्यौ स्रुचौ हस्तावेवास्मिन्नेतद्दधाति ॥ २० ॥ उत्तरतोऽग्निम् † । तद्धि तस्या ऽआयतनन्दक्षिणतः सम्म्राडासन्दीन्तद्धि तस्या ऽआयतनमुत्तरतः कृष्णाजिनन्तद्धि तस्यायतनꣳ सर्व्वतो धवित्राणि ‡ प्प्राणा वै धवित्राणि प्प्राणानेवास्मिन्नेतद्-

(१) शु० य० सं० ३८. २०। (२) शु० य० सं० ३८. २०। (३) शु० य सं० ३८. २०। (४) शु० य० सं० ३८. २०। (५) शु० य० सं० ३८. २०।

* 'परीशासावभितः' (का० श्रौ० सू० २६. ७. १७) इति।

† 'अग्निमुत्तरतः' (का० सू० २६. ७. १९) इति।

‡ का० श्रौ० सू० २६, ७. २२।

धाति त्रीणि भवन्ति त्रयो वै प्प्राणाः प्प्राण ऽउदानो व्व्यानस्तानेवास्मिन्नेतद्दधाति ॥२१॥ अथैतद्रज्जुसन्दानम् । उपयमन्न्यामाधाय पश्चात्प्राचीमासादयत्त्युदरमेवास्मिन्नेतद्दधाति तदभितः पिन्न्वने ऽआण्डावेवास्मिन्नेतद्दधात्याण्डाब्भ्याᳬं हि व्वृषा पिन्न्वते पश्चात्स्थूणामयूखमूरू ऽएवास्मिन्नेतद्दधाति पश्चाद्रौहिणकपाले जानुनी ऽएवास्मिन्नेतद्दधाति ते यदेककपाले भवत ऽएककपाले ऽइव हीमे जानुनी पश्चाद्धृष्टी पादावेवास्मिन्नेतद्दधाति पादाब्भ्याᳬं हि धृष्टम्प्रहरत्त्युत्तरतः खरौ प्प्रचरणीयौ तद्धि तयोरायतनन्दक्षिणतो मार्ज्जालीयन्तद्धि तस्यायतनम् ॥२२॥ अथास्मिन्नुपय ऽआनयति । 'घर्म्मैतत्ते[1] पुरीष'मित्यन्नं वै पुरीषमन्नमेवास्मिन्नेतद्दधाति 'तेन[2] वर्द्धस्व चा च प्प्यायस्वे'ति नात्र तिरोहितमिवास्ति 'वर्द्धिषीमहि[3] च वयमा च प्प्यासिषीमही'त्याशिषमेवैतदाशास्ते ॥ २३ ॥ स वै न सर्व्वमिवानयेत् । नेद्यजमानात्परागन्नमसदित्त्यर्द्धं वा भूयो वा परिशिनष्ष्टि तस्मिन्नपराह्णे यजमानाय व्रतमब्भ्युत्सिच्च्य प्प्रयच्छति तद्यजमान ऽएवैतदन्नाद्यन्दधाति तथो ह यजमानान्न परागन्नम्भवति ॥ २४ ॥ अथैनमद्भिः परिषिञ्चति । शान्तिर्व्वा ऽआपः शमयत्त्येवैनमेतत्सर्व्वतः परिषिञ्चति सर्व्वत ऽएवैनमेतच्छमयति त्रिष्कृत्वः परिषिञ्चति त्रिवृद्धि यज्ञः ॥ २५ ॥ अथाह

(१) शु० य० सं० ३८. २१। (२) शु० य० सं० ३८. २१। (३) शु० य० सं० ३८. २१।

व्वार्षाहरꣳ साम गायेति। एष वै व्वृषा हरिर्य्य ऽएष तपत्येष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह व्वार्षाहरꣳ साम गायेति ॥ २६ ॥ अथ चात्वाले मार्ज्जयन्ते। 'सुमित्रिया न ऽआप ऽओषधयꣳ सन्त्वि'त्यञ्जलिनाप ऽउपाचति व्वज्रो वा ऽआपो व्वज्रेणैवैतन्मित्रधेयङ्कुरुते 'दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्म' ऽइति यामस्य दिशन्द्वेष्यꣳ स्यात्तान्दिशम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ २७ ॥ अथ प्प्राङिवोदङ्ङुत्क्रामति। 'उद्वयन्तमसस्परी'ति पाप्प्मा वै तमꣳ पाप्प्मानमेव तमोऽपहते 'स्वꣳ पश्यन्त ऽउत्तर'मित्ययं व्वै लोकोऽस्य ऽउत्तरोऽस्मिन्नेव लोके प्प्रतितिष्ठति 'देवन्देवत्रा सूर्य्यमगन्म ज्योतिरुत्तम'मिति स्वर्ग्गो वै लोकꣳ सूर्य्यो ज्योतिरुत्तमꣳ स्वर्ग्ग ऽएव लोकेऽन्ततꣳ प्प्रतितिष्ठत्यनपेक्षमेत्याहवनीये समिधमभ्यादधाति 'समिदसि तेजोऽसि तेजो मयि धेही'त्याशिषमेवैतदाशास्ते ॥ २८ ॥ अथ प्प्रसुते दधिघर्म्मेण चरन्ति। यज्ञो वै सोमꣳ शिरꣳ प्प्रवर्ग्यो यज्ञ ऽएवैतच्छिरꣳ प्प्रतिदधाति माध्यन्दिने सवन ऽएतद्वा ऽइन्द्रस्य निष्केवल्यꣳ सवनं यन्माध्यन्दिनꣳ सवनꣳ स्व ऽएवैनमेतद्भागे प्प्रीणाति स्तुते माध्यन्दिने पवमाने प्प्राणो वै माध्यन्दिनꣳ पवमानꣳ प्प्राणमेवास्मिन्नेतद्दधात्यग्निहोत्रहवण्या मुखं व्वा ऽएतद्यज्ञानां यदग्निहोत्रꣳ

(१) शु० य० सं० ३८. २३। (२) शु० य० सं० ३८. २३। (३) शु० य० सं० ३८. २४। (४) शु० य० सं० ३८. २४। (५) शु० य० सं० ३८. २४। (६) शु० य० सं० ३८. २५।

शीर्षंस्तन्मुखन्दधाति ॥ २९ ॥ स ऽआनीयमान ऽआह । होतर्व्वदस्व यत्ते व्वाद्यमिति व्वदते ह्यत्र होताथोपोत्तिष्ठन्नाह 'श्श्रातं हवि'रिति श्रातं हि भवत्यतिक्रम्याश्राव्याह दधिघर्म्मस्य यजेति व्वषट्कृते जुहोत्यनुवषट्कृत ऽआहरति भक्षन्तं यजमानाय प्प्रयच्छति ॥ ३० ॥ स ऽउपहवमिष्ट्वा भक्षयति । 'मयि त्यदिन्द्रियम्बृह'दित्येतद्वा ऽइन्द्रियम्बृहद्य ऽएष तपति 'मयि दक्षो मयि क्रतु'रिति क्रतूदक्षावेवात्मन्धत्ते 'घर्म्मस्त्रिशुग्विराजती'ति घर्म्मो ह्येष त्रिशुग्विराजति 'विराजा ज्योतिषा सहे'ति विराजा ह्येष ज्योतिषा सह 'ब्रह्मणा तेजसा सहे'ति ब्रह्मणा ह्येष तेजसा सह 'पयसो रेत ऽआभृत'मिति पयसो ह्येतद्रेत ऽआभृत'न्तस्य दोहमशीमह्युत्तरामुत्तरां समा'मित्याशिषमेवैतदाशास्तेऽथ चात्वाले मार्जयन्तेऽसावेव बन्धुः ॥ ३१ ॥ अथातो दक्षिणानाम् । सुवर्णं हिरण्यं शतमानम्ब्रह्मणे ददात्यासीनो वै ब्रह्मा यशः शयानं हिरण्यन्तस्मात्सुवर्णं हिरण्यं शतमानम्ब्रह्मणे ददाति ॥ ३२ ॥ अथ यैषा घर्म्मदुघा । तामध्वर्य्यवे ददाति तप्त ऽइव वै घर्म्मस्तप्तमिवाध्वर्य्युर्न्निष्क्रामति तस्मात्तामध्वर्य्यवे ददाति ॥ ३३ ॥ अथ यैषा यजमानस्य व्रतदुघा । ताꣳ होत्रे ददाति यज्ञो वै होता यज्ञो यजमानस्तस्मात्ताꣳ होत्रे ददाति ॥ ३४ ॥ अथ यैषा पत्न्यै व्रतदुघा ।

---

(१) ऋ० सं० ८. ८. ३७। (२) शु० य० सं० ३८. २७। (३) शु० य० सं० ३८. २७। (४) शु० य० सं० ३८. २७। (५) शु० य० सं० ३८. २७। (६) शु० य० सं० ३८. २७। (७) शु० य० सं० ३८. २८। (८) शु० य० सं० ३८. २८।

तामुद्गातृभ्यो ददाति पत्नीकर्म्मैव वा ऽएतेऽत्र कुर्वन्ति यदुद्गातारस्तस्मात्तामुद्गातृभ्यो ददाति ॥ ३५ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ३६ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—o—

[ घर्मभेदे प्रायश्चित्तम्, प्रवर्ग्यप्रशंसा च ]

सर्व्वेषां व्वा ऽएष भूतानाम् । सर्व्वेषान्देवानामात्मा यद्यज्ञस्तस्य समृद्धिमनु यजमानः प्प्रजया पशुभिर्ऋध्यते व्वि वा ऽएष प्प्रजया पशुभिरृध्यते यस्य घर्म्मो व्विदीर्य्यते तत्र प्प्रायश्चित्तिः ॥ १ ॥ पूर्ण्णाहुतिञ्जुहोति । सर्व्वं व्वै पूर्ण्णꣳ सर्व्वेणैवैतद्भिषज्यति यत्किञ्च व्विवृढं यज्ञस्य ॥ २ ॥ 'स्वाहा[1] प्प्राणेभ्यः साधिपतिकेभ्य' ऽइति । मनो वै प्प्राणानामधिपतिर्म्मनसि हि सर्व्वे प्प्राणाः प्प्रतिष्ठितास्तन्मनसैवैतद्भिषज्यति यत्किञ्च व्विवृढं यज्ञस्य ॥ ३ ॥ 'पृथिव्यै[2] स्वाहे'ति । पृथिवी वै सर्व्वेषान्देवानामायतनन्तत्सर्व्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च व्विवृढं यज्ञस्य ॥ ४ ॥ 'अग्नये[3] स्वाहे'ति । अग्निर्वै सर्व्वेषान्देवानामात्मा तत्सर्व्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च व्विवृढं यज्ञस्य ॥ ५ ॥ 'अन्तरिक्षाय[4] स्वाहे'ति । अन्तरिक्षं वै सर्व्वेषान्देवानामायतनन्तत्सर्व्वाभि-

(१) शु० य० सं० ३९. १ । (२) शु० य० सं० ३९. १ । (३) शु० य० सं० ३९. १ । (४) शु० य० सं० ३९. १ ।

रेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं य्यज्ञस्य ॥ ६ ॥ 'वायवे स्वाहे'ति । वायुर्वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं य्यज्ञस्य ॥ ७ ॥ 'दिवे स्वाहे'ति । द्यौर्वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं य्यज्ञस्य ॥ ८ ॥ 'सूर्याय स्वाहे'ति । सूर्यो वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं य्यज्ञस्य ॥ ९ ॥ 'दिग्भ्यः स्वाहे'ति । दिशो वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं य्यज्ञस्य ॥ १० ॥ 'चन्द्राय स्वाहे'ति । चन्द्रो वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं य्यज्ञस्य ॥ ११ ॥ 'नक्षत्रेभ्यः स्वाहे'ति । नक्षत्राणि वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं य्यज्ञस्य ॥ १२ ॥ 'अद्भ्यः स्वाहे'ति । आपो वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं य्यज्ञस्य ॥ १३ ॥ 'वरुणाय स्वाहे'ति । वरुणो वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं य्यज्ञस्य ॥ १४ ॥ 'नाभ्यै स्वाहा पूताय स्वाहे'ति । अनिरुक्तमनिरुक्तो वै प्प्रजापतिः प्प्रजापतिर्य्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्भिषज्ज्यति ॥ १५ ॥

(१) शु० य० सं० ३९. १। (२) शु० य० सं० ३९. १। (३) शु० य० सं० ३९. १। (४) शु० य० सं० ३९. २। (५) शु० य० सं० ३९. २। (६) शु० य० सं० ३९. २। (७) शु० य० सं० ३९. २। (८) शु० य० सं० ३९. २। (९) शु० य० सं० ३९. २।

त्रयोदशैता ऽआहुतयो भवन्ति। त्रयोदश वै मासाः सँवत्सरस्य सँवत्सरः प्प्रजापतिः प्प्रजापतिर्य्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्भिषज्ज्यति ॥ १६ ॥ 'वाचे[1] स्वाहे'ति। मुखमेवास्मिन्नेतद्दधाति 'प्प्राणाय[2] स्वाहा प्प्राणाय स्वाहे'ति नासिके ऽएवास्मिन्नेतद्दधाति 'चक्षुषे[3] स्वाहा चक्षुषे स्वाहे'त्यक्षिणी ऽएवास्मिन्नेतद्दधाति 'श्रोत्राय[4] स्वाहा श्रोत्राय स्वाहे'ति कर्ण्णावेवास्मिन्नेतद्दधाति ॥ १७ ॥ सप्तैता ऽआहुतयो भवन्ति। सप्त वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति पूर्ण्णाहुतिमुत्तमाञ्जुहोति सर्व्वं वै पूर्ण्णꣳ सर्व्वेणैवैतद्भिषज्ज्यति यत्किञ्च विवृढं ऽयज्ञस्य ॥ १८ ॥ 'मनसः[5] काममाकूति'मिति। मनसा वा ऽइदꣳ सर्व्वमाप्तन्तन्मनसैवैतद्भिषज्ज्यति यत्किञ्च विवृढं ऽयज्ञस्य ॥ १९ ॥ 'वाचꣳ[6] सत्त्यमशीये'ति। वाचा वा ऽइदꣳ सर्व्वमाप्तन्तद्वाचैवैतद्भिषज्ज्यति यत्किञ्च विवृढं ऽयज्ञस्य 'पशूनाꣳ[7] रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहे'त्याशिषमेवैतदाशास्ते ॥ २० ॥ अथ तञ्चोपशयाञ्च पिष्ट्वा। मार्त्स्नया मृदा सꣳसृज्याऽऽवृता करोत्यावृता पचत्युत्सादनार्थमथ य ऽउपशययोर्द्दृढꣳ स्यात्तेन प्प्रचरेत् ॥ २१ ॥ सँवत्सरो वै प्प्रवर्ग्ग्यः। सर्व्वं वै सँवत्सरः सर्व्वम्प्रवर्ग्ग्यꣳ स यत्प्रवृक्तस्तद्वसन्तो यद्रुचितस्तद्ग्रीष्मो यत्पिन्वितस्त-

---

(१) शु० य० सं० ३९. ३। (२) शु० य० सं० ३९. ३। (३) शु० य० सं० ३९. ३। (४) शु० य० सं० ३९. ३। (५) शु० य० सं० ३९. ४। (६) शु० य० सं० ३९. ४। (७) शु० य० सं० ३९. ४।

वृषा यदा वै वर्षाः पिन्वन्तेऽथैनाः सर्वे देवाः सर्वाणि भूतान्न्युपजीवन्ति पिन्वन्ते ह वा ऽअस्मै वर्षा य ऽएव-मेतद्वेद ॥ २२ ॥ इमे वै लोकाः प्रवर्ग्यः । सर्वं वा ऽइमे लोकाः सर्वम्प्रवर्ग्यः स यत्प्रवृक्तस्तदयँल्लोको यदुद्धृचित-स्तदन्तरिक्षलोको यत्पिन्विवतस्तदसौ लोको यदा वा ऽअसौ लोकः पिन्वतेऽथैनꣳ सर्वे देवाः सर्वाणि भूतान्न्युपजी-वन्ति पिन्वते ह वा ऽअस्मा ऽअसौ लोको य ऽएवमे-तद्वेद ॥ २३ ॥ एता वै देवताः प्रवर्ग्यः । अग्निर्वायुरा-दित्यः सर्वं वा ऽएता देवताः सर्वम्प्रवर्ग्यः स यत्प्रवृक्त-स्तदग्निरथ यदुद्धृचितस्तद्वायुरथ यत्पिन्विवतस्तदसावादित्यो यदा वा ऽअसावादित्यः पिन्वतेऽथैनꣳ सर्वे देवाः सर्वाणि भूतान्न्युपजीवन्ति पिन्वते ह वा ऽअस्मा ऽअसावादित्यो य ऽएवमेतद्वेद ॥ २४ ॥ यजमानो वै प्रवर्ग्यः । तस्या-त्मा प्रजा पशवः सर्वं वै यजमानः सर्वम्प्रवर्ग्यः स यत्प्रवृक्तस्तदात्मा यदुद्धृचितस्तत्प्रजा यत्पिन्विवतस्तत्पशवो यदा वै पशवः पिन्वन्तेऽथैनान्त्सर्वे देवाः सर्वाणि भूता-न्न्युपजीवन्ति पिन्वन्ते ह वा ऽअस्मै पशवो य ऽएवमेत-द्वेद ॥ ॥ २५ ॥ अग्निहोत्रं वै प्रवर्ग्यः । सर्वं वा ऽअ-ग्निहोत्रꣳ सर्वम्प्रवर्ग्यः स यदधिश्रितन्तत्प्रवृक्तो यदुन्नी-तन्तदुद्धृचितो यज्जुहुतन्तत्पिन्विवतो यदा वा ऽअग्निहोत्र-म्पिन्वतेऽथैनत्सर्वे देवाः सर्वाणि भूतान्न्युपजीवन्ति पि-न्वते ह वा ऽअस्मा ऽअग्निहोत्रं य ऽएवमेतद्वेद ॥ २६ ॥ दर्शपूर्णमासौ वै प्रवर्ग्यः । सर्वं वै दर्शपूर्णमासौ सर्व-

म्प्रवर्ग्यः स यदधिश्रितस्तत्प्रवृक्तो यदासन्नस्तद्धुचितो यद्धुतन्तत्पिन्न्वितो यदा वै दर्शपूर्णमासौ पिन्न्वेते ऽथैनौ सर्वे देवाः सर्वाणि भूतान्न्युपजीवन्ति पिन्न्वेते ह वा ऽअस्मै दर्शपूर्णमासौ य ऽएवमेतद्वेद ॥ २७ ॥ चातुर्म्मास्यानि वै प्प्रवर्ग्यः । सर्वं वै चातुर्म्मास्यानि सर्वम्प्रवर्ग्यः स यदधिश्रितस्तत्प्रवृक्तो यदासन्नन्तद्धुचितो यद्धुतन्तत्पिन्न्वितो यदा वै चातुर्म्मास्यानि पिन्न्वन्तेऽथैनानि सर्वे देवाः सर्वाणि भूतान्न्युपजीवन्ति पिन्न्वन्ते ह वा ऽअस्मै चातुर्म्मास्यानि य ऽएवमेतद्वेद ॥ २८ ॥ पशुबन्धो वै प्प्रवर्ग्यः । सर्वं वै पशुबन्धः सर्वम्प्रवर्ग्यः स यदधिश्रितस्तत्प्रवृक्तो यदासन्नस्तद्धुचितो यद्धुतस्तत्पिन्न्वितो यदा वै पशुबन्धः पिन्न्वतेऽथैनꣳ सर्वे देवाः सर्वाणि भूतान्न्युपजीवन्ति पिन्न्वते ह वा ऽअस्मै पशुबन्धो य ऽएवमेतद्वेद ॥ २९ ॥ सोमो वै प्प्रवर्ग्यः । सर्वं वै सोमः सर्वम्प्रवर्ग्यः स यदभिषुतस्तत्प्रवृक्तो यदुन्नीतस्तद्धुचितो यद्धुतस्तत्पिन्न्वितो यदा वै सोमः पिन्न्वतेऽथैनꣳ सर्वे देवाः सर्वाणि भूतान्न्युपजीवन्ति पिन्न्वते ह वा ऽअस्मै सोमो य ऽएवमेतद्वेद न ह वा ऽअस्या प्प्रवर्ग्येण केन चन यज्ञेनेष्टम्भवति य ऽएवमेतद्वेद ॥ ३० ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्प्रविशति य ऽएतमनु वा ब्ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ३१ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥२॥ कण्डिकासंख्या ॥१२२॥

इति तृतीयोऽध्यायः ॥ ३ ॥

## [ बृहदारण्यकम् * ]

( कोऽसौ पाप्मा मृत्युः, कुतो वा तस्योद्भवः, केन वा तस्यातिक्रमणम्, कथं चेत्येतत्सर्वं स्पष्टयति )

द्वया ह प्प्राजापत्याः । देवाश्चासुराश्च ततः कानीयसा ऽएव देवा ज्यायसा ऽअसुरास्त ऽएषु लोकेष्ष्वस्पर्द्धन्त ॥ १ ॥ ते ह देवा ऽऊचुः । हन्तासुरान्यज्ञ ऽउद्गीथेनात्ययामेति ॥ २ ॥ ते ह व्वाचमूचुः । त्वन्न ऽउद्गायेति तथेति तेब्भ्यो व्वागुदगायद्यो व्वाचि भोगस्तन्देवेब्भ्य ऽआगायद्यत्कल्ल्याणं व्वदति तदात्मने तेऽविदुरनेन वै न ऽउद्गात्रात्येष्ष्यन्तीति तमभिद्रुत्य पाप्प्मनाविद्ध्यन्त्स यः स पाप्प्मा यदेवेदमप्प्रतिरूपं व्वदति स ऽएव स पाप्प्मा ॥ ३ ॥ अथ ह प्प्राणमूचुः । त्वन्न ऽउद्गायेति तथेति तेब्भ्यः प्प्राण ऽउदगायद्यः प्प्राणे भोगस्तन्देवेब्भ्य ऽआगायद्यत्कल्ल्याणञ्जिग्घ्रति तदात्मने तेऽविदुरनेन वै न ऽउद्गात्रात्येष्ष्यन्तीति तमभिद्रुत्य पाप्प्मनाविद्ध्यन्त्स यः स पाप्प्मा यदेवेदमप्प्रतिरूपञ्जिग्घ्रति स ऽएव स पाप्प्मा ॥४॥ अथ ह चक्षुरूचुः । त्वन्न ऽउद्गायेति तथेति तेब्भ्यश्चक्षुरुदगायद्यश्चक्षुषि भोगस्तन्देवेब्भ्य ऽआगायद्यत्कल्ल्याणम्पश्श्यति तदात्मने तेऽविदुरनेन वै न ऽउद्गात्रात्येष्ष्यन्तीति तमभिद्रुत्य पाप्प्मनाविद्ध्यन्त्स यः स पाप्प्मा यदेवेदमप्प्रतिरूपम्पश्श्यति स ऽएव स पाप्प्मा ॥ ५ ॥ अथ ह श्श्रोत्रमूचुः । त्वन्न ऽउद्गायेति तथेति तेब्भ्यः श्श्रोत्रमुदगायद्यः

* बृहत्त्वं चास्य ब्रह्मविद्याहेतूनामन्तरङ्गबहिरङ्गभूतानां बहूनामिहोपदेशात्, अर्थतो ग्रन्थपरिमाणतश्च बहुत्वात् । आरण्यकत्वं चास्य नियमपूर्वकमरण्येऽनूच्यमानत्वात् ।

श्रोत्रे भोगस्तन्देवेभ्य ऽआगायद्यत्कल्ल्याणꣳ शृणोति तदात्मने तेऽविदुरनेन वै न ऽउद्गात्रात्ययेष्ष्यन्तीति तमभिद्रुत्त्य पाप्प्मनाविद्ध्यन्त्स यꣳ स पाप्प्मा यदेवेदमप्प्रातिरूपꣳ शृणोति स ऽएव स पाप्प्मा ॥ ६ ॥ अथ ह मन ऽऊचुः । त्वन्न ऽउद्गायेति तथेति तेब्भ्यो मन ऽउद्गायद्यो मनसि भोगस्तन्देवेभ्य ऽआगायद्यत्कल्ल्याणꣳ सङ्कल्प्पयति तदात्मने तेऽविदुरनेन वै न ऽउद्गात्रात्ययेष्ष्यन्तीति तमभिद्रुत्त्य पाप्प्मनाविद्ध्यन्त्स यꣳ स पाप्प्मा यदेवेदमप्प्रतिरूपꣳ सङ्कल्प्पयति स ऽएव स पाप्प्मैवमु खल्वेता देवताः पाप्प्मभिरुपास्सृजन्नेवमेनाः पाप्प्मनाविद्ध्यन् ॥ ७ ॥ अथ हेममासन्न्यम्प्राणमूचुः । त्वन्न ऽउद्गायेति तथेति तेब्भ्य ऽएष प्प्राण ऽउदगायत्तेऽविदुरनेन वै न ऽउद्गात्रात्ययेष्ष्यन्तीति तमभिद्रुत्त्य पाप्प्मनाविव्यत्त्सन्त्सं स्यथाश्मानमृत्त्वा लोष्टो विद्ध्वꣳसेतैवꣳ हैव विद्ध्वꣳसमाना विष्ष्वञ्चो विनेशुस्ततो देवा ऽअभवन्न्परासुरा भवत्यात्मना परास्य द्विषन्भ्रातृव्व्यो भवति य ऽएवं वेद ॥ ८ ॥ ते होचुः । क्क नु सोऽभूद्यो न ऽइत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्य ऽआङ्गिरसोऽङ्गानाꣳहि रसः ॥ ९ ॥ सा वा ऽएषा देवता । दूर्न्नाम दूरꣳ ह्यस्या मृत्युर्दूरꣳ ह वा ऽअस्म्मान्न्मृत्त्युर्भवति य एवं वेद ॥ १० ॥ सा वा ऽएषा देवता । एतासान्देवतानाम्पाप्प्मानम्मृत्युमपहृत्य यत्रासान्दिशामन्तस्तद्गमयाञ्चकार तदासाम्पाप्प्म-

(१) सन्त्स" इति 'ग' 'ज' पुस्तकयोः ।

नो व्विन्न्यद्धात्तस्म्मान्न जनमियान्नान्तमियान्नेत्पाप्प्मानम्मृत्युमन्न्ववायानीति ॥ ११ ॥ सा वा ऽएषा देवता। एतासान्देवतानाम्पाप्प्मानम्मृत्युमपहत्याथैना मृत्युमत्त्यवहत् ॥ १२ ॥ स वै व्वाचमेव प्प्रथमामत्त्यवहत्। सा यदा मृत्युमत्त्यमुच्च्यत सोऽग्निरभवत्त्सोऽयमग्निः परेण मृत्युमतिक्क्रान्तो दीप्प्यते ॥ १३ ॥ अथ प्प्राणमत्त्यवहत्। स यदा मृत्युमत्त्यमुच्च्यत स व्वायुरभवत्त्सोऽयं व्वायुः परेण मृत्युमतिक्क्रान्तः पवते ॥ १४ ॥ अथ चक्षुरत्त्यवहत्। तद्यदा मृत्युमत्त्यमुच्च्यत स ऽआदित्त्योऽभवत्त्सोऽसावादित्त्यः परेण मृत्युमतिक्क्रान्तस्तपति ॥ १५ ॥ अथ श्श्रोत्रमत्त्यवहत्। तद्यदा मृत्युमत्त्यमुच्च्यत ता दिशोऽभवँस्ता ऽइमा दिशः परेण मृत्युमतिक्क्रान्ताः ॥ १६ ॥ अथ मनोऽत्त्यवहत्। तद्यदा मृत्युमत्त्यमुच्च्यत स चन्द्रमा ऽअभवत्त्सोऽसौ चन्द्रः परेण मृत्युमतिक्क्रान्तो भात्त्येवꣳ ह व्वा ऽएनमेषा देवता मृत्युमतिवहति य ऽएवं व्वेद ॥१७॥ अथात्त्मनेऽन्नाद्यमागायत्। यद्धि किञ्चान्नमद्यतेऽनेनैव तदद्यत ऽइह प्प्रतितिष्ठति ॥ १८ ॥ * ते देवा ऽअब्ब्रुवन्। एतावद्वा ऽइदꣳ सर्व्वं य्यदन्नन्तदात्त्मन ऽआगासीरनु नोऽस्म्मिन्नन्न ऽआभजस्वेति ते वै माभिसँव्विशतेति तथेति तꣳ समन्तम्परिण्ण्यविशन्त तस्म्माद्यदनेनान्नमत्ति तेनैतास्तृप्प्यन्त्त्येवꣳ ह व्वा ऽएनꣳ स्वा ऽअभिसँव्विशन्ति भर्त्ता स्वानाꣳ श्रेष्ठः पुर ऽएता भवत्त्यन्नादोऽधिपतिर्य्य

* अत्र शतम् ७१०० ।

ऽएवं वेद ॥ १९ ॥ य ऽउ हैवंविदम् । स्वेषु प्प्रतिप्प्रति-
ब्बुभूषति न हैवालम्भार्य्येभ्यो भवत्यथ य ऽएवैतमनु
भवति यो वैतमनु भार्य्यान्न्बुभूर्षति स हैवालम्भार्य्येभ्यो
भवति ॥ २० ॥ सोऽयास्य ऽआङ्गिरसः । अङ्गानाᳪं हि
रसः प्प्राणो वा ऽअङ्गानाᳪं रसः प्प्राणो हि वा ऽअङ्गानाᳪं
रसस्तस्म्माद्यस्म्मात्कस्म्माच्चाङ्गात्प्राण ऽउत्क्रामति तदेव
तच्छुष्ष्यत्येष हि वा ऽअङ्गानाᳪं रसः ॥२१॥ एष ऽउ ऽएव
बृहस्प्पतिः । वाग्वै बृहती तस्या ऽएष पतिस्तस्म्मादु
बृहस्प्पतिः ॥ २२ ॥ एष ऽउ ऽएव ब्ब्रह्मणस्प्पतिः । वाग्वै
ब्ब्रह्म तस्या ऽएष पतिस्तस्म्मादु * ब्ब्रह्मणस्प्पतिः ॥ २३ ॥
एष ऽउ ऽएव साम । वाग्वै सामैष सा चामश्चेति
तत्साम्म्नः सामत्वं यद्वेव समः प्प्लुषिणा समो मशकेन
समो नागेन सम ऽएभिस्त्रिभिर्ल्लोकैः समोऽनेन सर्व्वेण
तस्म्माद्वेव सामाश्नुते साम्म्नः सायुज्यᳪं सलोकतां य
ऽएवमेतत्साम वेद ॥ २४ ॥ एष ऽउ वा ऽउद्गीथः ।
प्प्राणो वा ऽउत्प्राणेन हीदᳪं सर्व्वमुत्तब्धं वागेव गीथोच्च
गीथा चेति स ऽउद्गीथः ॥ २५ ॥ तद्धापि ब्ब्रह्मदत्तश्चै-
कितानेयः । राजानम्भक्षयन्नुवाचायन्त्यस्य राजा मूर्द्धानं
विपातयताद्यदितोऽयास्य ऽआङ्गिरसोऽन्येनोदगायदिति वा-
चा च ह्येव स प्प्राणेन चोदगायदिति ॥ २६ ॥ तस्य हैतस्य
साम्म्नो यः स्वं वेद । भवति हास्य स्वन्तस्य वै स्वर
ऽएव स्वन्तस्म्मादार्त्विज्यङ्करिष्यन्न्वाचि स्वरमिच्छेत तया

* अत्र 'ग' 'ज' पुस्तकयोः "ह" इत्यधिको दृश्यते ।

व्वाचा स्वरसम्पन्नयार्त्विज्ज्यङ्कुर्व्वीत्तस्म्माद्यज्ञे स्वरवन्तन्दिदृक्षन्त ऽएवाथो यस्य स्वम्भवति भवति हास्य स्वं ऽय ऽएवमेतत्साम्म्नः स्वं व्वेद ॥ २७ ॥ तस्य हैतस्य साम्म्नो यः सुवर्ण्णं व्वेद । भवति हास्य सुवर्ण्णन्तस्य वै स्वर ऽएव सुवर्ण्णम्भवति हास्य सुवर्ण्णं ऽय ऽएवमेतत्साम्म्नः सुवर्ण्णं व्वेद ॥ २८ ॥ तस्य हैतस्य । साम्म्नो यः प्प्रतिष्ट्ठां व्वेद प्प्रति ह तिष्ट्ठति तस्य वै व्वागेव प्प्रतिष्ट्ठा वाचि हि खल्ल्वेष ऽएतत्प्राणः प्रतिष्ट्ठितो गीयतेऽन्न ऽइत्त्यु हैक ऽआहुः ॥ २९ ॥ अथातः पवमानानामेवाब्भ्यारोहः । स वै खलु प्प्रस्तोता साम प्प्रस्तौति स यत्र प्प्रस्तुयात्तदेतानि जपेदसतो मा सद्गमय तमसो मा ज्ज्योतिर्ग्गमय मृत्त्योर्म्मामृतङ्गमयेति ॥ ३० ॥ स यदाहासतो मा सद्गमयेति । मृत्त्युर्व्वा ऽअसत्सदमृतम्मृत्त्योर्म्मामृतङ्गमयामृतम्मा कुर्व्वित्त्येवैतदाह ॥ ३१ ॥ तमसो मा ज्ज्योतिर्ग्गमयेति । मृत्त्युर्वै तमो ज्ज्योतिरमृतम्मृत्त्योर्म्मामृतङ्गमयामृतम्मा कुर्व्वित्त्येवैतदाह मृत्त्योर्म्मामृतङ्गमयेति नात्र तिरोहितमिवास्ति ॥ ३२ ॥ अथ यानीतराणि स्तोत्राणि । तेष्ष्वात्मनेऽन्नाद्यमागायेत्तस्म्मादु तेषु वरं व्वृणीत यङ्कामङ्कामयेत तः स ऽएष ऽएवंव्विदुद्गातात्मने वा यजमानाय वा यङ्कामङ्कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्क्यताया ऽआशास्ति य ऽएवमेतत्साम व्वेद ॥ ३३ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ ज्ञानकर्मणोः स्तुत्यर्थं तत्फलभूतस्य प्रजापतेर्जगत्सृष्ट्यादौ स्वातन्त्र्यविभूतिवर्णनेन फलोत्कर्षवर्णनम् ]

आत्मैवेदमग्र ऽआसीत् । पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहन्नामाभवत्तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र ऽउक्त्वाथान्यन्नाम प्रब्रूते यदस्य भवति ॥ १ ॥ स यत्पूर्वोऽस्मात्सर्वस्मात् । सर्वान्पाप्मन ऽऔषत्तस्मात्पुरुष ऽओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य ऽएवं वेद ॥ २ ॥ सोऽबिभेत् । तस्मादेकाकी बिभेति स हायमीक्षाञ्चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत ऽएवास्य भयं वीयाय कस्माद्ध्यभेष्यद्द्वितीयाद्वै भयम्भवति ॥ ३ ॥ स वै नैव रेमे । तस्मादेकाकी न रमते स द्वितीयमैच्छत्स हैतावानास यथा स्त्रीपुमांसौ सम्परिष्वक्तौ ॥ ४ ॥ स ऽइममेवात्मानन्द्वेधापातयत् । ततः पतिश्च पत्नी चाभवतान्तस्मादिदमर्द्धवृगलमिव स्व ऽइति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्य्यत ऽएव तां समभवत्ततो मनुष्या ऽअजायन्त ॥५॥ सो हेयमीक्षाञ्चक्रे । कथन्नु मात्मन ऽएव जनयित्वा सम्भवति हन्त तिरोऽसानीति ॥ ६ ॥ सा गौरभवत् । वृषभ ऽइतरस्तां समेवाभवत्ततो गावोऽजायन्त ॥ ७ ॥ वडवेतराभवत् । अश्ववृष ऽइतरो गर्द्दभीतरा गर्द्दभ ऽइतरस्तां समेवाभवत्तत ऽएकशफमजायत ॥ ८ ॥ अजेतराभवत् । वस्त ऽइतरोऽविरितरा मेष ऽइतरस्तां समेवाभवत्ततोऽजावयोऽजायन्तैवमेव यदि-

(१) "०रो" इति 'ग' 'ज' पुस्तकयोः ।

दद्भिश्च मिथुनमा पिपीलिकाभ्यस्तत्सर्वमसृजत ॥ ९ ॥
सोऽवेत् । अहं वाव सृष्टिरस्म्यहᳯं हीदᳯं सर्वमसृक्षीति
ततः सृष्टिरभवत्सृष्ट्याᳯं हास्यैतस्याम्भवति य ऽएवं
वेद ॥ १० ॥ अथेत्यभ्यमन्थत् । स मुखाच्च योनेर्हस्ता-
भ्याञ्चाग्निमसृजत तस्मादेतदुभयमलोमकमन्तरतोऽलो-
मका हि योनिरन्तरतः ॥ ११ ॥ तद्यदिदमाहुः । अमुं
यजामुं यजेत्येकैकन्देवमेतस्यैव सा विसृष्टिरेष ऽउ
ह्येव सर्वे देवाः ॥ १२ ॥ अथ यत्किञ्चेदमार्द्रम् । तद्रेतसोऽ-
सृजत तदु सोम ऽएतावद्वा ऽइदᳯं सर्वमन्नञ्चैवान्नादश्च
सोम ऽएवान्नमग्निरन्नादः ॥ १३ ॥ सैषा ब्रह्मणोऽति-
सृष्टिः । यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतान-
सृजत तस्मादतिसृष्टिरतिसृष्ट्याᳯं हास्यैतस्याम्भवति
य ऽएवं वेद ॥ १४ ॥ तद्धेदन्तर्ह्यव्याकृतमासीत् । तन्ना-
मरूपाभ्यामेव व्याक्रियतासौनामायमिदᳯं रूप ऽइति
तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामा-
यमिदᳯं रूप ऽइति ॥ १५ ॥ स ऽएष ऽइह प्रविष्टः ।
आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्व-
म्भरो वा विश्वम्भरकुलाये तन्न पश्यन्त्यकृत्स्नो हि सः ॥१६॥
प्राणन्नेव प्राणो नाम भवति । वदन्वाक्पश्यँश्चक्षुः शृण्व-
ञ्छ्रोत्रम्मन्वानो मनस्तान्यस्यैतानि कर्म्मनामान्येव स योऽत
ऽएकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत ऽएकैकेन भवति
॥१७॥ [अर्धः प्रपाठकः ॥५०॥] आत्मेत्येवोपासीत । अत्र ह्येते
सर्वे ऽएकम्भवन्ति तदेतत्पदनीयमस्य सर्वस्य यदयमात्मा-

नेन ह्येतत्सर्व्वं व्वेद यथा ह वै पदेनानुविन्देदेवङ्कीर्त्तिं श्लोकं व्विन्दते य ऽएवं व्वेद ॥ १८ ॥ तदेतत्प्रेयः पुत्रात् । प्रेयो व्वित्तात्प्रेयोऽन्न्यस्मात्सर्व्वस्मादन्तरतरं य्यदयमात्मा स योऽन्न्यमात्मनः प्प्रियम्ब्रुवाणम्ब्रूयात्प्रियः रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्प्रियमुपासीत स य ऽआत्मानमेव प्प्रियमुपास्ते न हास्य प्प्रियम्प्रमायुकम्भवति ॥ १९ ॥ तदाहुः । यद्ब्रह्मविद्यया सर्व्वम्भविष्ष्यन्तो मनुष्ष्या मन्न्यन्ते किमु तद्ब्रह्मावेद्यस्मात्तत्सर्व्वमभवदिति ॥ २० ॥ ब्रह्म वा ऽइदमग्र ऽआसीत् । तदात्मानमेवावेदहम्ब्रह्मास्मीति तस्मात्तत्सर्व्वमभवत्तद्यो यो देवानाम्प्रत्यबुद्ध्यत स ऽएव तदभवत्तथऽर्षीणान्तथा मनुष्ष्याणाम् ॥ २१ ॥ तद्धैतत्पश्यन्नृषिर्व्वामदेवः प्प्रतिपेदे । अहम्मनुरभवः सूर्य्यश्चेति तदिदमप्प्येतर्हि य ऽएवं व्वेदाहम्ब्रह्मास्मीति स इदः सर्व्वम्भवति तस्य ह न देवाश्चनाभूत्या ऽईशत ऽआत्मा ह्येषाः स भवत्यथ योऽन्न्यान्देवतामुपास्तेऽन्न्योऽसावन्न्योऽहमस्मीति न स वेद यथा पशुरेवः स देवानां य्यथा ह वै बहवः पशवो मनुष्ष्यम्भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्प्रियम्भवति किमु बहुषु तस्मादेषान्तन्न प्प्रियं य्यदेतन्मनुष्ष्या व्विद्युः ॥ २२ ॥ ब्रह्म वा ऽइदमग्र ऽआसीत् । एकमेव तदेकः सन्न व्यभवत्तच्छ्रेयो रूपमत्यसृजत क्षत्रं य्यान्न्येतानि देवत्रा क्षत्राणीन्द्रो व्वरुणः सोमो रुद्रः पर्ज्जन्न्यो यमो मृत्युरीशान ऽइति तस्मात्क्षत्रात्परन्नास्ति

तस्म्माद्ब्राह्मणः क्षत्त्रियमधस्तादुपास्ते राजसूये क्षत्त्र ऽएव तद्यशो दधाति सैषा क्षत्त्रस्य योनिर्य्यद्ब्रह्म तस्म्माद्यद्यपि राजा परमताङ्गच्छति ब्रह्मैवान्तत ऽउपनिश्श्रयति स्वां योनिं य ऽउ एनꣳ हिनस्ति स्वाꣳस योनिमृच्छति स पापीयान्भवति यथा श्रेयाꣳसꣳ हिꣳसित्त्वा ॥ २३ ॥ स नैव व्यभवत् । स विशमसृजत यान्न्येतानि देवजातानि गणश ऽआख्यायन्ते वसवो रुद्रा ऽआदित्त्या विश्श्वे देवा मरुत ऽइति ॥ २४ ॥ स नैव व्यभवत् । स शौद्रं वर्ण्णमसृजत पूषणमियं वै पूषेयꣳ हीदꣳ सर्व्वम्पुष्ष्यति यदि दङ्किञ्च ॥२५॥ स नैव व्यभवत् । तच्छ्रेयो रूपमत्त्यसृजत धर्म्मन्तदेतत्क्षत्त्रस्य क्षत्त्रं यद्धर्म्मस्तस्म्माद्धर्मात्परन्नास्त्यथो ऽअबलीयान्बलीयाꣳसमाशꣳसते धर्म्मेण यथा राज्ञैवं यो वै स धर्म्मꣳ सत्त्यं वै तत्तस्म्मात्सत्त्यं वदन्तमाहुर्द्धर्म्मं वदतीति धर्म्मं वा वदन्तꣳ सत्त्यं वदतीत्येतद्ध्येवैतदुभयम्भवति ॥ २६ ॥ तदेतद्ब्रह्म क्षत्त्रं विट् शूद्रꣳ । तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्ष्येषु क्षत्त्रियेण क्षत्त्रियो वैश्श्येन वैश्श्यꣳ शूद्रेण शूद्रस्तस्म्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्ष्येष्ष्वेताभ्याꣳ हि रूपाभ्याम्ब्रह्माभवत् ॥ २७ ॥ अथ यो ह वा ऽअस्म्माल्लोकात्स्वँल्लोकमदृष्ट्वा प्रैति । स ऽएनमविदितो न भुनक्ति यथा वेदो वाननूक्तोऽन्न्यद्वा कर्म्माकृतं यदु ह वा ऽअप्प्यनेवंविन्महत्पुण्ण्यङ्कर्म्म करोति तद्धास्यान्ततः क्षीयत ऽएवात्मान-

(१) 'यदि'' इति 'ग' 'ज' पुस्तकयोः पाठः ।

मेव लोकमुपासीत स य ऽआत्मानमेव लोकमुपास्ते न हास्य कर्म्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्त-त्सृजते ॥ २८ ॥ अथो ऽअयं वा ऽआत्मा । सर्वेषाम्भूता-नाँल्लोकः स यज्जुहोति यद्यजते तेन देवानाँल्लोकोऽथ यदनु-ब्रूते तेनऽर्षीणामथ यत्प्रजामिच्छते यत्पितृभ्यो निपृ-णाति तेन पितॄणामथ यन्मनुष्यान्वासयते यदेभ्योऽ-शनन्ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयाᳪस्या पिपीलिकाभ्य ऽउपजीवन्ति तेन तेषाँल्लोको यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवᳪ हैवंविदे सर्वदा सर्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा ऽएतद्विदितम्मीमाᳪसितम् ॥ २९ ॥ आत्मैवेदमग्र ऽआसीत् । एक ऽएव सोऽ-कामयत जाया मे स्यादथ प्रजायेयाथ वित्तम्मे स्यादथ कर्म्म कुर्वीयेत्येतावान्वै कामो नेच्छँश्चनातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्या-दथ प्रजायेयाथ वित्तम्मे स्यादथ कर्म्म कुर्वीयेति स यावद-प्येतेषामेकैकन्न प्राप्नोत्यकृत्स्न ऽएव तावन्मन्यते तस्यो कृत्स्नता ॥ ३० ॥ मन ऽएवास्यात्मा । वाग्जाया प्राणः प्रजा चक्षुर्म्मानुषं वित्तञ्चक्षुषा हि तद्विन्दति श्रोत्र-न्दैवᳪ श्रोत्रेण हि तच्छृणोत्यात्मैवास्य कर्म्मात्मना हि कर्म्म करोति स ऽएष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदᳪ सर्वं यदिदङ्किञ्च तदिदᳪ सर्व-माप्नोति यदिदङ्किञ्च य ऽएवं वेद ॥ ३१ ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ अद्यमानत्वेन सृष्टस्यान्नभूतस्य जगत उपासनार्थं
विभागेन सप्तधा निरूपणम् ]

यत्सप्तान्नानि मेधया तपसाजनयत्पिता ॥ एकमस्य साधारणन्द्वे देवानभाजयत् ॥ त्रीण्यात्मनेऽकुरुत पशुभ्य ऽएकम्प्रायच्छत् ॥ तस्मिन्त्सर्वम्प्रतिष्ठितं यच्च प्राणिति यच्च न ॥ कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा ॥ यो वै तामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन ॥ स देवानपिगच्छति स ऽऊर्ज्जमुपजीवतीति श्लोकाः ॥ १ ॥ यत्सप्तान्नानि मेधया तपसाजनयत्पितेति । मेधया हि तपसाजनयत्पितैकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य ऽएतदुपास्ते न स पाप्मनो व्यावर्त्तते मिश्रꣳ ह्येतत् ॥ २ ॥ द्वे देवानभाजयदिति । हुतञ्च प्रहुतञ्च तस्माद्देवेभ्यो जुह्वति च प्र च जुह्वत्यथो ऽआहुर्दर्शपूर्णमासाविति तस्मान्नेष्टियाजुकः स्यात् ॥ ३ ॥ पशुभ्य ऽएकम्प्रायच्छदिति । तत्पयः पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मात्कुमारञ्जातङ्घृतं वैवाग्रे प्रतिलेहयन्ति स्तनं वानुधापयन्ति ॥ ४ ॥ अथ वत्सञ्जातमाहुः । अतृणाद ऽइति तस्मिन्त्सर्वम्प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि हीदꣳ सर्वम्प्रतिष्ठितं यच्च प्राणिति यच्च न ॥ ५ ॥ तद्यदिदमाहुः । सँवत्सरम्पयसा जुह्वदप पुनर्म्मृत्युञ्जयतीति न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्म्मृत्युमपजयत्येवं विद्वान्त्सर्वꣳ हि देवेभ्योऽन्नाद्यम्प्रयच्छति कस्मात्तानि न क्षीयन्तेऽद्य-

मानानि सर्वं वेद ॥ ६ ॥ पुरुषो वा ऽअक्षितिः । स हीदमन्नम्पुनः पुनर्ज्जनयते यो वै तामक्षितिं वेदेति पुरुषो वा ऽअक्षितिः स हीदमन्नन्धिया धिया जनयते कर्म्मभिर्यद्धैतन्न कुर्य्यात्क्षीयेत ह सोऽन्नमत्ति प्प्रतीकेनेति मुखम्प्रतीकम्मुखेनेत्येतत्स देवानपिगच्छति स ऽऊर्ज्जमुपजीवतीति प्प्रशंसा ॥ ७ ॥ त्रीण्यात्मनेऽकुरुतेति । मनो व्वाचम्प्राणन्तान्न्यात्मनेऽकुरुतान्न्यत्रमना ऽअभूवन्नादर्शमन्न्यत्रमना ऽअभूवन्नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति ॥ ८ ॥ कामः सङ्कल्पः । व्विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्द्धीर्भीरित्येतत्सर्वम्मन ऽएव तस्मादपि पृष्ठत ऽउपस्पृष्टो मनसा व्विजानाति ॥ ९ ॥ यः कश्च शब्दो व्वागेव सा । एषा ह्यन्तमायत्तैषा हि न प्प्राणोऽपानो व्व्यान ऽउदानः समानोऽन ऽइत्येतत्सर्वम्प्राण ऽएवैतन्मयो वा ऽअयमात्मा व्वाङ्मयो मनोमयः प्प्राणमयः ॥ १० ॥ त्रयो लोका ऽएत ऽएव । व्वागेवायँल्लोको मनोऽन्तरिक्षलोकः प्प्राणोऽसौ लोकः ॥ ११ ॥ त्रयो व्वेदा ऽएत ऽएव । व्वागेवऽर्ग्वेदो मनो यजुर्वेदः प्प्राणः सामवेदः ॥ १२ ॥ देवाः पितरो मनुष्या ऽएत ऽएव । व्वागेव देवा मनः पितरः प्प्राणो मनुष्याः ॥ १३ ॥ पिता माता प्प्रजैत ऽएव । मन ऽएव पिता व्वाङ्माता प्प्राणः प्प्रजा ॥ १४ ॥ व्विज्ञातं विजिज्ञास्यम् । अविज्ञातमेत ऽएव यत्किञ्च व्विज्ञातं व्वाचस्तद्रूपं व्वाग्घि व्विज्ञाता व्वागेनन्तद्भूत्वावति ॥१५॥ यत्किञ्च विजिज्ञास्यम् । मनसस्तद्रूपम्मनो

भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवः स्वः सर्वन्त्वयि दधामीति ॥ २५ ॥ अथैनमभिमृशति । अश्मा भव परशुर्भव हिरण्यमस्तुतम्भव ॥ आत्मा वै पुत्रनामासि स जीव शरदः शतमिति ॥ २६ ॥ अथास्य मातरमभिमन्त्रयते । इडासि मैत्रावरुणी वीरे वीरमजीजनथाः ॥ सा त्वं वीरवती भव यास्मान्वीरवतोऽकरदिति ॥ २७ ॥ अथैनम्मात्रे प्रदाय स्तनम्प्रयच्छति । 'यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः ॥ येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽक'रिति ॥ २८ ॥ तं वा ऽएतमाहुः । अतिपिता बताभूरतिपितामहो बताभूः परमाम्बत काष्ठाम्प्राप श्रिया यशसा ब्रह्मवर्चसेन य ऽएवंविदो ब्राह्मणस्य पुत्रो जायत ऽइति ॥ २९ ॥ अथ वंशः । तदिदं वयम्भारद्वाजीपुत्राद्भारद्वाजीपुत्रो वात्सीमाण्डवीपुत्राद्वात्सीमाण्डवीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो गार्ग्गीपुत्राद्गार्ग्गीपुत्रः पाराशरीकौण्डिनीपुत्रात्पाराशरीकौण्डिनीपुत्रो गार्ग्गीपुत्राद्गार्ग्गीपुत्रो गार्ग्गीपुत्राद्गार्ग्गीपुत्रो बाडेयीपुत्राद्बाडेयीपुत्रो मौषिकीपुत्रान्मौषिकीपुत्रो हारिकर्णीपुत्राद्धारिकर्णीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पैङ्गीपुत्रात्पैङ्गीपुत्रः शौनकीपुत्राच्छौनकीपुत्रः ॥ ३० ॥ काश्यपीबालाक्यामाठरीपुत्रात् । काश्यपीबालाक्यामाठरीपुत्रः

(१) शु० य० सं० ३८, ५ ।

कौत्सीपुत्रात्कौत्सीपुत्रो बौधीपुत्राद्बौधीपुत्रः शालङ्कायनीपुत्राच्छालङ्कायनीपुत्रो वार्षगणीपुत्राद्वार्षगणीपुत्रो गौतमीपुत्राद्गौतमीपुत्र ऽआत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो वात्सीपुत्राद्वात्सीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्र ऽआर्त्तभागीपुत्रादार्त्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः साङ्कृतीपुत्रात्साङ्कृतीपुत्रः ॥ ३१ ॥ आलम्बीपुत्रात्। आलम्बीपुत्र ऽआलम्बायनीपुत्रादालम्बायनीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः साञ्जीवीपुत्रात्साञ्जीवीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः ॥ ३२ ॥ प्राश्नीपुत्रात्। आसुरिवासिनः प्राश्नीपुत्र ऽआसुरायणादासुरायण ऽआसुरेरासुरिर्याज्ञवल्क्याद्याज्ञवल्क्य ऽउद्दालकादुद्दालकोऽरुणादरुण ऽउपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वावान्बाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो

(१) "बाध्योगाज्जिह्वावा बाध्यो०" इति 'ग' 'ज' पुस्तकयोः।